त्वेन व्याख्या न युक्तेत्याशङ्क्याह * अर्थवत्त्वादिति * प्रवृत्तिविशेषकरत्वोपपत्तित्वद्योतनार्थं तृतीयया युक्त्या प्रागस्य व्याख्येत्याशयः । प्रवृत्तिविशेषकरत्वं व्याचष्टे * विधायकेति * द्रव्यविशिष्टक्रियाविषयप्रवृत्तिहेत्वभिधाने ऽपि विधेयसमर्पणे द्रव्यविशिष्टक्रियानुष्ठाने च यथाक्रमं प्रवृत्तौ विशेष इत्यर्थः । ननु नामधेयत्वे ऽपि संज्ञाविशिष्टे कर्मणि प्रवृत्तेराधिक्यरूपो विशेषो ऽस्तीत्याशङ्क्याह * अन्यथा हीति * विधिविशेषादेव यागविशेषसिद्धेर्नामधेयस्यानतिरिक्तार्थत्वात् । अनुच्चारिते तस्मिन्यावती विधायकादीनां प्रवृत्तिस्तावत्येवोच्चारिते ऽपि स्यादित्यर्थः । उद्भित्पदस्यानुच्चरितस्य प्रवृत्त्ययोगे ऽप्याधिक्याभावं त्रयाणां तुल्यं वक्तुमेषामिति बहुवचनम् प्रसिद्धेर्वार्थवत्त्वोपपत्तित्वसूचनार्थं प्रागर्थवत्त्वव्याख्येत्याह * अथ वेति * प्रसिद्धस्यापि लोष्टादेर्निःप्रयोजनत्वात् प्रसिद्धेः प्रयोजनवत्त्वोपपत्तित्वासम्भवमाशङ्क्याभिधेयवाचित्वेनार्थशब्दव्याख्यानम्मुद्भित्पदस्य गुणे प्रसिद्धत्वात् विधेयगुणसमर्पकस्य सतो ऽर्थवत्त्वमित्यर्थः । अस्मिंस्तु व्याख्याद्वये गुणविधौ हेतुद्वयापत्तेः प्रसिद्ध्यादिभिः पूर्वपक्ष इति श्येनाधिकरणभाष्ये बहुवचनानुपपत्तिप्रसङ्गेनापरितोषाद्धेतुभेदे ऽपि प्रवृत्तिविशेषकरत्वे ऽपि प्रयोजनातिरेकस्यैवोपपत्तित्वं सूचयितुं प्राक् व्याख्येति पारमार्थिकम् । व्युत्क्रमव्याख्याभिप्रायं दर्शयितुमाह * अथ वेति * नन्वेवं पृथगस्य हेतुत्वे अर्थवत्त्वेनैवोद्भित्पदस्य प्रवृत्तिविशेषो दर्शितः । किमपरमस्य प्रवृत्तिविशेषोपन्यासेनेति * आह ततश्चेति * स्वात्मनि क्रियाविरोधादौपचारिकभेदाश्रयणेनोद्भित्पदमात्मनः प्रवृत्तिविशेषकरम्प्रागुक्तमित्यपरितोषादिह विधिपुरुषयोरित्युक्तम् । नामधेयानर्थक्यप्रतिपादकं यदि चेति भाष्यमाक्षिपति * नन्विति * सामधत्ते * नैतदिति * श्लोकं व्याचष्टे * यदेति * किमपरमित्यनेन धातुनैव यागव्यक्तिर्नाम्नाभिधेया ततश्चानर्थक्यमित्येवं सा चेति व्याख्यातम् । अथेत्यनेन जातिश्चेद्धातुनाश्रिता ततः सामानाधिकरण्यात्तन्नामतैव प्रसज्येत सा चानिष्टेत्युत्तरो ऽवयवो व्याख्यातः विशेषस्यान्यतः सिद्धिं

२८३।१ सिद्धान्तिनो ऽप्यभिमतां दर्शयति * सिद्धत्वादेव चेति * विशेषस्यान्यतो ऽसिद्धौ तत्प्रतिपत्त्यर्थं नामधेयस्यावश्यविधेयत्वापत्तेस्तन्निरासो न युज्येत इत्याशयः। ननु विशेषसिद्धेर्नामधेयाधीनत्वे ऽप्यवयवशक्त्यनुसारेणैव कर्मण्यपि प्रवृत्तिसिद्धेः । संज्ञासंज्ञिसम्बन्धविधिनिरासार्थं तद्भाष्यमित्याशङ्क्याह * यदा चेति * संज्ञासंज्ञिसम्बन्धविधिशून्येन लौकिकेनावयवशक्त्यनुसाररूपेणापि प्रका-

रेणोद्भिदादिपदानां विशेषवाचित्वाभ्युपगमे तत एव विशेषसिद्धे-र्धात्वानर्थक्यं प्रसज्येत न च सामान्योक्त्या तस्यार्थवत्त्वं विशेषान्त-र्भावेनैव सामान्यसिद्धेरित्यर्थः। ननु यागविधिवाक्ये गुणस्यापि विधौ गौरवं स्यादित्याशङ्क्याह * लाघवं चेति * हेतुत्रयसङ्कल-नार्थं तत्प्रतिपादकान् भाष्यावयवान् यदि गुणविधिरित्यादिभाष्यो-पेक्षणेन व्याख्यायोपेक्षितं यदीत्यादिभाष्येण तद्व्याचष्टे * यद्येवमि-ति * नेति ब्रूम इति परिहारभाष्यमाक्षेप्तुमवतारयति * अत आहे-ति * आक्षिपति * नन्विति * कर्मविध्यभावे गुणविध्ययोगादवश्यं कस्मिंश्चित् कर्मविधाने ऽभ्युपगन्तव्ये ज्योतिष्टोमवाक्यसन्निधा-वितिकर्त्तव्यतास्नानात् तस्याश्च कर्त्तव्यत्वलिङ्गत्वात् भूयस्त्वेनो-भयश्रुतीत्यनेन न्यायेनास्य कर्मविधित्वं भविष्यतीति समाधत्ते *ग-त्यभावादिति * नन्वेवं सति ज्योतिष्टोमपदस्य का गतिरित्याश-ङ्क्य द्वेधा गतिमाह * तद्व्यावृत्तेचेति * नन्वेवमपि तद्विकार-भूतकर्मान्तराभावात् प्रकृतिशब्दो न युक्त इत्यन्यथाक्षिपति * न-न्वेवमिति * समाधत्ते * सिद्धान्तेति * प्रस्तुताधिकरणसि-द्धान्ते प्रकृतित्वानभिधानादव्यक्तासु तु सोमस्येत्यत्र वक्ष्यमाण-स्य चोद्भिदादियागप्रकृतित्वस्योद्भिदादिशब्दानां गुणविधित्वाभिधा-नविरोधित्वेनानुद्भाव्यत्वादपरितोषेणान्यथा समाधत्ते * अथ वेति * कथं दूरस्थे ज्योतिष्टोमे गुणविधिरित्याशङ्क्य * ताण्डके * ज्योतिष्टोमानन्तरमुद्भिदाद्याम्नानाद् गुणविधित्वेन चासम्बद्धपदा-व्यवायाभावात् सर्वत्र ज्योतिष्टोमस्य प्रकृतत्वोपपत्तेस्तत्र गुणविधि-त्वसम्भवः प्रकृतित्वाभिधानेनोक्त इति भावः। यदा त्वथैष ज्यो-तिरित्यादिवर्ज्जमुदाहरणमिति श्येनाधिकरणवक्ष्यमाणन्यायेन ज्यो-तिरादिशब्दानां गुणविधित्वाशङ्काविषयत्वं नेष्यते तदा तेष्वपि गु-णविध्युपपत्तेर्ज्योतिष्टोममात्रे गुणविधानाभिधानमयुक्तमित्याशङ्क्य प्रकृतौ वा द्विरुक्तत्वादिति न्यायं सूचयितुं तदपेक्षया प्रकृतित्वाभि-धानमित्याह*अथ वेति*अव्यापारस्य व्यापारावच्छेदं विना विधेय-त्वायोगात्तस्य च व्यापारवाच्याख्यातान्वयाधीनत्वात् कारकविभक्तिं च विनाख्यातान्वयायोगात् लोकसिद्धस्यैव च गुणस्य कारकविभक्ति-विनियोज्यत्वात् न स्वरूपज्ञापनार्थप्रातिपदिकार्थप्रधानप्रथमानिर्दिष्ट-स्य विधेयत्वं सम्भवतीत्याशयः। नन्वेवमपि ज्योतिष्टोमपदस्य ना-मधेयत्वं तद्वाक्येन फलसम्बन्धे व्यापृतेनापेक्षितायाः कर्मोत्पत्तेः सोमेन यजेतेत्यनेन करणादुत्पत्तिशिष्टेन सोमेन गुणविधित्वे वा तस्य प्राप्ते कर्मणि गुणफलसम्बन्धरूपानेकार्थविधाने वाक्यभेदा-

पत्तेर्ज्योतिष्टोमवाक्यस्यैव कर्मोत्पादकत्वात् उत्पत्तिशिष्टेन ज्योतिषां द्युतिमतामग्न्यादिद्रव्याणां स्तोमेन समुदायेन ज्योतिष्टोमशब्दावयवशक्त्यनुसारावगतेनावरोधाज्ज्योतिष्टोमे गुणविधानं न युक्तमित्यन्यथाक्षिपति * नन्विति * फलपदानुरोधात् फले गुणविधिप्रतीतेर्ज्योतिष्टोमाश्रितस्य गुणस्य फले विधानं भाष्यकृतोक्तमिति मत्वा तावत्समाधत्ते * काम्यत्वादिति * एवं तावदुद्भिदादिद्रव्येण यागमभिनिर्वर्तयेदिति सन्देहहेतुभाष्यस्योद्भिद्गुणता यागस्येति च पूर्वपक्षभाष्यस्याविहिते च कर्मणि तत्र गुणविधानमनर्थकमित्याशङ्काभाष्यस्य चानुपपत्तिप्रसङ्गात्सर्वकाम्यप्राप्तपश्वादिफलानुवादकत्वेन च फलपदोपपत्तेरपरितोषादन्यथा समाधत्ते * अथ वेति * यद्यपि गुणविशिष्टं विहितं कर्मौत्पत्तिकेन गुणेन नैराकाङ्क्ष्यान्न तद्विरुद्धं वाक्यान्तरोपात्तं गुणान्तरं ग्रहीतुं शक्नोति तथापि यजिना गुणरहितं स्वरूपमात्रं निष्कृष्याकाङ्क्षोत्थापनेन गुणान्तरं विहितं सन्नौत्पत्तिकाद्विशिष्यतइत्यध्याहृत्य यदि तथाशब्दकावपि शब्दावृत्त्या योज्यम् ।

अपि वा नामधेयं स्याद्यदुत्पत्तावपूर्वमविधायकत्वात् ॥ २ ॥

पूर्वसूत्रे श्रुत्यार्थाद्वा गुणविधित्वस्यानुक्तत्वादशाब्दस्य च शाब्दनिराकरणानन्वयात्तन्निरासार्थापि वा शब्दासामञ्जस्यं व्याख्योपेक्षया सूचितं भाष्यकृता त्वाकृत्यधिकरणाद्यसूत्रवन्नामधेयाधिकरणसिद्धान्ताभिधानार्थस्यापि सूत्रस्यावृत्त्या ततश्चान्यथाक्रियार्थत्वासम्भवात्पारिशेष्याद् गुणविधिरित्यध्याहारेणैतदधिकरणपूर्वपक्षेऽपि योजना शक्येति मत्वा तन्निरासार्थत्वेनापि वाशब्दो व्याख्यातः । यथा सर्वमुद्भिच्चित्रादिनामधेयमपि क्रियार्थं स्यादित्युक्ते नामधेयस्य विध्युद्देशान्तर्गतत्वेन श्रुतिस्मृत्यर्थत्वायोगात् प्रवृत्तिविशेषकरत्वाभावेन च विध्युद्देशेऽनुपयोगादानर्थक्यं स्यादित्याशङ्कामुपस्थितां निराकर्त्तुमपि वा नामधेयं स्यादिति सूत्रावयवः शेषं तु यौगिकानां कर्मसामानाधिकरण्यनिर्दिष्टानां गुणविधिनामधेयत्वविचारे सिद्धान्ताभिधानार्थमिति व्याख्येयम् । एतदेव व्याख्यानमभिप्रेत्य यदा तदर्थत्रयान्यतमार्थमिति स्थितं तदा विचार इत्याद्यधिकरणशेषभूतं विचारान्तरं कृतम् । आद्याधिकरणशेषत्वाच्चास्य विचारस्य द्वयोरधिकरणयोरित्यविरुद्धं तस्मान्नामधेयमपि क्रि-

यार्थमेव स्यादिति पूर्वसूत्रगततदर्थशब्दानुषङ्गेणैव शब्दार्थे वाशब्दाङ्गीकारेण चाद्याधिकरणशेषतया व्याख्यानस्य स्पष्टत्वात् एतदधिकरणशेषत्वाभावाच्चाव्याख्यानमिति सर्वं समञ्जसं यदुत्पत्तावपूर्वमिति सूत्रावयवमधिकरणविषया ऽभिधानार्थतया तावत्स्वयं व्याचष्टे * यदुत्पत्ताविताति * प्रथमेत्यनेनोत्पत्तिशब्दस्य सामा- २८४।३
नाधिकरण्यप्रागभाववाचितया व्याख्यानाद्व्यधिकरणनिर्दिष्टेष्वाग्निहोत्रादिशब्देषु तत्प्रागभावविशेषणानर्थक्यात् अग्निहोत्रादिशब्दव्यावर्त्तकत्वं सूचितम्। अर्थान्तरेत्यनेनापूर्वशब्दस्यार्थान्तरानिरूढचित्रादिशब्दव्यावर्त्तकत्वं सूचितम्। सामानाधिकरण्यात् प्रागर्थविशेषा ऽनिश्चयोक्त्या सामानाधिकरण्यस्य नामधेयत्वनिश्चायकत्वं सूचितमिति दर्शयितुम् * सामानाधिकरण्यादित्युक्तम् * भाष्यकृता तु यस्माच्छब्दार्थे यदित्यव्ययमभिप्रेत्यापूर्वशब्दो नामधेयत्वहेतुप्रतिपादनार्थत्वेनैवमिति भाष्येण व्याख्यातः तदनुसन्धत्ते *अथ वेति * नामधेयत्वस्य सामानाधिकरण्येनैव यागविषयत्वनिश्चयात्तदनाश्रयणे वा नामधेयत्वस्यैवायोगाद् द्रव्यनामत्वे च द्रव्यस्य विधेयत्वापत्तेर्गुणविधिप्रतियोगिनो नामधेयशब्दस्य प्रधानकर्मनामधेयविषयत्वावगमात्कस्य नामधेयमिति सन्देहानुपपत्तेरपूर्वनिष्पादकत्वस्य च नामधेयनिमित्तत्वाभावाद्धोमादिसाधारण्याच्चोपलक्षणात्वानुपपत्तेरनभिमतमपि व्याख्यानान्तरं विभवार्थमाह * अथ वेति * अविधायकत्वादिति सूत्रावयवं स्वव्याख्याने हेत्वभिधानार्थत्वेनावतारणपूर्वकं व्याचष्टे * किं कारणमिति * नामधेयत्वे प्रतिज्ञाते गुणविधित्वनिराकरणहेत्वभिधानेनाद्याधिकरणसिद्धं नामधेयत्वानां सर्वेषां गुणविधिमात्रशङ्कानिराकरणार्थान्युत्तराधिकरणानीति सूचितम्। कथं न युज्यतइत्यपेक्षायां फले तावद् गुणविधौ पञ्चदोषानाह * फलमिति * यजिपरेणाख्यातेनोद्भिदा पशून्भावयेदिति परपदयोः सम्बन्धविधानम् उद्भिदा यजेत पशुकाम इति च व्यवधानेनाम्नातयोः सम्बन्धकल्पना धातोर्विध्यनुपयोगित्वेन प्रत्ययानुग्रहमात्रार्थत्वात् पारार्थ्यं काम्यत्वाच्च नित्यस्य सोमेन यजेतेत्युत्पत्तिवाक्यविशिष्टस्य सोमस्य बाधः कुशरादिवच्च यागसाधनत्वेनाप्रसिद्धेनाभक्षेण याग इत्यर्थः।ज्योतिष्टोममात्रे गुणविधौ फलपदानर्थक्यं सोमेन सह विकल्प इति द्वौ दोषौ फलविशिष्टे तु ज्योतिष्टोमे गुणविधौ वाक्यभेदः सामान्यशिष्टस्य च सोमस्य विशेषशिष्टेन खनित्रादिना बाध इति द्वौ दोषौ परपदार्थविधानात् प्रत्ययव्यापारस्य विप्रकर्षः। धात्वर्थे च गुणविधानात् धातोः पारार्थ्यं अभक्ष्येण च

याग इति दोषत्रयम् । द्वयोस्तुल्यमिति द्वेधा यागे गुणविधिं विकल्प्य पञ्चदोषानाह * तथेति * विशिष्टविधावपि विशिष्टस्यापदार्थत्वेन सर्वेषां नामधात्वाख्यातानां तत्समर्पणार्थत्वात् पारार्थ्ये विशेषणविधिं च विना विशिष्टविध्ययोगादनेकविधिशक्तिकल्पना उद्भिच्छब्दस्य च द्रव्यविशिष्टयागपरत्वान्मत्वर्थलक्षणाविधिसामर्थ्याच्च तृतीयान्तधात्वर्थावगतेस्तुल्यविभक्तित्वेनावगम्यमानस्यैकार्थवृत्तित्वस्य त्यागो ऽभक्ष्ययागश्चेति पञ्चदोषानाह * तथेति * उपसंहरति * तस्मादिति * एतच्च नामधेयत्वसिद्ध्यर्थं गुणविधित्वनिराकरणं भाष्यकृतापि मत्वर्थलक्षणादोषोपन्यासेन कृतत्वान्नास्माकमसम्बद्धाभिधायितामापादयतीत्याह * तदिति * श्रुतिश्चेति भाष्येण सौत्रमुत्पत्त्याख्याद्यभावविकारगतप्राथम्यलक्षणगुणयोगेन श्रुतिवृत्तिपरं व्याख्याय तद्व्यतिरेकप्रतिपादनार्थत्वेन गुणविधौ मत्वर्थलक्षणोपन्यासान्नामधेयत्वोपपादनार्थेनोत्पत्तिशब्देनैवार्थाद् गुणविधौ मत्वर्थलक्षणोक्तेति सूचितमिति न भाष्यस्याप्युत्सूत्रभिधानोपालम्भः विधानायोद्भिदादिश्रुतिः खनित्रादीन् वक्ष्यति यजिसामानाधिकरण्यार्थं च तद्वतो यागान् लक्षयेदिति युगपत् श्रुतिलक्षणापत्तिरित्यर्थः । एवं त्वाख्यातद्वयान्वयार्थं चकाराध्याहारापत्तेः शत्रन्तं पाठान्तरमुक्तं यागेनेत्यादि भाष्यस्य श्रुतिश्चेत्यादिना सह पौनरुक्त्यमाशङ्क्य विवेकमाह * प्रातिपदिकेति * समुच्चयवाचिचशब्दाभावात् युक्त्यन्तरत्वं न युक्तमित्याशङ्क्य किं च शब्दाध्याहारेण यागेन कुर्य्यादिति व्याचष्टे * किं चेति * ननु यागानुवादेनात्र गुणविधानस्य पूर्वपक्षत्वाद् गुणविधौ च तस्य साध्यत्वेनानुवादान्न करणतेत्याशङ्क्य *अनुवादे वे त्युक्तम्* अनुवादो ऽप्यपूर्वसाधनांशे गुणं विधातुं यद्यागेन कुर्यादित्येवमेव स्यादित्याशयः । नन्विति-भाष्येणोद्भिच्छब्दस्यावयवव्युत्पत्त्योदूर्ध्वविदारणसमर्थद्रव्यवाचित्वप्रसिद्धेस्तत्त्यागेनाप्रसिद्धकर्मवाचित्वकल्पना निष्प्रमाणिका तृतीयानिर्देशस्य व्रीह्यादिषु कर्मवाचित्वाभावे ऽपि दर्शनेन साधकत्वादित्याशङ्क्योच्यतइत्यनेन कोकिलः पिक इत्यादौ लोके प्रसिद्धसामानाधिकरण्येनाप्रसिद्धार्थनिर्णयदर्शनाद् व्रीह्यादिवच्च बाधकबलाद्विपरीतप्रसिद्ध्यभावात् तृतीयानिर्देशो ऽप्यत्र प्रमाणमेवेत्यभिप्रायेण परिहारमुक्त्वा कथं तृतीयानिर्देशात्कर्मवाचितावगम्यतइति
२८५।२ पृष्टे करणवाचिनो हीत्युत्तरं दत्तं तदाक्षिपत्ति * यदिति * इह गुणमरुणिमानममूर्त्तं सन्तं क्रियायाः करणमिति शब्द आह यत्करणाभिधायिन्या तृतीयया विभक्त्या संयुज्य निर्दिशत्यरुणयेत्या-

दिभाष्यान्तरविरुद्धं प्रातिपदिकस्य करणवाचित्वाभिधानमित्यर्थः। करणशक्त्यधिष्ठानलक्षणार्थो ऽयं करणशब्द इति परिहरति * नैष इति * करणशब्दार्थविषयो चायं करणशब्द इति परिहारान्तरमाह * अथ वेति * करणशब्दवदुद्भित्प्रातिपदिकस्य करणशक्तिविशिष्टद्रव्यानभिधायित्वाद्यादृशतादृशशब्दौ द्रव्यरूपत्वमात्राभिप्रायौ व्याख्येयौ करणशब्दो यादृशरूपमर्थं ब्रवीति तादृशस्य द्रव्यरूपस्य प्रातिपदिकं वाचकमित्यर्थः। ननु करणशब्दे ऽपि करोतिना क्रियाभिधानात् ल्युटा च करणशक्त्यभिधानात् न द्रव्यवाचितास्तीत्याशङ्क्याह * कृदन्तेनेति * द्रव्योपसर्जनत्वेन करणशक्तिर्ल्युटोच्यते न तृतीयावन्निष्कृष्येत्यर्थः। एतदेवोपपादयति * तथा चेति * कथं कारकान्तरयोगमात्रेणाप्राधान्यं करणशक्तेरित्यपेक्षायामाह * अन्यथा हीति * कारकप्राधान्येन तदुपसर्जनत्वात् द्रव्यस्यैकेन कारकेण वशीकाराद्यथा घटमानयेति कर्मकारकेण वशीकृतस्य घटस्य घटेनेत्यादिपदान्तरोपात्तेनापि द्रव्यस्य कारकान्तरेण योगो न भवति तथा ल्युट्प्रत्ययोपात्तं करणकारकं प्रत्युपसर्ज्जनस्य करणशब्दवाच्यस्यापि द्रव्यस्य कारकान्तरयोगो न स्यादित्यर्थः। ननु द्रव्योपसर्जनत्वात् कारकान्तरयोगासम्भवे ऽपि ल्युट्प्रत्ययोक्तस्य करणकारकस्यैव कारकान्तरयोगो भविष्यतीत्याशङ्क्याह * शक्तेस्त्विति * कारकं हि शक्तिस्तस्याश्च प्रतिकार्यं व्यवस्थिताया एव कल्पितत्वात् न व्यवस्थासिद्धये शक्त्यन्तरकल्पना युक्तेत्याशयः। एतमेव परिहारमुपसंहरति * तस्मादिति * शक्तिरुपसर्ज्जनमस्येति विग्रहः। एतदेव भाष्यं व्याचष्टे * तेनेति* तृतीयानिर्देशाभावात्कथं यागस्य करणतेत्याशङ्क्य भावार्थाधिकरणवक्ष्यमाणतोक्ता नैतद्युक्तमित्याशङ्काभाष्यं तात्पर्यतो व्याचष्टे * ननु चेति * करणभूतयागैकवाक्यत्वविशिष्टतृतीयान्तत्वस्य हेतोर्यागवाचित्वे साध्ये नैकान्तिकत्वप्रदर्शनार्थत्वेन व्रीहिसोमवदिति दृष्टान्तं व्याचष्टे * यथैवेति * कर्तृव्यापारव्याप्याधीनत्वात्करणत्वस्य तदाक्षिप्तकर्तृव्यापारव्याप्यत्वरूपानीप्सितकर्मत्वापेक्षया व्रीह्यादिशब्दानां यजिना सह वैय्यधिकरण्ये भिन्नार्थत्वे ऽपि यथा करणभूतयागैकवाक्यत्वविशिष्टं तृतीयान्तत्वमविरुद्धमेवमत्रापीत्यर्थः। हठशब्दं व्याचष्टे * हठ इति * ननूद्भिच्छब्दस्य यागवाचित्वं लौकिकाप्रसिद्धमपि अत्र नैव वाक्येन विधास्यतइत्याशङ्कानिरासार्थमपि चेति भाष्यं स्पष्टत्वान्न व्याख्यातं नोद्भिच्छब्दस्याप्रसिद्धमेव यागनामधेयत्वं करणभूतयागैकवाक्यत्व-

विशिष्टतृतीयान्तत्वेनाज्ञातं ज्ञाप्यते किं तु द्रव्ये यागे वावयवव्युत्पत्तितुल्यत्वात्सन्देहे सति सामानाधिकरण्येन लोकनिर्णयोपायेन निर्णीयतइति परिहाराभिधानार्थं न नामधेयं विधायिष्यतइति भाष्यमर्थतो व्याचष्टे * तदुच्यतइति * उद्भिच्छब्दस्यावयवव्युत्पत्त्यपर्यालोचने द्रव्यवाचित्वस्याप्यज्ञानात् पर्यालोचने वा सन्देहादुभयोपादाने ऽपि कादिपदमर्थविशेषवाचित्वेनाज्ञातं सन्दिग्धं चाक्षादिपदं कोकिलः पिको ऽधिदेवनो ऽक्ष इत्यर्थविशेषवाचित्वेन प्रसिद्धेरपृथक्श्रुतिसामानाधिकरण्यनिर्दिष्टं सदर्थविशेषवाचित्वेन निर्णीयमानं लोके दृष्टमित्युद्भिदादिपदमपि तथा निर्णीयते। यत्त्वर्थविशेषवाचित्वेन निरूढं नियतं तत्प्रसिद्धिपदसामानाधिकरण्ये ऽपि स्वार्थान्नापनीयतइत्यर्थः । अनेन चानिरूढत्वविशेषणाद्धेतोरपि व्यभिचारः परि-
२८६।२ हृतः । श्लोकं व्याचष्टे * व्रीह्यादयो हीति * ननूद्भिच्छब्दस्य स्मृत्यनुसारेणोदूर्ध्वं विदारणसमर्थद्रव्यवाचित्वावधारणात् प्रकाशनार्थत्वे तु स्मृत्यभावादतुल्यत्वेन सन्देहाभावात् कथं सामानाधिकरण्यान्निर्णय इत्याशङ्क्याह * प्रधानं चेति * किमुद्भित्प्रातिपदिकस्यावयवार्थानुसारात् द्रव्यवाचितास्तु तृतीयानुसाराद्वा यागवाचितेति सन्देहे ऽवयवार्थस्य गुणत्वात् तद्बाधेन प्रधानभूततृतीयार्थानुसाराद्यागवाचितैव न्याय्येत्याशयः * अपि चेति * भाष्योक्तवाक्यभेदाशङ्कानिरासार्थमध्ये तदेवं भाष्यम् उद्भित्सञ्ज्ञकेन यागेन पशून्भावयेदित्येवं नामधेयस्यापि यज्यर्थविशेषणत्वेन विधेयत्वात् अयुक्तमाशङ्क्य धूम एवाग्नेर्दिवा ददृशे नार्चिचरितिवद्यथा गुणविधौ बहुविधानं नैवं नामधेयपक्षे ऽस्तीत्यौपचारिकार्थत्वेन व्याचष्टे *किं चेति * शङ्कान्तरनिरासार्थं भाष्यावृत्तिसूचनार्थः किंचशब्दः यश्च नामधेयपक्षे वाक्यभेदः शङ्कितः सो ऽप्ययुक्तः प्रत्युत तस्मिन्नेव पक्षे विधिलाघवेन गुणविधिपक्षवद् गौरवलक्षणवाक्यभेदाभावान्नामधेयविशिष्टयागभावनारूपैकार्थविधेश्चावृत्तिलक्षणवाक्यभेदस्यानाशङ्क्यत्वादित्यर्थः । ननु यथा नामधेयपक्षे प्रातिपदिकस्य यज्यर्थविशेषकत्वेन विधिसम्बन्धे सत्याख्यातावगतयोः संख्याकारकयोर्विभक्त्यानुवादोपपत्तेर्लाघवं तथा गुणविधिपक्षे ऽपि यागोद्देशेन विहितस्य द्रव्यस्य योग्यतया करणत्वावगमात् प्राथम्येन चैकत्वावगतेरनुवादो भविष्यतीत्याशङ्क्याह * त्वत्पक्षे हीति * कारकान्वयं विना प्रातिपदिकार्थस्य क्रियान्वयासम्भवेन विधेयत्वायोग्यत्वात् श्रुतायाश्च संख्यायाः कारकाङ्गत्वाभावात् तत्रैकत्वमयज्ञाङ्गभूतमित्यनेन न्यायेनाविवक्षापत्तेः प्रातिपदिकार्थैकत्वविशिष्टं करणत्वमेव

गुणपक्षे विधेयं स्यादित्याशयः । ननूद्भिच्छब्दस्य भाष्यकारोक्ते प्रकाशने स्मृत्यभावात् कर्मणश्चाप्रकाशकत्वात् अवयवद्वारेणापि कर्मण्यप्रसिद्धेर्नामधेयत्वायोगात् अगत्या गौरवाश्रवणमदोषमित्याशङ्क्याह * तस्मादिति * उक्तेन यजिसामानाधिकरण्यप्रधानानुरोधवृत्तिविधिलाघवलक्षणेन हेतुत्रयेण कर्मनामधेयत्वावधारणे प्रवृत्तिनिमित्तं विना तदनिर्वाहाद्यथासम्भवे कस्मिंश्चिन्निमित्ते नामधेयत्वनिर्वाहायान्विष्यमाणे भूविदारणस्य भूनिखातनिध्यादिप्रकाशनहेतुत्वाद्भिदारणवाचिनो भिदेर्लक्षणया तत्कार्ये प्रकाशने प्रवृत्त्युपपत्तेरज्ञाते च वस्तुनि केन चित्प्रकाशिते ऽनेनेदमुद्भेदितामिति प्रयोगदर्शनादुत्पादकस्य च कर्मणः प्रकाशनहेतूत्पत्तिकारणत्वेनोपचारात्प्रकाशकत्वव्यपदेशोपपत्तेर्युक्ता पशुप्रकाशनस्योद्भिच्छब्दप्रवृत्तिनिमित्ततेत्याशयः । या भाष्यकृतावयवद्वारेण कर्मण्यपि प्रसिद्धिरुक्ता सा तस्मादनन्तरोक्ताद्धेतुत्रयान्नामधेयत्वावधारणे सति तदन्यथानुपपत्तिलभ्यत्वादप्युपपन्नेति योज्यम् । न च सुराणां वै बलस्तमसा प्रावृतो स्माभिधानमासीत्तस्मिन् गव्यं वस्त्वन्तरासीत् तं देवा नाशक्नुवन् भेत्तुं ते ततो बृहस्पतिमब्रुवन्निमान्न उत्सृजेति स उद्भिदेव बलं व्यच्यावयत्तं बलभिदाभिनदित्यन्वाख्यानावगतगोयुक्तबिलविवरापरपर्यायबलच्यावनद्वारस्य तद्भिदारणद्वारस्य वा पशुप्रकाशनस्य निष्प्रमाणकत्वात् मुख्यवृत्त्योद्भिदूबलभिच्छब्दप्रवृत्तिनिमित्तत्वानुपपत्तेः पशुकामपदावगतपश्वाख्यफलोत्पादनं लक्षणयोद्भिदूबलभिच्छब्दप्रवृत्तिनिमित्तं वाच्यं तस्य च ज्योतिष्टोमादावपि तुल्यत्वेनातिप्रसङ्गापत्तेर्नोद्भिदूबलभिच्छब्दप्रवृत्तिनिमित्तत्वं सम्भवतीत्याशङ्कते * ज्योतिष्टोमादेरिति * समुदायशक्त्यैव यागविशेषवाचित्वात् नातिप्रसङ्ग इति परिहरति * नेति * सामानाधिकरण्येनैवावधारितैतद्वाक्यविहितयागाख्यविषयविशेषस्योद्भिच्छब्दस्य गवादिशब्दवद्व्युत्पत्तिनिमित्तमात्रत्वेनावयवान्वाख्यानादित्यर्थः । सम्बन्धस्याशास्त्रहेतुत्वाद्वैदिकसामानाधिकरण्यरूपप्रयोगमात्रेण समुदायशक्तिकल्पनानुपपत्तेर्न व्युत्पत्तिनिमित्तमात्रता फलोद्भेदनस्य युक्तेत्यपरितोषात्परिहारान्तरमाह * अथ वेति * यथा पङ्कजशब्दस्य विशिष्टविषयप्रयोगान्यथानुपपत्त्या पद्मत्वैकार्थसमवेतपङ्कजननविशेषनिमित्तत्वावधारणात् व्यवस्था तथोद्भिच्छब्दस्याप्येतद्यागगतोद्भेदनविशेषनिमित्तत्वावधारणाद्व्यवस्थेत्यर्थः । गोशब्दस्य जातिनिमित्तस्यापि व्याकरणे ऽवयवान्वाख्यानात् दृष्टान्तत्वेनोपादानम् । ननु यद्यत्र भाष्ये कर्मण्यप्युद्भिच्छब्दस्य प्रसिद्धिः

सामानाधिकरण्याधीननिर्णयोपपादनार्थं विवक्षिता ततो न नामधेयं विधायिष्यतइति किमर्थमुक्तमित्याशङ्क्याह * अविधायकत्वादिति * नैतद्युक्तमित्यादिभाष्योक्तामप्रसिद्धकल्पनाशङ्कामनेन सूत्रावयवेन निरस्तां दर्शयितुमेव मुक्तमित्याशयः । यदि तु तदुच्यतइत्यादिना स्वयमाशङ्कापरिहारमुक्त्वा इदानीमेवैतद्भाष्यमेतत्सूत्रावयवव्याख्यानार्थत्वेन व्याख्यायते ततः स्वयमुद्घाटितशङ्कापरिहारानभिधानात् भाष्यकृतः शून्यहृदयतापद्येतात एव टुप्टिकायामेतद्भाष्यव्याख्यानार्थं क्रियायोगेन प्राप्तत्वादिति द्वयोरपि परिहारावित्युक्तम् । वाक्यभेदशङ्कापरिहारे मुख्यवृत्त्यैतद्भाष्यं योजयितुमाह* सञ्ज्ञेति * यदि हि यागेन पशून्भावयेत्तस्य च यागस्योद्भित्सञ्ज्ञेति साध्यसाधनसम्बन्धसञ्ज्ञासञ्ज्ञिसम्बन्धरूपौ द्वावर्थौ विधीयेतां ततो वाक्यभेदः स्यात् सञ्ज्ञासञ्ज्ञिसम्बन्धस्य त्वननुष्ठेयत्वेन सामानाधिकरण्यावयवप्रसिद्धिभ्यामेव च सिद्धेरविधेयत्वान्न वाक्यभेदापत्तिरित्यर्थः । नन्वविधेयत्वे नामधेयस्य विध्युद्देशान्तर्भावो न स्यादित्याशङ्क्याह * नन्विति * नामधेयस्वरूपाविधानेऽप्युद्भित्सञ्ज्ञकेन यागेन पशून् भावयेदिति तदर्थविधानाद्विध्युद्देशान्तर्भावोपपत्तिरित्याशयः। ननु विहितविधानासम्भवेनैतद्विधिविहितस्य यागस्य विध्यन्तरयागेभ्यो भेदावगमाद्धातुत एवानुष्ठेयत्वयोग्ययागविशेषसिद्धेरनर्थको नामधेयार्थविधिरित्याशङ्क्याह *तदधीनत्वात्वादिति * अप्रवृत्तप्रवर्त्तनात्मकविधिविषयत्वान्यथानुपपत्तिपर्यालोचनया धातोर्यागविशेषपरत्वावगमेऽपि कोऽसौ यागविशेष इति निर्द्धारणस्य स्वरूपोक्तिमन्तरेणाशक्यत्वाद् द्रव्यदेवतस्य चेहाश्रवणात् नामधेयार्थविधानधीनैव निर्द्धारितविशेषसिद्धिरित्याशयः। नन्विह सामानाधिकरण्येन विशेषणविशेष्यभावस्येष्टत्वात्तस्य च भिन्नप्रवृत्तिनिमित्तैकार्थवृत्तित्वलक्षणस्य संज्ञासंज्ञिनोरसम्भवात्तुल्यविभक्तिकनिर्देशमात्रस्य सामानाधिकरण्यस्य तु गौरश्व इतिवत् विशेषणविशेष्यभावानापादकत्वात्कथं संज्ञया संज्ञिविशेषसिद्धिरित्याशङ्क्याह *इह हीति* सामानाधिकरण्याभावेऽपीह विशेषणविशेष्यभावान्न भेदो नान्यथात्वं किं तु विशेषणविशेष्यभाव एवेति भावे लकारः कथमित्यपेक्षायामात्मरूपेत्युक्तम् । अर्थद्वारे विशेषणविशेष्यभावे भिन्नप्रवृत्तिनिमित्तैकार्थवृत्तित्वलक्षणसामानाधिकरण्यापेक्षा संज्ञायास्तु स्वरूपेणैव संज्ञान्तरविशेषात्स्वविषयव्यावर्त्तकत्वान्नैवं रूपसामानाधिकरण्यापेक्षेत्याशयः । ननु संज्ञयात्मविशिष्टयागाभिधाने विशेषणत्वादात्माप्यभिधीयेतेत्याशङ्कते * नन्विति *

२८७।१

प्रमाणान्तरावगतस्यापि काकनिलयानादिवद्व्यावर्त्तकत्वोपपत्तेर्नात्माभिधानापत्तिरिति परिहरति * प्रत्यक्षेति * कथं तर्हि जातिविशिष्टव्यक्त्यभिधाने जात्यभिधानापत्तिरित्याशङ्क्याह * सर्वत्रेति * शाब्दे हि व्यवहारे जातेः प्रत्यक्षेणाग्रहणात् अभिधानापत्तिरिति भावः। ननु संज्ञाया विशेषणत्वे स्वानुरक्तबुद्धिजनकत्वलक्षणत्वात्तस्य स्वरूपस्य संज्ञिन्यारोपापत्तिरित्याशङ्क्याह * न चेति * यथांशविशेषा गोत्वादयो ऽर्थे[1] वस्तुनि न विद्यन्ते ततो गवादिशब्दस्यैव स्वानुरूपबुद्धिजनकत्वेनार्थे ऽध्यासः स्यात्तेषां तु विद्यमानानामेव गवादिशब्दैरुद्धरणमात्रं निष्कर्षमात्रं क्रियते इत्यनन्तधर्मके धर्मिण्येकधर्मावधारणे शब्दो ऽभ्युपायमात्रं स्यान्नात्माध्यारोपकारणमित्यत्र प्रत्यक्षसूत्रे ऽभिहितमित्यर्थः। स्वानुरूपबुद्धिजननं विना कथं शब्देनांशविशेषोद्धरणमित्याशङ्क्य तदनुवेधेनेत्युक्तम्। एतच्छब्दवाच्यो ऽयमित्यवधारिते यस्तेन शब्देनानुबन्धः स्ववाच्यस्य शब्दान्तरवाच्येभ्यो व्यवच्छेदस्तेनेत्यर्थः। एवं तावद्यत्राप्यनन्यपरविधिपुनःश्रवणान्यथानुपपत्त्या विध्यन्तराविहितेभ्यो यागेभ्यः स्वविषयस्य भेदसिद्धिस्तत्रापि निर्द्धारितरूपविशेषप्रतीतिर्नामधेयाधीनेत्युक्तम्। उद्भिदादिवाक्ये तु विधिपुनःश्रवणस्य फलाद्यर्थत्वसम्भवेनाभेदकत्वादनुपादेयसम्बन्धसहकृता सन्निधिलक्षणेन च प्रकरणान्तरेण दूरस्थेभ्यो भेदावगमे ऽपि प्रकृताद्व्यवधायकाभावेन सन्निहिताज्ज्योतिष्टोमान्नामधेयं विना भेदासिद्धेर्नामधेया ऽर्थो ऽवश्यं विधेय इत्याह * नाम्नैवेति * भेदं विना प्रकृतिविकारभावायोगाद्विशेषणानर्थक्यापत्तेश्च प्रकृतौ ज्योतिष्टोमे इति भाष्यगतप्रकृतिशब्दवदयमपि प्रक्रियतइति व्युत्पत्त्या प्रकृतवचनः। यद्वा देवतोद्देशपूर्वकद्रव्यत्यागरूपत्वं निमित्तीकृत्य यजिप्रवृत्तेः पशूद्भेदनहेतुत्वं च निमित्तीकृत्योद्भिच्छब्दप्रवृत्तेर्भिन्नप्रवृत्तिनिमित्तैकार्थवृत्तित्वलक्षणसामानाधिकरण्यनिबन्धनैव विशेषणविशेष्यता सम्भवतीत्याह * अथ वेति * यथारुणैकहायन्यादौ सामानाधिकरण्यनिबन्धनाविशेषणविशेष्यता तद्वदेवात्रापीत्यर्थः एतच्च यजेत पशुकाम इत्येतावतासिद्धत्वात्पशूद्भेदनहेतुना यागेन पशून् भावयेदिति नामधेयार्थविध्यानर्थक्यापत्तेः प्रौढिमात्रेणोक्तम्[2]। एवमाकृतेरविधेयत्वादिति पूर्वपक्षवार्त्तिकोक्तं नामधेयानर्थक्यं परिहृत्य यदा च लौकिकेनापि प्रकारेणेत्यनेनोक्तम्। नामधेयार्थविधौ यज्यानर्थक्यं प-

१ ह्यर्थे इ० २ पु० पा०।
२ येत्युक्तमिति २ पु० पा०।

रिहरति * न चेति * अवयवव्युत्पत्तिपर्यालोचनयोद्भिच्छब्दस्यान्योत्पादानुकूलस्वभावविध्यन्तरविहितकर्मव्यावृत्तकर्मविशेषनामत्वावगमे ऽपि यागरूपता कर्मणो यज्यधीनेति दर्शयितुं यागशब्दः । नचैवं सतीतरेतराश्रयत्वं शङ्कनीयं परस्परसन्निधानलभ्यत्वेनान्योन्यनियमस्यैकैकाधीनत्वानभ्युपगमादित्याह * परस्परेति * ननु विधानायोग्यत्वेनैव सामान्यव्यावृत्तिसिद्धेर्न तदर्थं नामधेयसन्निधानापेक्षा इत्याशङ्क्य प्रकृतस्यैव फलाद्यर्थं पुनःश्रुत्युपपत्तेर्न तद्व्यावृत्तिर्नाम्ना विना सिध्यतीति दर्शयितुं प्रकृतौ वेत्युक्तम् । एतदेवोपसंहरति * तस्मादिति * ननूभयविधाने वाक्यभेदापत्तेर्नामधेयस्यानुवादताङ्गीकार्येत्याशङ्क्याह * विशिष्टेति * वाक्यभेदं विनाप्युभयविध्युपपत्तेर्न तद्भयेनानुवादताभ्युपगन्तव्येत्यर्थः । नामधेयार्थस्य विधेयत्वे नामधेयत्वस्य गुणविधिप्रतियोगित्वे ऽपि विधित्वमात्रप्रतियोगित्वाभावात् तद्भयेन परेषां विध्यादित्रयातिरेकवर्णनमयुक्तमेवेत्याह * एवमिति * यस्त्वित्यादिभाष्येणोद्भिदादिशब्दो नामधेयत्वे सत्यप्रवृत्तिविशेषकरत्वादनर्थकः स्यादिति पूर्वपक्षोक्तं नामधेयानर्थक्यमनुभाष्य गुणफलोपबन्धेनार्थवत्त्वमुक्तं तस्योपलक्षणार्थत्वं दर्शयितुमाह * अशेपेति *

संज्ञायाः कर्मभेतृत्वं द्वितीये यद्वदिष्यते ।
यच्चेष्टौ यागषट्कस्य फलवत्त्वं वदिष्यते ॥
सोमयागस्य च ज्योतिष्टोमे ऽध्याये चतुर्थके ।
यश्चाग्निहोत्रधर्माणां प्रवेशः कौण्डपायिने ॥
सप्तमे वक्ष्यते सर्वं तन्नाम्ना फलमिष्यते ।
वाक्यान्तरोत्पादिते च कर्मण्यङ्गं विधीयते ॥
फलं वा यत्र तत्रास्मान्नर्ते कर्मविशेषधीः ।
द्रव्यदेवतशून्यायां यागोत्पत्तौ च नामतः ॥
विना निर्द्धारणाभावाद्विशेषस्याविधेयता ।
धर्मप्रमोपयोगित्वमप्यस्येत्थं च सिध्यति ॥
यागेनानेन यक्ष्ये ऽहं तेन याजय मामिति ।
नाम्ना विनैवमादिश्च व्यवहारो न सिध्यति ॥
मीमांसाविधिवाक्यार्थज्ञानानुष्ठानलक्षणे ।
त्रिविधे व्यवहारे ऽस्मिन्सर्वस्मिन्नामकारणम् ॥

ननु विधायकवाक्यनिर्देशेनाप्यर्त्विग्वरणादिषु यागविशेषाख्यानसिद्धेः कथं नाम्नामशेषव्यवहाराङ्गतेत्याशङ्क्याह * न हीति * विधिवाक्यं पठित्वानेन विहितो यो याग इत्याख्याने गौरवापत्तेर्ना-

मधेयादन्यो लघुराख्यानोपायो नास्तीत्यध्याहारेण योज्यम् । भा- २९८।
ष्याभिप्रेतमर्थमुक्त्वा स्वरूपतो व्याचष्टे * दर्शपूर्णमासाविति * तस्मादित्युपसंहारभाष्यं व्याचष्टे * तस्मादिति * एवं जातीयकशब्देन सौत्रोत्पत्तिशब्दसूचितं सामानाधिकरण्यनिर्दिष्टत्वम् अपूर्वशब्दसूचितं च यौगिकत्वं विवक्षितम् ॥ १ ॥

॥ चित्रादिशब्दानां यागनामताधिकरणम् ॥ २ ॥

## यस्मिन् गुणोपदेशः प्रधानतोऽभिसम्बन्धः ॥३॥

इत्युदाहरणमितीतिकरणेन भाष्यकृता गुणविधौ प्रसजद्वाक्यभेदानां वाक्यानामुदाहरणत्वं यस्मिन् गुणविधौ प्रसजद्वाक्यभेदानां वाक्यानामुदाहरणत्वं यस्मिन् गुणोपदेश इति सूत्रावयवसूचितं दर्शितं तदिहापि कर्मसामानाधिकरण्येनैव गुणविधित्वनिरासिद्धेः । कारणान्तरोपन्यासानर्थक्यात् अयुक्तमाशङ्क्य सामानाधिकरण्यहेतुकानिर्णयाविषयत्वं दर्शयितुमाह * इदानीमिति * अयौगिकशब्दव्याख्यानार्थं लोकरूढेष्वित्युक्तं कस्मिन्नर्थे लोके रूढा इत्यपेक्षायां जातीत्युक्तम् । आज्यशब्दो घृतजातौ रूढः पृष्ठशब्दः शरीरावयवजातौ चित्राशब्दो गुणे पवमानशब्दोऽपि पवनक्रियायोगनिमित्तत्वात्सर्वत्र यौगिकैर्द्रव्यमेवाभिधीयतइति न्यायात्पावनक्रियाकर्त्तरि रूढः । अनेन च यदुत्पत्तावपूर्वमिति सूत्रावयवनिर्दिष्टस्य सामानाधिकरण्यानिर्देशानिरूढत्वविशेषणद्वययुक्तस्य पूर्वाधिकरणविषयस्यात्रानिरूढत्वविशेषणाभावेनाभावात् पूर्वाधिकरणप्रत्युदाहरणरूपेण पूर्वस्मिन्प्रत्यवस्थानादनन्तरसङ्गतिरप्युक्ता भवति एतच्च न चैते कर्मणि प्रसिद्धा न च यौगिका इत्यत्र भाष्ये स्पष्टयिष्यते । ननु निरूढार्थत्वेनाज्ञातसन्दिग्धत्वाभावात्सामानाधिकरण्यानिर्णयत्वेऽपि प्रधानभूतकरणत्वानुरोधात्कर्मवाचित्वानुमानं भविष्यतीत्याशङ्क्याह * न हीति * प्रसिद्धिद्वयस्यापि कल्प्यत्वे प्रधानाश्रितयेतरा बाध्यते न तु क्लृप्तायाः प्रधानाश्रितयापि कल्प्यया बाधो युक्त इत्याशयः । आज्याद्युदाहरणान्याक्षिपति * नन्विति * ननु चित्रावाक्यवदनुत्पत्तिवाक्योदाहरणेऽपि न दोष इत्याशङ्क्याह * तथा हीति * उत्पत्तिशब्देनेह कर्मनिर्देशो विवक्षितः । तदभावे च निर्विषययोर्गुणनामधेययोरवधारणासम्भवान्न व्यवहाराङ्गत्वं स्यादिति भावः । अतः सैवोदाहरणाय क्षमा युक्तेत्यर्थः । नातिप्रयत्निनां समाधानमाह * सा त्विति * उदाहर्तव्याप्युपपत्तिर्यत्रोदाहृता तत्सूत्रकृता गुणवाक्यस्योदाहरणायाश्रि-

तत्वादित्यर्थः । सूत्रकारस्यापि पर्यनुयोगसाम्येनैतत्समाधानं दूषयति * अथेति * तेषामेव परिहारमाह * यत्रेति * उत्पत्तिवाक्योदाहरणे फलविशेषस्योक्तत्वादेतत्परिहारापरितोषेण परिहारान्तरमाह * पूर्वपक्षेति * उत्पत्तिवाक्ये पक्षद्वयोपपादकहेतुसद्भावे तत्रैव पूर्वोत्तरपक्षौ विचार्य पक्षद्वयबलाबलनिर्णयार्थं वाक्यान्तरगतेनापि वाक्यभेदेन पूर्वपक्षनिराकरणोपपत्तेरत्राप्यपरितोषात्स्वमतेनान्यथा परिहरति * अथ वेति * नामधेयत्वे तावदन्यतः सिद्ध्यपेक्षामुपपादयति * घृतेति * निरूढार्थत्वात्सामानाधिकरण्यमत्रानिर्णायकमित्याशयः । किं च न नामधेयं विधायिष्यतइत्यनेन न्यायेन नामधेयार्थविधाने ऽपि सञ्ज्ञासञ्ज्ञिसम्बन्धस्यानुवाद्यत्वात् अन्यतः सिद्धिरपेक्षणीयेत्याह * यान्याज्यानीति * ननूद्भिदादिवदुत्पत्तिवाक्यगतकर्मसामानाधिकरण्येनैव कर्मसंज्ञात्वसिद्धेर्नान्यतः सिद्ध्यपेक्षेत्याशङ्क्य * सहापीत्युक्तम् * समानाधिकरणकर्मनिर्देशस्योत्पत्तिशब्देन विवक्षितत्वात्सत्यपि सामानाधिकरण्ये प्रवृत्तिनिमित्तं विना कर्मनामत्वानिर्वाहात् पशुकामादिवच्चेहोत्पत्तिवाक्ये प्रवृत्तिनिमित्तद्योतकशब्दाभावादन्यतः सिद्ध्यपेक्षेत्यर्थः । सहैव दशभिः पुत्रैर्भारं वहति गर्दभीतिवत्सहयोगिन्या तृतीयया सप्तम्यर्थलाभः । ननु सामानाधिकरण्येनावधारिते नामधेयत्वे कथमनेनाभिधीयतइति प्रवृत्तिनिमित्तापेक्षायां तद्बलेन कस्य चित्कल्पयितुं शक्यत्वात्तदर्थं च वाक्यान्तरोदाहरणे ऽर्थवादस्योदाहार्यत्वापत्तेरपरितोषात्स्वमतेन रूढिपरित्यागायान्यतः सिद्ध्यपेक्षामाह * उत्पत्तीति * उत्पत्तिवाक्ये सामानाधिकरण्यात्स्तुतिनामधेयतया स्थितमवगतमाज्यादिपदं बाधकरूढित्यागेन स्तुतिनामत्वनिर्वाहायान्यतः सिद्ध्यपेक्षमित्यर्थः । यद्वोत्पत्तिवाक्यस्थस्य आज्यादिपदस्याविचार्यत्वं पूर्वमुक्तम् । इदानीमुत्पत्तिवाक्यस्थमेवाज्यादिपदं विचारयितुमुपायत्वेन गुणवाक्यस्थमेवाज्यादिपदं विचारयितुमुपायत्वेन गुणवाक्यस्थाज्यादिपदविचार्यतोच्यतइति विवेकः । गुणविधित्वे ऽन्यतः सिद्ध्यपेक्षामुपपादयति * गुणेति * आज्यशब्देन तत्प्रकाशकान्मन्त्राल्लक्षयित्वा तेषां स्तोत्रसम्बन्धकारिवाक्यमाज्यप्रकाशकैर्मन्त्रैः स्तोतव्यमित्येवंविधमपेक्षणीयमित्यर्थः । नन्वाज्यैः स्तुवतइत्यत्रैवाज्यशब्दलक्षितानां मन्त्राणां स्तुतिकरणत्वेन विध्युपपत्तेर्न वाक्यन्तरापेक्षेत्याशङ्क्याह * इहेति * ननु वाक्यान्तरप्राप्तस्तोत्रमन्त्रसम्बन्धानुवादे ऽपि मत्वर्थ-
२८९।१ लक्षणा तुल्येत्याशङ्क्याह * अनुवादत्वे त्विति * प्रमाणान्तरानु-

सारित्वादनुवादे प्रसज्यमानापि लक्षणा न दोष इत्यर्थः। नन्ववाचकत्वे ऽपि घृतस्य सन्निधानमात्रेण स्मारकतया स्तुत्युपयोगित्वाद्रथघोषेण माहेन्द्रस्तोत्रमुपाकरोतीतिवत्करणत्वोपपत्तेर्नाज्यशब्देन मन्त्रलक्षणापत्तिरित्याशङ्क्याह * तेनेति * येन करणेन विधौ मत्वर्थलक्षणादोषो नानुवादे तेन कारणेन स्तोत्राणामाज्यलक्षितमन्त्रवत्तावदाज्यवत्ताप्यन्यत एव लब्धव्येत्यर्थः। पक्षद्वये प्यन्यसापेक्षत्वमुपसंहरति * तदिति * तस्मादित्यर्थे तदित्यव्ययम्। आज्यादिशब्दार्थानिर्णयं तद्युत्पत्तिवाक्यस्य कीदृशो ऽर्थ इत्यपेक्षायामाह *ततश्चेति * गुणवाक्योदाहरणकारणमुपसंहरति * इतीति * उत्पत्तिवाक्यस्यस्यैवाज्यादिशब्दस्यान्यतो ऽर्थनिर्णयार्थं गुणवाक्योदाहरणमित्यर्थः। पवमानशब्दोदाहरणं पूर्वन्यायसिद्धत्वेनाक्षिपति * पवमानशब्दस्त्विति * यौगिकत्वे ऽपि पवनक्रियाकर्त्तरि निरूढत्वात् स्तोत्रस्य च पवमानक्रियाकर्तृत्वासम्भवान्न पूर्वन्यायेन सिद्धिरिति परिहरति * अपरे त्विति * ननु पवमानशब्दवाच्यसोमप्रकाशकमन्त्रसाध्यत्वात् स्तोत्रे ऽपि पवमानशब्दप्रसिद्धेः सन्देहे सत्यस्त्येव पूर्वन्यायविषयतेत्याशङ्क्याह * सोमो हीति * तत्रावयवप्रसिद्ध्यभावाल्लक्षितलक्षणा स्यात् सा च मत्वर्थलक्षणातो दुर्बलेति सामानाधिकरण्येन नामधेयत्वासिद्धेर्न पूर्वन्यायसिद्धान्त इत्यर्थः। नन्वेवं सति मत्वर्थलक्षणाप्रसङ्गेनात्र गुणविधित्वनिरासासिद्धेः। केन हेतुना निरास इत्याशङ्क्य * वाक्यभेदेन वेत्युक्तम् * अनेन गुणविधौ प्रसङ्गाद्वाक्यभेदानामिहोदाहरणत्वं वाक्यभेदपरिहारसम्भवासम्भवाभ्यां च सन्देह इत्यपि सूचितम्। प्रसिद्धेरिति पूर्वपक्षभाष्यं व्याचष्टे *तत्रेति * प्रवृत्तिविशेषकरत्वे ऽर्थवत्त्वं हेतुः वाक्यवत्त्वरूपे वार्थवत्त्वे प्रसिद्धिर्हेतुः त्रयो ऽपि वा गुणविधित्वे साक्षाद्धेतव इति व्याख्यात्रयं पूर्वशब्देनातिदिष्टं विज्ञातत्वान्न यागविधिरिति विशिष्टविधिनिरासात् गुणे फलकल्पनायामित्यनेन च फले गुणविधिनिरासात् कर्मणि चित्राशब्दो गुणविधिरिष्टः स कस्मिन्कर्मणीत्यपेक्षायामाह * चित्रेति * ननु दधिमधुपयोघृतन्धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यमिति प्रकृतप्राजापत्येष्टियागेनाग्नीषोमीये गुणविधिर्भाष्यकृतो ऽभिप्रेत इति कथं ज्ञायतइत्यपेक्षायां चित्रो गुणो विधीयमानः स्त्रीलिङ्गनिर्देशात्स्त्रीद्रव्यके यागे विधीयेत न चासौ स्त्रीपुंपशुद्रव्यके यागे ऽग्नीषोमीये ऽस्ति पशुकामपदोपादानात्। पशुकामकर्तृके विधीयेत सो ऽपि पशुकामः कर्त्ता नाग्नीषोमीये ज्योतिष्टो-

माधिकारिकर्तृके ऽस्तीत्युत्तरपक्षे निरासेन द्योतनादित्युक्तम्। प्रकृतकर्मत्यागेनाप्रकृते गुणविधिः कस्मादिष्ट इत्याशङ्क्याह * अत्रेति * चित्रत्वस्यात्रैकपदोपात्तेन स्त्रीत्वेन योगो ऽवगम्यते स्त्रीत्वयोगश्च प्राणिजातावेव सम्भवति तेन कारणेनैते चित्रत्वस्त्रीत्वे प्राणिद्रव्यकस्य यागस्याङ्गमित्यर्थः। स्त्रीत्वयोगनिमित्तं चित्रत्वस्य प्राणियागाङ्गत्वं वक्तुं द्विवचनम्। नन्वप्राणिन्यपि खट्वादौ स्त्रीप्रत्ययदर्शनान्न स्त्रीत्वस्य प्राणित्वाव्यभिचारितेत्याशङ्क्य स्वभावत इत्युक्तम्। खट्वादौ त्वविद्यमानमेव स्त्रीत्वं टावादिप्रत्ययदर्शनेनारोप्यतइति भावः। ननु प्राणियागाङ्गत्वे ऽपि मेष्यां चित्रमात्रविध्युपपत्तेर्नाग्नीषोमीये चित्रत्वस्त्रीत्वयोर्विधिर्युक्त इत्याशङ्क्य * प्रकृतिमित्युक्तम् * प्राकृतेन कृष्णसारङ्गादिना गुणान्तरेण निराकाङ्क्षत्वान्न मेष्यामनारभ्यविधिना चित्रत्वं विधातुं शक्यं प्रकृतौ त्वाकाङ्क्षावशाच्छक्यमित्याशयः। कथमग्नीषोमीयस्य सर्वप्राणियागप्रकृतितेत्याशङ्क्य दैक्षस्य चेतरेष्वित्याष्टमिकन्यायं सूचयितुं यो दीक्षितो यदग्नीषोमीयं पशुमालभेतेति दीक्षायागयुक्तवाक्यविधाननिमित्तो ऽग्नीषोमीये दैक्षशब्दः प्रयुक्तः। श्लोकं व्याचष्टे * स्त्रीत्वादिति * सर्वप्राणियागेषु कस्मान्न विधीयतइत्याशङ्क्य तार्तीयन्यायोपन्यासः। सौत्यस्यैकादशिनीप्रकृतित्वादैकादशिनीनां च पशुगणप्रकृतिनिमित्तत्वात्कथं दैक्षस्य सर्वप्राणियागप्रकृतितेत्याशङ्कानिरासार्थः परमशब्दः। नन्वग्नीषोमीयक्रमाम्नातेन कृष्णसारङ्गादिना गुणेन उत्पत्तिवाक्यशिष्टेन पुंस्त्वेन च बाधापत्तेर्नाग्नीषोमीये चित्रत्वस्त्रीत्वयोर्विधिर्युक्त इत्याशङ्क्याह * तत्रेति * कृष्णसारङ्गादेरुत्पत्तिवाक्यशिष्टत्वाभावादुत्पत्तिवाक्यशिष्टं पुंस्त्वं क्रमाम्नातं कृष्णसारङ्गादिगुणान्तरं चेति व्यवहितान्वयः कृष्णसारङ्गो ऽग्नीषोमीय इति सामानाधिकरण्यनिर्देशाभिप्रायो वोत्पत्तिशब्दः। फले विधावुद्भिदेव सोमस्य बाधो यागे तु विधौ विकल्प इति पूर्ववच्छब्दार्थः। नन्वनारभ्याधीतत्वाच्चित्रत्वस्त्रीत्वयोरेव प्रकरणाविशेषात्तु विकृतौ विरोधः स्यादिति तार्त्तीयिकन्यायेन बाधः स्यादित्याशङ्क्याह * साप्तदशेति * सामिधेनीमात्रसंयोगेन श्रुतस्य साप्तदश्यस्याऽक्लृप्तक्रतुसंयोगत्वात् पाञ्चदश्येन प्रकरणक्लृप्तक्रतुसंयोगेन बाधो युक्तः चित्रत्वस्त्रीत्वयोस्तु क्रतुसंयोगेनैव श्रवणात्तद्विशेषाग्नीषोमीये सम्बन्धो यथा कृष्णसारङ्गादेः पशुसंयोगश्रुतस्य क्रमात्तथानयोः सामर्थ्यानुगृहीतात् प्रकृतौ वेति न्यायादिति तुल्यत्वात् साप्तदश्यपूर्वपक्षे यथोभयोः सामिधेनीसंयोगाविशेषाद्विकल्पः तथात्रापीत्याशयः। नन्वग्नीषो-

मीये चित्रत्ववत् स्त्रीत्वस्याप्यप्राप्तेरनेकार्थविधानाद्वाक्यभेदः स्यादित्याशङ्क्याह * एकेति * परस्परासम्बद्धानेकार्थविधौ वाक्यभेदस्यापरिहार्यत्वात् विशेषणविशेष्यभावसिद्ध्यर्थम् एकपदोपादानमुक्तम् । ननु चित्रत्वस्त्रीत्वयोर्द्रव्याश्रितत्वेनान्योन्यविशेषणविशेष्यत्वायोगान्नैकपदोपादाने ऽपि न तत्प्रतीतिः सम्भवति इत्याशङ्क्यैककारकेत्युक्तम् । चित्रत्वस्त्रीत्वविशिष्टमेकं तृतीयोपात्तं कारकं विधीयतइति भावः । ननु चित्रत्वस्त्रीत्वयोरेकपदोपात्तत्वाद्वाक्यभेदानापादकत्वे ऽपि पशुकामपदोपात्तफलसम्बन्धविधानाच्चित्रापदोपात्तगुणसम्बन्धविधानाच्च वाक्यभेदः स्यादित्याशङ्क्याह * पशुकामेति * स्वतन्त्रकर्मविधौ कामिपदस्य फलपरत्वाभावे नैष्फल्याद्विधानानर्थक्यापत्तेः । फलपरत्वे ऽपि फलवज्ज्योतिष्टोमाङ्गभूते अग्नीषोमीये गुणविधौ साक्षात्फलाभावे ऽपि ज्योतिष्टोमफलेन परम्परया फलवत्त्वोपपत्तेरयं पशुकामशब्दो न पशुयागफलं प्रतिपादयतीति शेषः । ननु अफलस्य काम्यत्वायोगात्कामशब्दोपबन्धे आसाधकं तु तादर्थ्यादिति स्वर्गकामाधिकरणसिद्धान्तन्यायेन फलपरो ऽयमित्याशङ्क्यानुवाद इत्युक्तम् । पशोरिहाफलत्वेन मुख्यवृत्त्या भविष्यतीति भावः । कथं प्राप्तिरित्याशङ्क्यार्जनाङ्गत्वादित्युक्तम् । अनर्जितानुपात्तेन पशुना यष्टुमशक्यत्वादकाम्यस्य चोपादानायोगादुपादानाङ्गत्वेन प्राप्ता कामनानूद्यतइत्यर्थः । ननु पशुकामशब्दात्पशोः साधनत्वाप्रतीतेः कथं तदुपादानाङ्गत्वेन कामना प्राप्नुयादित्याशङ्क्य स्वर्गेत्युक्तं स्वर्गकामादिबहुव्रीह्यर्थस्य पुरुषस्य भावनाक्षेपलभ्यत्वात् एकादशाद्यभाष्योक्तन्यायेन स्वर्गकामादिशब्दस्य लोहितोष्णीषादिवत् विशेषणपरत्वावगतेस्तदुपात्तस्य स्वर्गादेर्यागं प्रति गुणत्वेनान्वयः प्राधान्येन वेति संन्दिह्य द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसम्बन्ध इति षष्ठाद्यस्वर्गकामाधिकरणपूर्वपक्षसूत्रे भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यतइति न्यायात् भूतस्य स्वर्गपश्वादेर्द्रव्यस्य भव्यं कर्म प्रति गुणत्वेनान्वयस्य वक्ष्यमाणत्वात् पशुकामशब्दात्पशोः साधनत्वावगतिसिद्धिरित्यर्थः । नन्वेवमपि पशुकामपदोपात्तसाधनभूतपशुविधानाच्चित्रापदार्थविधानाच्च वाक्यभेदः स्यादित्याशङ्कां निरस्यन्नर्जनाङ्गत्वेन कामनाप्राप्तिं विवृणोति * न हीति * पशुसाधनताग्नीषोमीयस्योत्पत्तिवाक्यादेवावगतेति वदता पशुयागशब्देनाशङ्का निरस्ता । चित्रया यजेतेति गुणविधौ विशिष्टविधिनिमित्तगौरवशङ्कानिरासार्थं भाष्यं मध्यप्रतीकेनावतार्योपपादयति * यागेति * श्लोकं व्याचष्टे * यावदिति * नन्वेवं २९०।२

सति न क चिद्विशिष्टविधिः स्यादित्याशङ्क्याह * आगत्या त्विति * एवं तर्ह्यत्रापि प्रकृते प्राजापत्ययागे तत्र साधनेषु दध्यादिषु चित्रत्वापादनाशक्तेः स्त्रीत्वयोगाभावाच्च चित्रात्वस्य विधातुमशक्यत्वादग्नीषोमीयस्य च दूरस्थत्वादगत्यैव विशिष्टविधिर्भविष्यतीत्याशङ्क्याह * अस्ति चेति * दूरस्थो ऽपि स्त्रीत्वेनोपस्थापितो ऽनुवदितुं शक्यते इत्याशयः । फले गुणविधिनिरासार्थं गुणे फलकल्पनायामिति भाष्यमाक्षिपति * गुणेति * नातिप्रयत्निनां समाधानमाह * सिद्धान्तेति* प्राधान्यप्रतिपक्षं तु गुणशब्दं मत्वा नाना समाधानमाह * अपरे त्विति * अत्र ह्यस्य गुणशब्दस्य प्राधान्यप्रतिपक्षत्वाभावादेतदू दूषयति * तदयुक्तमिति * गुणविधित्वस्य प्राधान्यप्रतिपक्षत्वाभावे भाष्यकृतः संमतिमाह * तथा चेति * कथमनेन भाष्येण गुणविधेः प्राधान्यप्रतिपक्षत्वाभावो द्योत्यतइत्याशङ्क्याह * फलेति * चित्रादिपदं वा फलपदेन सम्बन्ध्यतामाख्यातपदं वेति विचारे दर्शिते। ननु चित्रादिपदस्य फलपदसम्बन्धे तदर्थस्य फलसाधनत्वलक्षणात् प्राधान्यात्तस्य च निर्व्यापारस्य फलसाधनत्वायोगाद्यागं कुर्वता चित्रादिना फलं भावयेदिति वैयधिकरण्येन यज्यन्वयापत्तेः सामानाधिकरण्यानिमित्तनामधेयत्वासम्भवादेकान्तेन गुणविधित्वापत्तेर्गुणविधिनिरासेनैव फलपदसम्बन्धनिरासेनैव पदसम्बन्धस्य निरस्तत्वात्पूर्वपक्षासम्भवेनायं विचारो न युक्त इत्याशङ्कां निराकुर्वता स्थित एतस्मिन्निति भाष्येण गुणविधेः फलसम्बन्धे सत्यैकान्तिकत्वसूचनादत्र प्रधानप्रतिपक्षता द्वयोः सूचितेत्याशयः । स्वयं समाधत्ते * तेनेति * विशिष्टविधावपि याग एव गुणविधेस्तुल्यत्वं मत्वा त्रयइत्युक्तम् । एकैकस्येति कर्त्तरि षष्ठी तुच्छत्वद्योतनार्थं चास्य पक्षस्य निरासो वादिद्वयसम्मतो ऽपि पूर्वपक्षावसरएव कृत इत्याह * तत्रेति * धातुपारार्थ्यप्रसङ्गादित्यनेन यजतेरविवक्षेति भाष्यावयवो धातोर्विध्यनुपयोगित्वेन प्रत्ययानुग्रहमात्रार्थत्वाभिप्रायो व्याख्यातः । एवं चैक एव पूर्वपक्षो ऽवतिष्ठतइत्याह * अतश्चेति * ननु विधानवदनुवादे ऽपि यागस्य करणत्वाच्चित्रयेति करणतया निर्दिष्टस्य गुणस्य चित्रावता यागेनेति मत्वर्थलक्षणां विना तदन्वयायोगादयमपि पूर्वपक्षो दुर्बल इत्याशङ्क्याह * करणेति * कुठारादिषु करणत्वस्योद्यमनादिकर्तृव्यापारव्याप्यत्वापेक्षादर्शनात्करणत्वेनार्थाक्षिप्तस्य साध्यांशस्यानुवादेन गुणविधौ न मत्वर्थलक्षणेत्यर्थः । ननूत्पत्तिवाक्यपरिहारेणेतरवाक्यानां परस्परान्वयाभावान्न गुणविधौ प्रयोगवाक्यावग-

तकरणत्वाक्षिप्तस्य साध्यांशानुवादो युक्त इत्याशङ्क्योत्पत्तिवाक्ये
ऽपि विधिबलात् करणत्वावगमो ऽस्तीति सूचयितुम् * उत्पक्षेत्यु-[1]
क्तम् * पूर्वोत्तरपूर्वपक्षभाष्यसन्देशेनास्यापि पूर्वपक्षभाष्यत्वाव-
गतेः साधारणत्वायोगात् पूर्वपक्षभाष्यमेवैतदिति स्वमतमाह *गु-
णेति * भाष्योक्तस्य धातुपारार्थ्यस्य परपदसम्बन्धाविधानव्यव-
हितकल्पनौत्पत्तिकगुणबाधोपलक्षणार्थत्वं सूचयितुम् * पूर्वाधि-
करणेत्युक्तम् * आज्याद्युदाहरणेषु पूर्वपक्षाभिधानार्थं तथेति
भाष्यमश्रुतं भवत्यध्याहारादयुक्तमाशङ्क्याह * तथेति * अस्ति-
र्भवन्तीति परः प्रथमपुरुषे ऽप्रयुज्यमानो ऽप्यस्तीति स्मृत्यास्तिधातुर्भव-
न्तीशब्दवाच्यवर्त्तमानार्थलड्विभक्तिपरः प्रथमपुरुषे समानाधिकर-
युष्मदस्मद्व्यतिरिक्तोपपदे सत्यप्रयुज्यमानो ऽप्यस्तीत्यनुशासनात्
अस्तिभवत्योश्चैकार्थत्वाद्भवत्यध्याहारेण सत्तायाः स्तोत्रसमीपे क-
ल्पनं रचनं पूर्वपक्षिणो ऽभिमतामिति शेषः। नन्वेवमपि विधाय-
काश्रवणाद् गुणविधित्वं न युक्तमित्याशङ्क्याह * प्रयोगेति * ननु
उप्रत्ययान्तस्य पञ्चदशादिशब्दस्य स्तोत्रीयसंख्यावाचित्वात्तत्समा-
नाधिकरणयोराज्यपृष्ठशब्दयोर्घृतशरीराङ्गवाचिता न युक्तेत्याशङ्कते
* ननु चेति * कस्मान्नायं संख्यामात्रवाचीत्याशङ्क्य स्मृतिं प-
ठति * स्तोम इति * कथमनया स्मृत्या संख्यामात्रवाचित्वं वा-
र्यतइत्याशङ्क्याह * न हीति * स्तुतेर्मानं स्तोम इति स्मृतेः स्तोत्री-
यसंख्यावाचित्वावधारणादित्याशयः। स्तुतेः साधनद्वारेण सं-
ख्यात्मकमानपरिच्छेद्यत्वात् स्तुतिसाधनपरिच्छेदिकायाः स्तुतिमा-
नत्वेन स्तोमत्वादृचामिव घृतादेरपि रथघोषवदुपस्थापकतया स्तु-
तिसाधनत्वोपपत्तेः उप्रत्ययाविरोध इति परिहरति * नैष दोष २९।१।१
इति * स्तोत्रसाधनानामृचामेव परिच्छेदिका संख्या स्तोमशब्दवा-
च्या न साधनान्तरपरिच्छेदिका इति शङ्कानिवृत्त्यर्थो मात्रशब्दः।
नन्वेवं सति स्तोमशब्दवाच्यस्तोत्रसाधनसंख्यापरिच्छेद्यत्वार्थं घृता-
दीनां स्तोत्रसाधनत्वं वक्तुम् आज्यवन्ति पृष्ठवन्ति बहिष्पवमानवन्ति
स्तोत्राणीति वक्तव्यं तथा च[2] मत्वर्थलक्षणाप्रसङ्गान्न लक्षणेत्ययुक्त-
मित्याशङ्क्याह * न चात्रेति * एतदेव प्रश्नपूर्वकमुपपादयति
* कुत इति * विवक्षितार्थापेक्षया न्यूनत्वाभ्युपगमे लक्षणावाक्य-
भेदौ आधिक्याभ्युपगमे त्वादिशब्दोक्तमानर्थक्यम्। अथ वा[3] न्यूनस्या-

१ उत्पत्तौत्युक्तमिति २ पु॰ पा॰ अयमेव मुद्रिततन्त्रवार्तिके दृश्यते।
२ वक्तव्यं तथा चेति २ पु॰ पा॰।
३ यद्वेति २ पु॰ पा॰।

धिकार्थविषयत्वकल्पने लक्षणावाक्यभेदौ गौणत्वाध्याहारौ दोषा इत्यर्थः। न्यूनत्वे लक्षणावाक्यभेदौ आधिक्ये त्वानर्थक्यं अन्यथात्वकल्पने विपरिणामव्यवहितकल्पना व्यवधारणकल्पनादोष इति वा योज्यम् । अनुमिते तु विवक्षितार्थाभिधानशक्तस्यैवानुमानान्न कश्चिद्दोष इति भावः । द्रव्यसंख्यारूपानेकार्थविधिलक्षणावाक्यभेदपरिहारो ऽपि लक्षणापरिहारन्यायेनैवोक्त इति सूचयितुं वाक्यभेदोपादानम्। ननु इहाप्याज्यैः स्तुवतइत्यादिषु श्रुतिष्वेवोत्पत्तिवाक्येषु मत्वर्थलक्षणा प्रसज्येतेत्याशङ्क्याह * इह तावदिति * विधौ मत्वर्थलक्षणापत्तेः श्रुतवाक्यगतेन विधिना सहाज्यादीनां संयोगाभावात् स्तोत्रप्रकरणे यत्पञ्चदशानीत्यादिगुणवाक्याम्नानं तदनुमिते च पञ्चदशसंख्याविशिष्टैराज्यैः स्तोत्रस्योपकर्त्तव्यमित्यादिवाक्येन कृतो यः स्तोत्राज्यादिसम्बन्धस्तत्पूर्वकप्रयोगवचनेन विधिरित्यर्थः। नन्वाज्यादीनामक्रियात्मकत्वेन प्रकरणग्रहणायोगान्न तद्वशेन वाक्यानुमानं युक्तमित्याशङ्कते *तत्रेति* भवत्युपात्ताज्यादिसत्ता प्रकरणग्राह्या भविष्यतीति परिहरति * सत्तैवेति * ननु धातुवाच्यत्वमात्रेण सत्तायाः क्रियात्वे ऽपि चेतनक्रियात्वाभावेनाननुष्ठेयत्वान्न प्रकरणग्राह्या भविष्यतीत्याशङ्क्याह * प्रधानेति * सत्तायाः स्वरूपेणाननुष्ठेयत्वे ऽपि अङ्गत्वेन स्तोत्रसामीप्यावगमात्तस्य च सन्निधिस्थापनासाध्यत्वात्तेन रूपेणानुष्ठेयत्वं भविष्यतीत्याशयः। संसर्गिद्रव्यत्वादाज्यानां स्वरूपेण संख्यायोगाभावे ऽपि पञ्चदशाज्यपात्राणि समीपे निधाय स्तोतव्यं पूर्वपक्षे कर्त्तव्यं सप्तदश पराङ्मुखप्राणिस्थापनेन सप्तदश पृष्ठानि समीपे निधाय स्तोतव्यं त्रिवृच्छब्दवाच्यं च त्रिपुटा त्रिभिंद्यापरपर्यायलताद्रव्यम् पवनार्हद्रव्यं कृत्वा वस्त्रादौ पवमानं सदसो वर्हि[1]ः समीपे निधाय स्तोतव्यं इतीतरवाक्यार्थानुष्ठानं सन्निधिस्थापनमात्रेणाप्यग्निवदुपकारकत्वोपपत्तेः साधकतमत्वविवक्षया उत्पत्तिवाक्येषु अनुवादार्थतृतीयया निर्देशोपपत्तिरिति दर्शयितुमाह * अतश्चेति * नन्वेवं सत्युत्पत्तिवाक्येष्वाज्याद्यनुवादो ऽनर्थकः स्यादित्याशङ्क्य प्रशस्तमिदं स्तोत्रं यत्क्रियमाणमाज्यादिसन्निधियुक्तं भवतीत्येवं स्तोत्रप्रशंसार्थत्वेनानुवादसाफल्यं सूचयितुमाहेतीति भाष्यकृता गुणोपदेश इत्यनेन गुणोपदेशयुक्तविषयनिर्देशेनैव वाक्यभेदप्रसङ्गस्य गुणविधिनिरासहेतोः सूचितत्वात्प्रधानतो ऽभिसम्बन्ध इति सूत्रावयवो नामधेयत्वप्रतिज्ञार्थतया व्याख्यातः। तत्र नामधेयत्वप्रतिज्ञा-

१ बर्हिरिति २ पु॰ पा॰ ।

याः पूर्वसूत्रोक्ताया एवानुषङ्गसम्भवात् प्रधानशब्दस्य च कर्मपरत्वे लक्षणादोषापत्तेः कर्मसम्बन्धस्य च गुणविधावप्युपपत्तेर्नामधेयत्वात् सहार्थेन च तसिप्रयोगादर्शनेनासाधुत्वापत्तेरपरितोषात्स्वयं वाक्यभेदोपपादनार्थतया अवतारणपूर्वकं व्याचष्टे *प्रधानत इति * अनेन च प्रधानद्वारानेकेषां गुणानामनेकविशेषणविधिप्रसवसमर्थेनैकेन विधिना सम्बन्धो भवति न चात्र प्रधानभूतं कर्म त्वत्पक्षे विधीयतइत्येवं व्याख्यातं त्रिषयानिर्देशकगुणोपदेशशब्दसूचितं गुणविधिनिरासहेतुवाक्यभेदप्रसङ्गव्याख्यानार्थं गुणविधौ हीति भाष्यमाग्नेयो ऽष्टाकपाल इत्यादौ गुणविधावपि वाक्यभेदाभावादयुक्तमाशङ्क्य कर्मानुवादविषयत्वेन व्याचष्टे * अत्र पुनरिति * पुंपशाविति भाष्येणोत्पत्तिशिष्टपुंस्त्वावरुद्धे ऽग्नीषोमीये स्त्रीत्वं विधातुमशक्यमिति अभिधानपूर्वकं चित्रत्वस्त्रीत्वगुणपशुफलरूपानेकार्थविधानाद्वाक्यभेदो विवृतः । तत्रोत्पत्तिशिष्टगुणावरुद्धे तद्विरोधित्वगुणान्तराविध्यसम्भवो वैश्वदेवाधिकरणे व्युत्पादयिष्यमाणो ऽत्र हेत्वन्तरसमुच्चयार्थमुक्तो वाक्यभेदप्रसङ्ग एव त्वत्र गुणोपदेशशब्दोक्तः प्रधानहेतुरित्यभ्यर्हितं पूर्वं निपततीतिन्यायेन सूचनार्थं प्रथमं वाक्यभेदमुपपादयितुं चित्रत्वस्त्रीत्वविशिष्टैककारकविधानादवाक्यभेदाभिप्रायं पूर्वोपन्यस्तं निरस्यति * न चेति * कर्मवत्कारकस्य द्रव्यस्यापि चोत्पत्तिवाक्यादेव प्राप्तत्वाच्चित्रत्वस्त्रीत्वमात्रमत्र विधेयं तयोश्च परस्परविशेषणविशेष्यत्वाभावेनैकविशिष्टेतरविध्ययोगादपरिहार्यो वाक्यभेद इत्याशयः । वृद्धसम्मत्यैतदेव द्रढयति * आह चेति * ननु चित्रया कुर्यादिति सकृदुच्चरितस्य प्रत्ययस्यानेकार्थप्रतिपादकेनाप्येकेन चित्रापदेनान्वयोपपत्तेर्न प्रत्ययोच्चारणावृत्त्यापत्तिरित्याशङ्क्याह * एकेति[1] * अथापि शास्त्रतन्त्रत्वं तथापि तदनेकतेति ग्रहाधिकरणवार्त्तिकोक्तन्यायेन सकृदुच्चरितस्यापि प्रत्ययस्यैकपदोपात्तानेकार्थविधिशक्तत्वे ऽप्येकेनैव व्यापारेणानेकविध्यशक्तेर्व्यापारभेदकल्पनावश्यम्भाविनीत्यर्थः । शक्तिशब्देन व्यापारो विवक्षितः पुंपशाविति भाष्यावयवोक्तोत्पत्तिशिष्टगुणावरुद्धे कर्मणि तद्विरुद्धगुणान्तरविध्यसम्भवं हेत्वन्तरसमुच्चयार्थत्वेनेदानीं व्याचष्टे * उत्पत्तीति * विधातुमिति शेषः ननूत्पत्तिशिष्टैकहायिन्यवरुद्धे ऽपि क्रये हिरण्यादीनां विधिदर्शनात् कथमशक्यतेत्याशङ्क्य * तद्विरोधीत्युक्तम् * विक्रेत्रानतिजनेनैकहायन्याः क्रयसाधनत्वादानत्यतिरेकार्थं द्रव्यान्तरसमुच्चयो- २९.२१

१ एवेति २ पु० ना० ।

पपत्तेरविरोध इत्याशयः । ननु विरोधे ऽप्युत्पत्तिशिष्टगुणबाधेन विकल्पेन वा गुणान्तरनिवेशो भविष्यतीत्यत आह * यत्रेति * विशिष्टविधौ शुद्धस्याविहितत्वेनाप्राप्तेरनुवादायोगाद्विशिष्टमेव कर्मानुवादितव्यं तस्य च समुच्चये प्याणतिवदतिरेकाभावादेकेनैव गुणेनाकाङ्क्षानिवृत्तेर्न गुणान्तरसम्बन्धोपपत्तिरित्यर्थः । यत्तु विशेषणविशेष्यविधिपूर्वकत्वाद्विशिष्टविधेर्विशेषणवद्विशेष्यस्वरूपस्याप्यर्थापत्तिप्रसूतेन विधिना विहितत्वेन प्राप्तिसम्भवाद्विशिष्टाविहितस्यापि कर्मणः स्वरूपमात्रं निष्कृष्य गुणान्तरविधानमुद्भिदधिकरणपूर्वपक्षे ऽभिहितं तन्निरस्यति * न चेति * एतदेव प्रश्नपूर्वकमुपपादयति * कुत इति * शुद्धस्य कर्मणो ऽननुष्ठेयत्वेन विधातुमशक्यत्वाच्छ्रुतेष्वपि गुणविधिषु स्वातन्त्र्येण गुणविधानस्याघाराग्निहोत्राधिकरणे वार्त्तिककृता निराकरिष्यमाणत्वेनार्थापत्तिप्रसूतेषु स्वातन्त्र्यस्य दूरानिरस्तत्वात्तद्दृष्टान्तत्वेन विशेष्यस्वरूपस्य स्वातन्त्र्यस्य विधानाशङ्कानुपपत्तेरार्थैरपि विधिभिर्विशिष्टावयवत्वेनैव विशेषणविशेष्यांशानां विधानाच्छुद्धस्य कर्मणो प्राप्तेर्न निष्कृष्यानुवादो युक्तः । एवं सत्यपि यदि स्ववाक्यस्थगुणसम्बन्धवेलायामेव वाक्यान्तरगतानामपि गुणानां क्रियासम्बन्धः स्यात्ततो विशेषाग्रहणात् सर्वेषां तुल्यबलत्वं स्यात्तेषां तु पूर्वपश्चाद्भावात्स्ववाक्यस्थगुणनिराकाङ्क्षायां क्रियायां वाक्यान्तरगतगुणविधानानुपपत्तिरित्याशयः । ननूत्पत्त्युत्पन्नशिष्टयोः क्रियासम्बन्धपूर्वपश्चाद्भावनिमित्ते बलाबलविशेषे सत्युत्पन्नशिष्टानामपि व्रीह्यादीनां भिन्नवाक्यगतत्वेन युगपत् क्रियासम्बन्धायोगात्पौर्वापर्यनिमित्तं बलाबलं स्यादित्याशङ्क्याह * यानीति * उत्पत्तिवाक्यापेक्षत्वेनोत्पन्नवाक्यानां ततो दौर्बल्यं न पौर्वापर्यमात्रकृतमित्याशयः । चित्रत्वविधौ स्त्रीत्वविध्यसम्भवं वाक्यभेदप्रसङ्गेनोत्पत्तिशिष्टपुंस्त्वविरोधाच्च पुंपशाविति भाष्यावयवोक्तमुपपाद्य पशवः फलमिति भाष्यावयवोक्तं वाक्यभेदापत्तेरेव फलविध्यसम्भवमुपपादयति * पशुकामेति * ननु फलस्याविधेयत्वात्कथं वाक्यभेदो ऽत आह*यद्यपि चेति * न केवलमनेकार्थविधिलक्षणो वाक्यभेदः किं तुवैरूप्यमपीत्याह * अपि चेति* ननु स्त्रीपशुद्रव्यके मेषीयागे चित्रत्वमात्रविधानादुपादानाङ्गत्वप्राप्तपशुकामानुवादाच्च गुणविधावपि न वाक्यभेद इत्याशङ्कानिरासार्थं चित्रो गुणो विधीयमानो वाक्यभेदपरिहाराय स्त्री यत्र यागे द्रव्यं तत्र विधीयते तत्र च स्त्रीद्रव्यके ऽपि मेषीयागे प्राकृतकृष्णसारङ्गादिगुणनिराकाङ्क्षे ऽनारभ्याधीतस्य चित्रत्वस्य

विधातुमशक्यत्वादग्नीषोमीयसर्वपशुयागपरमप्रकृतिभूते गुणाकाङ्क्षे कृष्णसारङ्गादिगुणान्तरेण सह पूर्वोपपादिततुल्यकल्पत्वाद्विकल्प्यमानो विधीयते। न चासौ स्त्रीपुंपशुद्रव्यके ऽग्नीषोमीये ऽस्तीति स्त्रीत्वाविधानापत्तेरपरिहार्थो वाक्यभेदः पशुकामश्च यत्र कर्त्ता तत्र विधीयेत तत्र च षष्ठाद्यसिद्धान्तन्यायेन पशुकामशब्दस्य फलपरत्वेनावधारितस्योपादानाङ्गत्वप्राप्तपशुकामानुवादकत्वायोगात् फलत्वेन पशून् कामयमानः पशुकामशब्देन वाच्यः। सो ऽपि पशुकामा नाग्नीषोमीये ऽस्तीति तन्निमित्तो ऽपि वाक्यभेदो ऽपरिहार्य इति भाष्यकृतोक्तम्। तत्र मेधीयागाङ्गत्वाशङ्कानिरासस्य स्पष्टत्वादुपेक्ष्यार्ज्जनाङ्गत्वप्राप्तानुवादाशङ्कानिरासं व्याचष्टे * न चेति * एतदेव प्रश्नपूर्वकमुपपादयति * कथमिति * नन्विच्छां विना करणेतिकर्त्तव्यत्वयोः कथं प्रवृत्तिरित्याशङ्क्याह * तत्साधनेति * प्रधान्येनार्थनमिच्छा कामना नेच्छामात्रं पुरुषार्थसाधने तदङ्गे चेदं मे भवेदिति एवं प्राधान्येनानर्थं विनापि प्रार्थितसिद्ध्येच्छया प्रवृत्तिरित्यर्थः। एतदेव व्याचष्टे * न हीति * ननु करणोपकारादावपुरुषार्थे ऽपि काम्यत्वव्यपदेशो ऽस्तीत्याशङ्क्याह * गौणी वेति * यथाकाम्यसिद्ध्यर्थं प्रवर्त्तते तथा करणोपकारसिद्धये ऽपीति साधर्म्यात्काम्यत्वोपचारस्तत्रेत्यर्थः। नन्वेवं सति काम्यमानसिद्ध्यर्थत्वेन गुणवृत्त्या वा साधनस्यापि काम्यत्वोपपत्तेर्न कामशब्दोपबन्धात् फलत्वावगतिः सम्भवतीत्याशङ्क्याह * अत इति * अन्यापेक्षस्य गौणस्य वा काम्यत्वस्य प्रमाणान्तरानुसारेण कल्प्यत्वाद्वेदे च तदभावान्नात्र तत्कल्पना युक्तेत्याशयः। तदेव कामशब्दोपबन्धात्प्रतीमः। तच्च फलमिति योज्यं यदि च कामशब्दोपस्बन्धात्स्वर्गपश्वादेः फलत्वं न प्रतीयते ततो निष्फलस्य कर्मणो न कश्चित्साधको ऽनुष्ठाता स्यात् फलार्थत्वात्कर्मणि प्रवृत्तेरिति युक्त्यन्तरं वक्तुं शक्यमित्याशयेन स्वर्गकामाधिकरणसिद्धान्तसूत्रं पठति * विस्तरेण चैतदिति * कामशब्दोपस्बन्धस्य फलत्वाप्रतिपादकत्वे कर्म तत्साधकशुन्यं स्यात् फलार्थत्वात् प्रवृत्तेरिति सूत्रार्थः। नन्वेकस्मै वा ऽन्ये क्रतवः कामायाह्रियन्ते सर्वेभ्यो ज्योतिष्टोम इति ज्योतिष्टोमद्वारा सार्वकाम्यप्राप्तपशुफलत्वानुवादस्तर्हि भविष्यतीत्याशङ्क्याह * फलं चेति * औपचारिकानुवादस्यानर्थक्यापत्तेरसम्भवः विशेषणत्वं तु वाक्यभेदापत्त्यैव सार्वकाम्यप्राप्तज्योतिष्टोमविशेषणत्वे वाक्यभेद इत्युद्भिदाधिकरणवार्त्तिकोक्तन्यायानिरस्तमित्याशयः। प्राजापत्येष्टिप्रकरणबाधापत्तेरप्यग्नीषोमीये गुणविधिर्न युक्त

इत्याह * प्रकरणं चेति * ननु चित्राशब्दस्य गुणे निरूढत्वेनोद्भिदादिशब्दवत्कर्मण्यवयवद्वारेण प्रसिद्ध्यभावात्संज्ञासंज्ञिसम्बन्धानुवादानुपपत्तेर्नामधेयत्वपक्षे ऽपि प्राजापत्येष्टेः फलं पशवः सा च चित्रासंज्ञकेतिकर्मफलसम्बन्धसंज्ञासंज्ञिसम्बन्धरूपानेकार्थविधानाद्वाक्यभेदः स्यादित्याशङ्क्याह * नामधेयत्वे त्विति * दध्यादिचित्रद्रव्यकत्वात् स्त्रीप्रत्ययान्तेनेष्टिशब्दवाच्यत्वाच्च कर्मणि स्त्रीलिङ्गचित्राशब्दप्रसिद्धेरनुवादोपपत्तिरिति भावः। आज्याद्युदाहरणेषु द्रव्यसंख्यासम्बन्धस्तोत्रद्रव्यसम्बन्धरूपानेकार्थविधिलक्षणवाक्यभेदाभिधानार्थं तथेति भाष्यं तात्पर्यतो व्याचष्टे * पञ्चदशानीति * द्रव्यानुवादाभावे ऽपि भाष्योक्तं यदि कश्चित्संख्यानुवादेन द्रव्यविधानमाशङ्केत तन्निरासार्थं द्रव्यसंख्ययोरित्युक्तम्। ननु स्तोत्रेष्वप्राप्तावपि कर्मान्तरे ऽप्युपसदादिषु आज्यानां
२९३।१ प्राप्तेस्तदनुवादेन संख्याविधिर्भविष्यतीत्याशङ्क्याह * कर्मान्तरस्थं चेति * स्तोत्रप्रकरणे कर्मान्तरस्याबुद्धिस्थत्वादित्याशयः। न च द्रव्यस्वरूपानुवादेन संख्याविधिर्युक्तः। तथा सति द्रव्याङ्गत्वापत्तेरकर्माङ्गत्वप्रसङ्गेनानर्थक्यापातादित्याह * तदनुवादेन चेति * दोषान्तरमाह * प्रकरणेति * एवं तर्हि संख्याविशिष्टं द्रव्यमेव प्रकरणेन स्तोत्राङ्गत्वसिद्ध्यर्थं विधीयतामत आह * न चेति * अनेन चाथ कस्मान्न पञ्चदशसंख्याविशिष्टान्याज्यानीत्यादिभाष्ये द्वावेतावर्थौ एकस्य वाक्यस्याशक्याविव्यस्यानन्तरं द्रष्टव्यमित्यपकृष्य व्याख्येयत्वस्य वक्ष्यमाणत्वात्कथं व्याख्येयमित्यपेक्षायामिति व्याख्यातं द्रव्यसंख्ययोः प्रधानभूतैकक्रियावशीकारं विशेषणविशेष्यत्वाप्रतीतेः संख्याविशिष्टद्रव्यविध्यसम्भवहेतोः भाष्यव्याख्यैव विवरिष्यमाणत्वात् भाष्यसूचितानि हेत्वन्तराणि वक्तुं संख्याविशिष्टद्रव्यविधौ द्रव्यविशेषणत्वेन संख्यायाः कर्माङ्गत्वाभावादनुपादाने ऽपि कर्मवैगुण्याभावेनानादरं तत्रैकत्वमयज्ञाङ्गभूतमर्थस्य गुणभूतत्वादिति चतुर्थाधिकरणपूर्वपक्षसूत्रोक्तं तावदाह * इतीति * तच्छब्देन द्रव्याणि त्वविशेषेणानर्थक्यात् प्रतीयेरन्निति पूर्वाधिकरणसूत्रोपात्तद्रव्यपरामर्शादेकत्वग्रहणस्य चोपादेयगतसंख्यामात्रोपलक्षणार्थत्वाद्यज्ञशब्दस्य च क्रियामात्रोपलक्षणार्थत्वात् तत्र द्रव्ये यत्पशुमालभेतेत्येकत्वमनड्वाहौ युनक्तीति वा द्वित्वं कपिञ्जलानालभेतेति वा बहुत्वं तदक्रियाङ्गमुपश्लेषलक्षणया श्रुत्या प्रातिपदिकार्थं प्रति गुणभूतत्वादिति सूत्रार्थः। द्रव्यविशिष्टस्य विधेयत्वसम्भवे ऽप्यक्रियाङ्गत्वापत्तेर्वि-

शिष्टद्रव्याविध्यसम्भव उक्तः। परमार्थतस्त्वक्रियाविशेषणस्य-
विधेयत्वमेव न सम्भवतीत्याह * न चेति * कथं तर्हि पश्वेक-
त्वादेर्विधेयत्वं क्रियाङ्गत्वं वेत्याशङ्क्य तत्र विधेयत्वाक्रियोपादानात्
संख्यायाश्चैकप्रत्ययोपादानलक्षणया श्रुत्यैकपदोपादानलक्षणश्रुतिग-
म्यप्रातिपदिकार्थाङ्गबाधेन कारकाङ्गत्वावगतेस्तद्द्वारेण क्रियाङ्ग-
त्वावसायात् क्रियाङ्गत्वेन विधेयत्वं पश्वेकत्वाधिकरणसिद्धान्ते व-
क्ष्यमाणं सम्भवति इह तु क्रियानुपादानाच्चचतुर्थाधिकरणसिद्धा-
न्तन्यायासम्भव इति वैलक्षण्यं वक्तुमाह * न चेति * क्रियानु-
पादानादेवाक्रियात्मकत्वेन स्तोत्रप्रकरणग्राह्यत्वायोगात् तदङ्गत्वा-
नुपपत्तेरानर्थक्यापातादपि विशिष्टद्रव्याविध्यसम्भव इत्याह * न
चैषामिति * अक्रियात्मकस्य प्रकरणाग्राह्यत्वे वृद्धसम्मतिमाह
* आह चेति * नन्वस्तिर्भवन्तीपर इति स्मृतिकल्पितभवतिवा-
च्यसत्ता द्रव्यक्रियाद्वारा द्रव्यसंख्ययोः प्रकरणेन ग्रहणं भ-
विष्यतीत्याशङ्क्याह * न चेति * द्रव्यसंख्ययोर्भवतिक्रियाङ्ग-
त्वे सति तद्द्वारा प्रकरणेन ग्रहणं स्यात् न तु द्रव्यसंख्ययोः
स्वसत्तां प्रत्यङ्गत्वं सम्भवतीत्यर्थः। असम्भवे हेतुमाह * सर्वो ही-
ति * क्रियासिद्धौ व्याप्रियमाणं कारकं क्रियाङ्गं भवति सत्तासि-
द्धिवेलायां चालब्धात्मकत्वान्न व्यापारः सम्भवति इत्याशयः। न-
नूत्पत्त्याख्याद्यभावविकारेण लब्धात्मकस्य सत्ताख्यद्वितीयभावावि-
कारसिद्धौ व्यापारः सम्भविष्यतीत्याशङ्क्याह * सत्तायास्त्वि-
ति * उत्पत्तुमारभमाणस्यापि कुतश्चित्कारणात्सत्तासिद्ध्यभावे सि-
द्धो घट इत्यात्मलाभव्यवहारासम्भवात् सत्तातः प्रागलब्धात्मक-
त्वात् तद्व्यापारः सम्भवतीत्याशयः। वस्त्वात्मलाभमात्रस्य सत्तातो
ऽपवर्गात् समाप्तेस्तस्या न वस्तुना साध्यत्वमिति योज्यम्।आद्यभावविं-
कारेणोपक्रान्तस्यात्मलाभस्य द्वितीयेन पर्यवसानमित्यपवर्गशब्देनो-
क्तं यदि च पञ्चदशसंख्यैराज्यैः स्वसत्तां भावयेदिति वाक्यार्थः
स्यात्ततो ऽन्यसाध्यानपेक्षणेन स्तोत्रोपकारस्य साध्यत्वेनासम्बन्धात्
न स्तोत्राङ्गत्वं स्यादित्याह * तद्व्यतिरिक्तेति * ननु रथन्तरं भव-
तीत्यादौ भवतिक्रियाद्वारेण प्रधानक्रियाङ्गत्वदर्शनादिहापि तथा
स्यादित्याशङ्क्याह* यस्त्विति*बृहद्वा रथन्तरं वा पृष्ठं भवतीति वचने-
न पृष्ठाख्यस्तोत्रसाधनतया विकल्पेन विहितयोर्बृहद्रथन्तरयोर्विकृ-
तावतिदेशप्राप्तायां वैकल्पिकायां सत्तायां रथन्तरसत्तानियमार्थमि-
दं वाक्यम् । तत्र चातिदेशप्राप्तस्य पृष्ठाख्यस्तोत्ररूपावान्तरक्रियास-
सम्बन्धस्य प्रज्ञानाद्युक्तं विकृतिप्रकरणग्रहणमित्यर्थः। लोकसि-

ङ्गत्वेन चाज्यादिसत्ताया विधेयत्वायोगात् न तद्द्वाराज्यादीनां स्तोत्रप्रकरणग्रहणं युक्तमित्याह * नचेति * नन्वाज्यादिसत्तायाः स्वरूपतः सिद्धावपि स्तोत्रसामीप्यासिद्धेस्तेन रूपेण विधेयत्वं भविष्यतीत्याशङ्कते * स्तुतीति * स्तोत्रसान्निध्यरूपेणासिद्धावपि सत्तायाः पुंव्यापारत्वाभावेनानुष्ठेयत्वाभावाद्विधेयत्वं न सम्भवतीत्याशङ्कानिरासायानुष्ठानार्हस्थापनोपन्यासः । कथमश्रुतोपस्थापनप्रतीतिरित्याशङ्काप्राप्तत्वेनाज्यादिसत्ताया विधेयत्वप्रतीतेर्विधेश्च विधेयस्वभावनैकगोचरत्वेन विधेश्च भावनाक्षेपकत्वाद्भावनायाश्चानुष्ठेयधात्वर्थावच्छेदं विनात्मलाभाभावादवच्छेदकधात्वर्थविशेषापेक्षायां योग्यतया स्थापनावगतिं सूचयितुं भावनाग्रहणं विधेरश्रुतत्वात् सत्तायाश्चाननुष्ठेयत्वेन विधानानर्हत्वात् अश्रुतविधिकल्पनानुपपत्तेर्न तावद्विध्यन्यथानुपपत्त्या भावनाक्षेपस्तदवच्छेदकस्थापनाख्यधात्वर्थविशेषाक्षेपो वा युक्तः। अविधेयत्वेन चाङ्गत्वायोगात् न स्तोत्राङ्गत्वकल्पिततत्सामीप्यसम्पादनायापि सन्निधिस्थापनाक्षेपो युक्तः सामीप्यसम्पादनरूपेण विधेयत्वादङ्गत्वम् अङ्गत्वं विना सामीप्यासिद्धेरितरेतराश्रयत्वं स्यादित्यभिप्रेत्य निराकरोति * नेति * अग्नेस्तु सन्निधिस्थापनस्य विधानं प्रकरणग्रहणं च युक्तमिति पूर्वपक्षोक्तदृष्टान्तवैषम्यमाह * अग्निमिति * अथ त्विति भाष्यमपि चेत्यनेनापि पूर्वपक्षस्यैव निरासान्मध्ये सिद्धान्तसमर्थनस्यासङ्गतत्वादयुक्तमाशङ्क्याग्नेयो ऽष्टाकपालो भवतीत्यादिवदिहाप्यावश्यककल्प्यं भवति वाच्यभावनाख्यप्रयोज्यव्यापाराक्षिप्तभावनाख्यप्रयोजकव्यापारविध्यन्यथानुपपत्त्या पञ्चदशसंख्यैराज्यैः स्तोत्रोपकारं भावयेदिति विनियोजकवाक्यकल्पनयाज्यानां स्तोत्रसम्बन्धसिद्धेः श्रुतस्य संख्यासम्बन्धमात्रविधानान्न वाक्यभेद इति वाक्यभेदपरिहाराशङ्कानिरासार्थत्वेन व्याख्यातुमाह * सिद्धान्तेन चेति * गुणविधिकल्पनायामपि न लक्षणेति पूर्वपक्षिणोक्तं तन्निरासार्थमपि चेति भाष्यमुदाहृतवाक्ये स्तोत्राज्यसामानाधिकरण्यानुपादानादयुक्तमाशङ्क्योत्पत्तिवाक्याभिप्रायेण व्याचष्टे * यदि त्विति * अनेन च यदि वाक्यभेदपरिहारायोत्पत्तिवाक्यविहिताज्यानुवादेन पञ्चदशत्वं गुणो विधीयते ततः सामानाधिकरण्यसिद्ध्यर्थमाज्यशब्देन मत्वर्थलक्षणया विहितेष्वाज्येषु गुणविध्यापत्तेर्लक्षणैव दोष इत्येवं भाष्यं व्याख्यातम्। उत्पत्तिवाक्ये तृतीयानिर्दिष्टानामप्याज्यानां गुणविधौ करणत्वाविवक्षासूचनार्थौ भाष्ये प्रथमानिर्देशः संसर्गित्वेनाज्यानाम् अनेकेषामप्येकत्र मेलने सत्येकत्वापत्तेः पृथ-

त्कनिवेशिपञ्चदशत्वयोगासम्भवात्पञ्चदशाज्यपात्राणीत्याज्यभेदा-
पादकाज्याधारभूतपात्रलक्षणापि गुणवाक्ये स्यादित्याह * संसर्गे-
ति * पलादिपरिमाणभेदे ऽपि पात्राभेदं विनाज्ये भेदबुद्ध्यनुपपत्तेः
पलादिपरिमाणावच्छेदकपात्रभेदोपलक्षणार्थं पलादिग्रहणम् अतः
कर्मनामधेयानीति भाष्यं गुणवाक्यगतानामप्याज्यादिशब्दानां गु-
णविधित्वे वाक्यभेदापत्तेरुत्पत्तिवाक्यगतानां नामधेयत्वस्यासम्ब-
द्धत्वापत्तेरयुक्तमाशङ्क्योपपादयितुमाह * तेनेति * गुणवाक्यव्य-
वहारस्योत्पत्तिवाक्यावगतार्थाधीनत्वेन गुणवाक्ये गुणविधिनाम-
धेयविचारानुपयोगात् उत्पत्तिवाक्यगतानामेवाज्यादिशब्दानां ना-
मधेयत्वसिद्ध्यर्थं गुणवाक्ये गुणविधित्वे वाक्यभेदापादनात् ना-
सम्बद्धतेत्याशयः । यत्त्विति भाष्येण न चैते कर्मणि प्रसिद्धा
इति पूर्वपक्षोक्तं प्रसिद्ध्यभावात्कर्मनामत्वासम्भवमनुभाष्यावयव-
प्रसिद्ध्येत्यादिनावयवोपयोगेन प्रसिद्धिमुपपाद्य तस्मादित्यनेनोप-
संहारः कृतः सो ऽतः कर्मनामधेयानीत्यनेन पुनरुक्त इत्याशङ्क्य सर्व-
हेतुसङ्कलनार्थत्वादपौनरुक्त्यं सूचयितुमाह * गुणवाक्येति * २९४।२
अपि चेति भाष्योक्तसामानाधिकरण्यलक्षणहेतुसङ्कलनार्थं समभि-
व्याहृतेन चेत्युक्तम् । अस्यान्वयहेतुत्वसूचनार्थश्चकारः आज्यार्थ-
वादं पठित्वा व्याचष्टे * यदाजिमिति * प्रजापतिर्देवेभ्य आत्मानं
यज्ञं कृत्वा प्रायच्छत्ते ऽन्योन्यस्माअग्रायणातिष्ठन्त तानब्रवीदाजि-
मस्मिन्नितेतित आजिमायन्निति अर्थवादोपक्रमव्याख्यान्वाख्यानरूप-
ताप्रदर्शनार्थमस्मिन् यज्ञे काष्ठां गच्छतेति प्रजापतिवचनादेतानि
स्तोत्राणि काष्ठां कृत्वा यस्मादाजिगता देवास्तस्मादाज्यार्हत्वादेषा-
माज्यत्वमित्यर्थवादार्थः । स्पर्शनवचनात्पृष्ठानीति पृष्ठशब्दव्युत्पत्ति-
प्रतिपादनार्थं भाष्यं स्पर्शनानिमित्तपृष्ठशब्दप्रतिपादनपरार्थवादाश्र-
वणादयुक्तमाशङ्क्योपपादयितुमाह * तर्थेति * पृष्ठानि वा असृ-
ज्यन्त इत्युक्ते कथमसृज्यन्तेत्यपेक्षायामापो वा ऋत्वियमार्छन्ता-
सां वायुः पृष्ठे व्यवर्त्तत इत्यार्त्तवयुक्तानामपां पृष्ठे वायोर्विवर्त्तन-
मृतुमत्यामिव स्त्रियां पुंसो ऽभिधीयमानं मैथुनात्मकं स्पर्शनमेव
पृष्ठाख्यस्तोत्रसाधनत्वनिमित्तपृष्ठशब्दवाच्यं रथन्तरादिसृष्टिहेतु-
त्वेनोक्तं भवतीत्याशयः । विवर्त्तनशब्दस्य मैथुनाख्यस्पर्शवा-
चित्वं द्योतयितुं पृष्ठइत्युक्तं स्पर्शनवचनस्य कैमर्थ्यापेक्षायां पू-
र्वोक्तायाः पृष्ठसृष्टेर्हेत्वाकाङ्क्षापूरणार्थत्वेनापेक्षिताभिधानसिद्ध्यर्थं पृ-
ष्ठोत्पत्तिहेत्वभिधानार्थत्वावगमादुत्पाद्योत्पादकभावाभिधानस्य च
कैमर्थ्यापेक्षायां पशवो वै बृहद्रथन्तरे इत्युपक्रमस्याभिधा-

५४

नेन रथन्तरादिषु पृष्ठशब्दव्युत्पत्तिनिमित्तप्रतिपादनार्थत्वाव- गमाद्रथन्तरादीनित्युक्तम् । अनेन च स्पृशेर्धातोरौणादिके थक्प्रत्यये कृते तिथपृष्ठगूथप्रोथा इति सूत्रेण सकारलोपे निपातिते व्रश्चादिसूत्रेण च शकारस्य षकारादेशे कृते ष्टुत्वे च कृते पृष्ठशब्द- व्युत्पत्तिरुक्ता भवति न न्वापो वा ऋत्वियमाच्छेॅन्नित्युपक्रम्य ततो वसुवामं समभवत् तन्मित्रावरुणौ पर्यपश्यतां तावब्रूतां वामं मया- इदं देवेष्वाजनीति तस्माद्वामदेव्यमित्यनन्तरं वामदेव्यशब्दप्रवृत्तिनि- मित्ताभिधानाद्वामदेव्यादिष्वेव पृष्ठशब्दप्रवृत्तिनिमित्ताभिधानार्थता- स्यावसीयते न रथन्तरबृहद्वैरूपवैराजशाक्वररैवतेष्वित्याशङ्क्याह * तत्प्रकृतित्वाच्चेति * अयमाशयः पृष्ठैः स्तुवतइत्युत्पत्तिवाक्ये स्तो- त्रसामानाधिकरण्यात् पृष्ठशब्दस्य स्तोत्रमेव वाच्यं न रथन्तराद्यपि र- थन्तरं पृष्ठं भवतीत्यादौ पृष्ठशब्दस्य साधनलक्षणार्थत्वात्सामानाधि- करण्यं रथन्तरं पृष्ठाख्यस्तोत्रस्य साधनं भवतीत्यर्थः । पृष्ठैरुपति- ष्ठतइत्यादौ तु रथन्तरादिषु पृष्ठशब्दप्रसिद्धिसिद्ध्यर्थमनेनार्थवादेन च प्रवृत्तिनिमित्ताभिधानम् । पशवो वै बृहद्रथन्तरम् इत्युपक्रमवशात् प्रतीयते वामदेव्यनौधसश्यैतेषु ज्योतिष्टोमे पृष्ठशब्दाभावात्कथं पृष्ठा- न्यसृज्यन्तेति बहुवचनमित्यपेक्षायां पृष्ठशब्दवाच्यरथन्तरादिप्रकृति- त्वेन तेषामौपचारिकपृष्ठत्वप्रदर्शनार्थस्य पिता वै वामदेव्यं पुत्राः पृष्ठानीति अर्थवादस्य तत्पृष्ठेषु न्यदधुरिति अस्य चावसरप्रदर्शनार्थं ततो वामदेव्यमित्याद्युक्तम् इति पृष्ठैः स्तुवतइत्येतत्तु बहुवचनं प्राण- भृत उपदधातीतिवत् लिङ्गसमवायादिति सप्तमे वक्ष्यते तत्र हि विश्वजित्सर्वपृष्ठो भवतीति उदाहृत्य किमयं पृष्ठशब्दोऽतिदेशार्थो न वेति विचारयितुं ज्योतिष्टोमिकपृष्ठविषयोऽयं पृष्ठशब्दः षाडहि- कपृष्ठविषयो वेति सन्दिग्धे विश्वजितो ज्योतिष्टोमपूर्वकत्वात् तत्र च पृष्ठैः स्तुवतइति सप्तदशानि पृष्ठानि इति बहुवचनवशेन माहे- न्द्रादिषु चतुर्षु स्तोत्रेषु पृष्ठशब्दवाच्यत्वावगतेः । पृष्ठबहुत्वसम्भ- वादतिदेशप्राप्तज्योतिष्टोमिकपृष्ठानुवादत्वान्नातिदेशार्थोऽयं पृष्ठश- ब्द इति विश्वजिति सर्वपृष्ठे तत्पूर्वकत्वात् ज्योतिष्टोमिकानि पृष्ठान्य- स्ति च पृष्ठशब्द इतिसूत्रेण पूर्वपक्षयित्वा बृहद्वा रथन्तरं वा पृष्ठं भ- वतीत्येकस्यैव पृष्ठस्य ज्योतिष्टोमे विकल्पेन विधानात् पृष्ठबहुत्वाभा- वेन सर्वशब्दायोगात् षाडहिकानामेव रथन्तरबृहद्वैरूपवैराजशाक्- ररैवतानां षण्णां पृष्ठानामतिदेशार्थः पृष्ठशब्द इति षडहाद्वा तत्र हि चोदनेति सूत्रेण सिद्धान्तयिष्यते।ननु ज्योतिष्टोमे पृष्ठबहुत्वाभावेन

---

१ नकाररहितः वर्णमिति पा० २ पु० दृश्यते ।

बहुवचनानुपपत्तिः स्यात् इत्याशङ्कानिरासायोत्पन्नाधिकारो ज्योतिष्टोम इतिसूत्रेण माहेन्द्रस्तोत्रस्यैव बृहद्वा रथन्तरं वा पृष्ठं भवतीति वाक्येन ज्योतिष्टोमे पृष्ठत्वावधारणात् वामदेव्यनौधसश्यैतानां पृष्ठत्वाभावादुत्पन्नानि चान्यतः पृष्ठत्वेनावगतानि स्तोत्राण्यधिकृत्य पृष्ठशब्दप्रयोगात् प्रमाणान्तरापेक्षत्वेन लिङ्गसमवायात् पुरोडाशानलङ्कुर्वित्यादिबहुवचनोपपत्तिरित्युक्तम्। ननु पृष्ठैः स्तुवतइति पृष्ठशब्दस्य स्तोत्रनामत्वे रथन्तरादिविषयपृष्ठशब्दप्रसिद्ध्यर्थो ऽयमर्थवादो ऽनर्थकः स्यात्। न च पृष्ठैरुपातिष्ठतइत्येतद्वाक्यगतरथन्तरादिविषयपृष्ठशब्दप्रसिद्ध्यर्थो ऽयमर्थवादो युक्तस्तस्याभित्वेत्यादृग्वाचित्वस्य सप्तमे वक्ष्यमाणत्वात् तत्र ह्ययं पृष्ठशब्दो हिङ्कारादिपृष्ठधर्मातिदेशार्थो न वेति विचारयितुङ्किमयं स्तोत्रवाची ऋग्वाची वेति सन्दिह्य चित्राधिकरणे स्तोत्रक्रियावाचित्वेन स्थितस्य पृष्ठशब्दस्येहानेकार्थदोषप्रसङ्गादृक्द्रव्यवाचित्वकल्पनानुपपत्तेर्मुख्यानां च पृष्ठानाम् अन्यत्र क्रियावाक्ये विनियुक्तानामिह विनियोगात् मासमग्निहोत्रं जुहोतीतिवद्धर्मातिदेशार्थतेति कर्मणि पृष्ठशब्दः स्यात्तथाभूतोपदेशादिति सूत्रेण पूर्वपक्षिते ऽभिधानोपदेशाद्वा विप्रतिषेधाद् द्रव्येषु पृष्ठशब्दः स्यादिति सूत्रेणाभित्वा शूरेत्याद्यानामृचामयं पृष्ठशब्दो वाचक इति सिद्धान्तयिष्यते उपान्मन्त्रकरणइति उपपूर्वकात्तिष्ठतेर्मन्त्रकरणे ऽर्थे वर्त्तमानादात्मनेपदस्मृतेः समीपस्थाने च मन्त्रस्य करणत्वायोगादभिधानार्थोपस्थानवाचित्वं धातोः कल्पयित्वोपस्थानकार्यमभिधानं कुर्वतो मन्त्रस्योपस्थाने ऽपि यागस्य कार्यफलं प्रति ग्रहणायोग्यत्वं कुर्वतां यजमानसंस्काराणां याग इव करणत्वोपपत्तेरभिधानार्थमग्निसमीपे तिष्ठेदित्याख्यातपदार्थावगमात् समभिव्याहृतस्य पृष्ठशब्दस्य स्तोत्रक्रियावाचित्वे सत्यात्मनेपदविप्रतिषेधापत्तेस्तत्परिहारार्थं पृष्ठाख्यस्तोत्रसाधनत्वेनान्यत्र विनियुक्तासु ऋक्षु लक्षणया प्रवृत्त्युपपत्तेः।

कुशा दर्व्यादयो मन्त्रा ब्राह्मणाश्च बहुश्रुताः।
न ते निर्माल्यतां यान्ति विनियोज्याः पुनः पुनः॥

इतिस्मृतेश्च मन्त्राणां विनियुक्तविनियोगाविरोधात् ऋग्वाच्ययं पृष्ठशब्द इति सूत्रार्थः। अतो ऽर्थवादाद्रथन्तरादीनां पृष्ठत्वं तत्प्रकृतित्वाद्वामदेव्यादीनामित्ययुक्तम्। उच्यते रथन्तरादिगीतिविशिष्टानामेव ऋचां पृष्ठसाधनतया पृष्ठशब्देन लक्षयितुं शक्यत्वादन्यथा चाऽभित्वाद्यृग्विशेषप्रतीतावपि करणाभावाद्विशेषणे च पूर्वसम्प्रत्ययाद्रथन्तरं पृष्ठं भवतीत्यादौ च रथन्तरादिषु पृष्ठशब्दप्रयोगा-

तू साम्नो ऽपि चाभिधायकाक्षराभिव्यक्तिद्वाराभिधाने ऽपि स्तुतौ करणत्वोपपत्तेर्न ऋग्वाचित्वाभिधानाद्रथन्तरादिवाचित्वं पृष्ठशब्दस्य प्रसिद्धं किं त्वनुज्ञातमेवेत्यदोषः । द्रव्यसंख्यारूपानेकार्थप्रतिपादितवाक्यभेदपरिहाराशङ्कानिराकरणभाष्यमधिकरणसिद्धान्तोपसंहारादनन्तरम् असङ्गतत्वादयुक्तमाशङ्क्यापकृष्य व्याख्येयमित्याह * द्वावेताविति * भाष्यकृता तु प्रधानतो ऽभिसम्बन्ध इत्यनेनैव सूत्रावयवेनावृत्त्या प्रधानक्रियोपादाने सत्येव क्रियावशीकारात्तदभिमुखीभूतयोर्द्रव्यसंख्ययोर्विशेषणविशेष्यसम्बन्धः स्यात् न त्विह प्रधानक्रियोपादानमस्तीत्येवमेषा शङ्का निराक्रियते इति सूचनायैतावता शङ्कापरिहारावन्ते कृताविस्यदोषः। आशङ्कानिराकरणार्थं विशिष्टानामिति भाष्यं विशिष्टवाचिशब्दाभावे ऽप्यरुणैकहायनीवदग्नये शुचये ऽष्टाकपालं निर्वपेदिति वद्धा सामानाधिकरण्यमात्रेण विशिष्टप्रतीतिसम्भवादयुक्तमाशङ्क्याह * विशिष्टानामिति * अयमाशयः गौरश्व इतिवत्परस्परसामीप्यैकविभक्तिनिर्देशमात्रेण सामानाधिकरण्यायोगान्नारुणैकहायन्योस्तद्वशाद्विशेषणविशेष्यभावावगतिः किं तु निर्द्रव्यगुणस्यामूर्त्तत्वेन क्रियासाधनत्वानुपपत्तेर्निर्गुणस्य च द्रव्यस्यानुपादेयत्वेन क्रियासाधनत्वानुपपत्तेर्द्वयोश्चैकक्रियानुगृहीतत्वेन द्रव्यगुणान्तरानपेक्षकत्वात् क्रियासाधनत्वानुपपत्त्याग्निशुच्योस्तु देवतात्वेनान्वयात् तस्य चोद्देश्यत्वमात्रेण क्रियासाधनत्वात् अमूर्त्तस्य निर्गुणस्यापि चोद्देश्यत्वोपपत्तेः क्रियासाधनत्वान्यथानुपपत्त्या विशेषणविशेष्यभावानवगमे ऽपि तदनभ्युपगमे प्रत्येकमन्वयायाख्यातावृत्त्यापत्तेः प्रधानभूताख्यातावृत्तेश्चात्यन्तान्याय्यत्वात् प्रत्येकं च देवतात्वापत्तेर्गुणभेदेनादृष्टकल्पनागौरवापादककर्मभेदप्रसङ्गादेकक्रियावशीकारावसायास्तदन्यथानुपपत्त्या विशेषणविशेष्यभावावगतिः। पदञ्चशान्याज्यानीत्यत्र तु प्रधानभूतसाध्यक्रियावाच्याख्याताश्रवणात् न तस्य सामानाधिकरण्यनिर्देशमात्रेण विशेषणविशेष्यभावावगतिः सम्भवतीति। नन्वित्याशङ्काभाष्यमाख्यातनिरपेक्षस्य समभिव्याहारमात्रस्य विशिष्टावगतिकरणत्वानुपपत्तेरुक्तत्वादयुक्तमाशङ्क्याह *नन्विति * न तत्पदद्वयमपीत्याशङ्कानिराकरणभाष्यं तस्य किलायमाशयः पञ्चदशान्याज्यानीत्यत्र विशेषणविशेष्यभूते द्रव्यसंख्ये विधीयेते अनूद्येते वा एकानुवादेनेतरविशिष्टता वा विधीयते तत्रोभयोर्विधाने परस्परनैरपेक्ष्याद्विशेषणविशेष्यभावो न स्यात् लोके कचिद्विशेषणविशेष्यभावेन प्राप्तयोर्द्रव्यसंख्ययोरनुवादे श्रुतस्य प-

दद्वयस्यानुवादव्यापृतत्वेन स्तोत्रसम्बन्धविधायकत्वाभावात्तत्सम्बन्धानुपपत्तेरानर्थक्यापत्तिः स्वरूपेण चैकमनूद्येतराविधानानर्थक्यापत्तेः स्तोत्रसम्बन्धित्वेन चैकस्याप्यप्राप्तेर्नैकानुवादेनेतरविशिष्टता विधातुं शक्येति तत्रैकभवतिक्रियावशीकारेणोभयोर्विधीयमानयोररुणैकहायन्यादिवद्विशेषणविशेष्यभावोपपत्तेरनुपपत्तिमाशङ्क्याह *न तदिति* भवतिवाच्यायाः सत्ताख्यायाः क्रियाया द्रव्यसंख्यैः प्रत्यात्मलाभोपकारजननेन गुणवत्त्वात्प्राधान्याभावेनोभयवशीकारसामर्थ्यं नास्तीत्याशयः। ननु निर्द्रव्यायाः संख्यायाः निःसंख्यस्य च द्रव्यस्यात्मलाभाभावात् कथं सत्तायाः प्रत्येकवर्त्तितेत्याशङ्क्याह* पञ्चदशानीति*अर्थाक्षिप्तयत्किञ्चित् द्रव्यसंख्याक्षेपे ऽप्यप्रधानभूतया क्रियया वशीकर्त्तुमशक्यत्वात् नान्योन्यनियमसिद्धिरित्याशयः। नन्वेकक्रियावशीकाराभावे ऽपि द्रव्यसंख्ययोरितरेतरापेक्षायां सन्निधानेनैतरयोरेव परस्परनियमाद्विशेषणविशेष्यभावो भाविष्यतीत्याशङ्क्याह * तस्मादिति * एकक्रियावशीकारसम्भवे तद्वशेन विशेषणविशेष्यभावापत्तेः संख्याविशिष्टद्रव्यविधिः शङ्कितुं शक्यते तदसम्भवे तु स्वतन्त्रयोरेव विधानापत्तेस्तस्य च वाक्यभेदप्रसङ्गेनासम्भवात् पाश्चात्येन विशेषणविशेष्यभावेन विधानकालीनस्य वाक्यभेदस्य परिहर्त्तुमशक्यत्वात् नोभयविधिः सम्भवतीत्यर्थः। अविधायक इतिभाष्यावयवं व्याख्यातुमाह * न चेति * यादृशः क्वचिल्लोके पञ्चदशघटनिक्षिप्तेष्वाज्यपञ्चदशत्वयोर्विशेषणविशेष्यभावः प्राप्तस्तादृशस्य स्तोत्रेषु विधायकाभावेनाभावात् स्तोत्रेषु विधायकाभावेनाभावात् स्तोत्रसम्बन्धित्वेन विधानानुवादायोगात् स्वतन्त्रानुवादे त्वानर्थक्यप्रसङ्गान्नोभयमनुवादकमित्यर्थः। एकमत्रेति भाष्यावयवं प्राक् पठितमपि उभयविध्यनुवादासम्भवाधीनसिद्धित्वात् पश्चाद्व्याचष्टे * तस्मादिति * नन्वेवं सत्याज्यानुवादेन तेषां पञ्चदशत्वसंख्याविशिष्टविधिराशङ्कावाद्युक्तः सिध्येदित्याशङ्क्याह * नामधेयत्वइति * स्तोत्रनामत्वे सत्याज्यशशब्दस्याज्यैः स्तुवतइत्येतद्वाक्यप्राप्तान्याज्यान्यनूद्य संख्याविशिष्टत्वं विधातुं शक्यं घृतानां त्वप्राप्तत्वान्नानुवादः सम्भवतीत्याशयः। अनेन चास्य भाष्यावयवस्याशङ्कानिराकरणमध्यगतस्यापि लिङ्गबलीयस्त्वात्सिद्धान्तासिद्ध्यर्थतोक्ता लिङादिरहितस्य विध्यशक्तेर्विधायकशब्दानुपपत्तिमाशङ्क्याह * विधायकमिति * ननु संख्याविशिष्टाज्यविध्यसम्भवे ऽपि पञ्चदशान्याज्यानि स्तोत्रेषु भवन्तीत्याज्यस्य पदस्य स्तोत्रसंख्यापदाभ्यां तत्र सम्बन्धादर्थाद् द्रव्यसंख्ययोर्विशेष-

णाविशेष्यभावो भविष्यतीत्याशङ्क्य वैरूप्यापादनेन तन्त्रसम्बन्धनिरासार्थं न चात्रैकमाज्यपदं विशेषणं संख्यां प्रत्युद्देशकमितिभाष्यं वाजपेयाधिकरणवक्ष्यमाणस्य तन्त्रसम्बन्धनिरासस्यानागतावेक्षणन्यायेनेहाभिधानार्थमिति सूचनायोपेक्षितम् । डप्रत्ययान्तशब्दसामानाधिकरण्यलिङ्गादप्याज्यपृष्ठशब्दयोः स्तोत्रनामतावसीयतइत्याह * पञ्चदशानीति * क्रियामानस्य कारकमानाधीननिरूपणत्वात् घृतानां च कथं चिदुपस्थापकत्वेनोपकारकत्वसम्भवे ऽप्यवाचकत्वेन गुणवत्त्वाभिधानलक्षणां स्तुतिं प्रति कारकत्वायोगात् तृतीयया साधकतमत्वोपचारे ऽपि मुख्यसाधकतमत्वासम्भवात् न तत्संख्यया मुख्यं स्तोमत्वमवसीयतइत्याशयः ॥ २ ॥

॥ अथ अग्निहोत्रादिशब्दानां यागनामधेयताधिकरणम् ॥ ३ ॥

२९५।१ तत्प्रख्यं चान्यशास्त्रम् ॥ ४ ॥

निरूढानिरूढत्वेन द्विविधस्यापि नामधेयस्य विचारितत्वादुत्तराधिकरणद्वयानर्थक्यमाशङ्कते * नन्विति * पूर्वोक्तगुणविधिनिरासहेत्वभावादिह हेत्वन्तरेण निरासार्थं चिन्तेति परिहरति * उच्यतइति * वाक्यभेदासम्भवाच्चिन्तेत्यनुषङ्गः । तत्रेह तत्प्रख्यान्यशास्त्रसद्भावेन गुणविधिनिराकरणमुत्तरत्र तद्व्यपदेशान्यशास्त्रसद्भावेनेति विवेकः । यथा चाज्यादिशब्दानां गुणवाक्यगतवाक्यभेदालोचनेन गुणविधित्वनिरासस्तथाग्निहोत्राघारशब्दयोरपि गुणवाक्यगततत्प्रख्यान्यशास्त्रलोचनेनेत्यनन्तरसङ्गतिः । तद्व्यपदेशस्य त्वर्थवादगतत्वाद्वैलक्षण्यं, न च यौगिकत्वसाम्यमात्रेण उद्भिदधिकरणानन्तरमेतदारब्धुं युक्तं सामानाधिकरण्यनिरपेक्षस्य यौगिकत्वस्य नामधेयासाधकत्वेना किं चित्करत्वात्तत्प्रख्यत्वपरिहारसंभवासम्भवाभ्यां च सन्देह इति सर्वमनवद्यम् । अग्निहोत्रशब्दस्य देवतालक्षणगुणविधित्वाभिधानार्थं गम्यते हीति भाष्यं चतुर्थीसमासलक्षणाभावादयुक्तमाशङ्क्याह * तत्रेति * ननु सिद्धान्ते प्रमाणान्तरावगतार्थानुवादत्वात्तेन चाग्नेर्दैवतात्वावगतेस्तदनुसाराच्चतुर्थीबहुव्रीह्यङ्गीकरणं युक्तं, विधिपक्षे तु प्रमाणान्तराभावान्न लक्षणा । ननु गतसमासाङ्गीकरणं युक्तमित्याशङ्क्यान्येत्युक्तम् । षष्ठीतत्पुरुषे सम्बन्धविशेषानवधारणेन व्यवहारसिद्धेः सर्वहोमानां चान्याधारत्वस्य यदाहवनीयवाक्यादेव प्राप्तेः सप्तमीबहुव्रीह्यानर्थक्याल्लक्षणाननुगतत्वाद्विशेषाच्च समासान्तरानुपपत्तेः पारिशेष्याच्चतुर्थीबहुव्रीहिरेवावसीयतइत्याशयः । न चेति भाष्ये वक्ष्यमाणं

चोद्भिन्न्यायवैषम्यं वहुव्रीह्यङ्गीकरणस्य प्रयोजनमित्याह * अन्तर्णीतेति * प्रसिद्ध्यादिहेतुत्रयं विक्षिप्योक्तं सङ्कलय्य पूर्ववद्व्याख्येयमित्याह * तएव चेति * पूर्वव्याख्यातिदेशार्थस्तत्त्वोपचारः। ननु गौरवभयेनेहाप्युद्भिच्चित्रादिवद्विशिष्टविध्यनाश्रयणाद्यदग्नये च प्रजापतये च सायं जुहोति यत्सूर्याय च प्रजापतये च प्रातर्जुहोतीति वाक्ययोरनेकगुणोपादानात्कर्मानुवादेन गुणमात्रविधौ वाक्यभेदापत्तेर्गुणविशिष्टकर्मविधानावगमात् तद्विहितयोः कर्मणोः सन्निधानादग्निहोत्रशब्दो गुणविधिः प्रसज्येत तत्र च सायं होमे ऽग्नेः प्राप्तत्वावगमात्तत्प्रख्यशास्त्रान्तरसद्भावे चानर्थक्यापत्तेर्नाग्न्याख्यदेवताविधिर्युक्त इत्याशङ्क्याह * सत्यामिति * तद्वर्ज्जमित्यनेनोभयोः सन्निधानाविशेषे ऽपि प्राप्तत्वात् सायं होमवर्जनमिति दर्शितम्। उत्पत्तिशिष्टसूर्यप्रजापत्यवरुद्धे ऽपि प्रातिर्होमे ताभ्यां सह समुच्चयेन विकल्पेन वाग्निर्निवेक्ष्यते यद्वाग्निहोत्रं जुहुयात्स्वर्गकाम इत्यत्र वाक्ये ऽग्निहोत्रशब्देन फले विधीयमानो गुणः प्रकृताश्रयापेक्षायां सायं होमे ऽग्न्याख्यस्य गुणस्यान्यतः प्राप्तेरभिधेयतया फलान्वयायोगेनाश्रयान्तरापेक्षत्वात् प्रातर्होममाश्रयत्वेन गृह्णन्नित्यतद्गुणं सूर्यादिकं वाधित्वा निवेक्ष्यते यद्वा यज्जुहोति तत्सूर्याय च प्रजापतये चेति चशब्देनान्योन्यसापेक्षस्यैव देवताद्वयस्य क्रियान्वयप्रतीतेः प्रतिकारकं प्रत्ययव्यापाराभावादनेकगुणोपादाने ऽपि वाक्यभेदानापत्तेः सूर्यवाक्यस्यापि गुणसञ्चरितविधिशक्तत्वेन कर्मोत्पादकत्वाभावात् सूर्यप्रजापत्योरुत्पत्तिशिष्टत्वाभावेन वलीयस्त्वानुपपत्तेः सायं च प्रातश्च जुहोतीत्यस्यानुपादेयकालसम्वन्धात् प्रकरणान्तरन्यायेनाश्विनवाक्यवत् पूर्वपक्षे कर्मविधित्वावगमात्तस्य चासम्भवद्विकल्पसमुच्चयसायम्प्रातःकाललक्षणगुणद्वययोगेन यदाग्नेयो ऽष्टाकपाल इतिवत् कर्मद्वयविधायकत्वावगतेस्तद्विहिते प्रातर्होमे वाक्यान्तरविहिताभ्यां सूर्यप्रजापतिभ्यां सह तुल्यवलत्वाद्विकल्पेनाग्निहोत्रवाक्यमग्निं विधास्यतीति वक्ष्यमाणानुषङ्गेण वाक्यं पूरणीयम्। भाष्यकृता तु सायं च प्रातश्च जुहोतीत्येतद्वाक्यविहितस्य कर्मद्वयस्य यदग्नये च सूर्याय चेति वाक्याभ्यां सायम्प्रातःकालविशिष्टकर्मविशेषानुवादेन देवताविधायकाभ्यां विहितेनाग्निसूर्यादिना नैराकाङ्क्ष्यात्सन्निहिते ऽपि तस्मिन् अग्निहोत्रवाक्येन गुणविधानाशक्तेर्दूरस्थेष्वप्यविहितदेवताकेषु जुहोतिचोदितेषु दर्विहोमशब्दवाच्येषु गुणविधिरित्युक्तम्। तदुपपादयति * होमेति * सूर्याग्निवाक्ययोः कालदेवता-

विशिष्टकर्मविधायित्वे सायम्प्रातर्वाक्यस्य तत्र कालविधायित्वायोगादत्रत्यपूर्वपक्षे चाग्निहोत्रवाक्यस्य कर्मविधायित्वाभावात्कालविशिष्टकर्मविधायित्वापत्तेस्तद्विहिते ऽपि कर्मणि जुहोतिचोदितत्वाद्वर्विहोमशब्दवाच्ये देवताविधिं वक्तुं सर्वशब्दः । नन्वेवं सन्निहित एव सायम्प्रातर्वाक्यविहिते कर्मणि गुणविध्युपपत्तेर्दूरस्थेषु विधिर्न युक्त इत्याशङ्क्य होममात्रेत्युक्तं सूर्याग्निवाक्ययोः कालविशिष्टकर्मानुवादेन देवताविधायकतया विशेषरूपत्वात् तद्विहितदेवतावरुद्धे कर्मणि सन्निहिते ऽप्यग्निहोत्रवाक्यं होममात्रानुवादेन देवताविधायकतया सामान्यरूपत्वात् ततो दुर्बलं न शक्नोति देवतान्तरं विधातुमित्याशयः । नन्वसन्निहितस्य कर्मणो प्रत्यभिज्ञानात् कथमनुवाद इत्याशङ्क्यैकवाक्योपात्तजुहोतिसामर्थ्यात् प्रत्यभिज्ञानोत्पत्तिरुक्ता। नन्वाघारमाघारयतीत्येतद्वाक्यविहिते कर्मणि चतुर्गृहीतं वा एतदभूत्तस्याघारमाघार्य त्रिरितः प्राचीनं प्रयाजान् यजतीति वाक्यान्तरेणाघारशब्दवाच्यस्य क्षरणार्हद्रवद्रव्यस्य चतुर्गृहीतस्याज्यविशेषरूपेण प्राप्तत्वात् सामान्यविधेश्चाविशेषोपसंहारेण पयःप्रभृतिद्रवद्रव्यान्तरप्रापकत्वायोगात्तत्प्रख्यशास्त्रान्तरसद्भावेनाघारशब्दस्य गुणविधित्वं न युक्तमित्याशङ्क्याघारश्चेति भाष्येणाघारशब्दवाच्यं द्रव्यमात्रमुपांशुयाजे विधीयतइत्युक्तं तदुपपादयितुमाह * तथेति * ननु क्षारितस्य नष्टत्वात्कथं प्रयोजनापेक्षेत्याशङ्क्याह * धर्ममात्रं चेति * प्रतिपत्त्यर्थत्वे दृष्टार्थत्वात् सर्वस्य क्षारणं स्यात् इदं त्वदृष्टसंस्कारार्थत्वात् शब्दमात्रे ऽनुष्ठिते ऽपवृज्येतेत्यर्थं * तत्क्षारितेति* तस्मादित्यर्थे तदित्यव्ययम्। ननु यदि सोमं न विन्देत पूतीकानभिषुणुयादित्यभिषवस्य स यदि राजन्यं वा वैश्यं वा याजयेत् स यदि सोमे विभक्षयिष्येन्यग्रोधस्तिभिनीराहृत्य ताः सम्पिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोमामिति भक्षस्य च प्रकरणेन यागसाधनसंस्कारतया प्रत्यभिज्ञानादभिषवयुक्तानां पूतिकाख्यानां वृक्षविशेषाणां भक्षयुक्तस्य च न्यग्रोधस्यावरोधांश्च फलानि चौदुम्बराण्याश्वत्थानि प्लाक्षाणि अभिषुणुयात्तानि भक्षयेदित्यैतरेयब्राह्मणे ऽवरोधशब्दवाच्यानां स्तिभिनीनामौदुम्बरादिफलसाहित्यश्रवणात्तत्समुदायस्य भूम्ना फलचमसशब्दाभिधेयस्य यागसाधनत्वं युक्तं क्षारणस्य तु कथमित्याशङ्क्याह * लोके ऽपि चेति * क्षारणस्याप्युपयोक्ष्यमाणसंस्कारत्वेन लोके ऽवधारणात् तद्युक्तस्य द्रवद्रव्यस्यावश्यं कचित्कर्मणि साधनत्वावगतेर्युक्ता प्रयोजनापेक्षेत्याशयः । प्रयोजनापेक्षामुपसंहरति *तेनेति* ननु यदि सोमं न वि-

न्देति सोमाभावे पूतिकानां प्रतिनिधिनियमार्थेन विधिप्रतीतेस्तत्कार्यकारित्वं युक्तमाघाराख्यस्य तु द्रव्यस्य कस्य चिदभावे विध्यभावात् प्रतिनिधित्वाप्रतीतेः कथं कर्मापेक्षेत्याशङ्कानिरासाय प्रतिनिधित्वरहितदृष्टान्तातराभिधानं पूतिकादिवत् संस्कार्यत्वान्यथानुपपत्त्यास्यापि कर्माङ्गत्वावसायात् विशेषानवगतेः सामान्यतस्तावदभिलापो ऽस्तीत्यर्थः। नन्वेवमपि उपांशुयाजार्थत्वापत्तिः कथमित्याशङ्क्याह * प्रकरणेति * पार्वणहोमादिनिवृत्त्यर्थः प्रधानशब्दः नन्वक्रियात्मकत्वेन द्रव्यस्य प्रकरणग्राह्यत्वात् स्ववाक्योपात्तेनैव कर्मणान्वयो युक्तो न प्रकृतेनेत्याशङ्कानिरासार्थं वृद्धसम्मतिमाह * आह चेति * श्रुतः संस्कारेण सम्बन्धो यस्य द्रव्यस्य तन्मुख्यैः प्रथमावगतैः स्ववाक्योपात्तैः कर्मभिरसङ्गतमपि कर्मान्वयं विना संस्कारसम्बन्धायोग्यत्वात्प्रकृतैरन्वयं यातीत्यर्थः। यद्वा यदि सोमं न विन्देत यदि सोमं विभक्षयिषेदिति च मुख्ययागसाधनसोमप्रसङ्गात् पूतीकफलचमसयोस्तत्कर्मकारित्वप्रतीतेः प्रकृतकर्मान्वयो युक्तो ऽस्य तु कथमित्याशङ्कानिराकरणार्थं मुख्यैराघारणसंस्कार्यैर्द्रव्यान्तरै र्यद्यप्यसङ्गतमित्युक्तम्। एवमाघारवाक्यस्य संस्कारविधायित्वमङ्गीकृत्य संस्कार्यत्वान्यथानुपपत्त्योपांशुयाजे द्रव्यविनियोगपर्यवसायितोक्तेदानीं वाक्यस्यैवोपांशुयाजे द्रव्यविनियोजकत्वमाह * अथ वेति * नन्वाघारणलक्षणधात्वर्थभेदाच्छब्दान्तरन्यायेन भावनाभेदप्रतीतेः कथमुपांशुयाजभावनानुवाद इत्याशङ्क्याघारद्रव्यसाध्यत्वादेवेत्युक्तम्। आघारणक्रियायोगप्रवृत्ताघारशब्दवाच्येन यत् साध्यते तदाघारणमेव भवतीत्येवं प्राप्तो धात्वर्थः प्रत्ययानुग्रहायानूद्यमानो न भावनां भिनत्तीत्याशयः। नन्वत्र शुद्धभावनावाचिकरोत्यश्रवणात् शुद्धस्य चाख्यातस्याप्रयोज्यत्वात् धातुविशिष्टेन प्रत्ययेन धात्वर्थावच्छिन्नभावनानुवादपूर्वकद्रव्यविधानापत्तेः प्रागेव धात्वर्थप्राप्तिर्वाच्येत्याशङ्कानिरासायान्यथाप्राप्तिमाह * ध्रौवप्राप्तेति * तावब्रूतामग्नीषोमावाज्यस्यैव नौ उपांशु २९६।२
पौर्णमास्यां यजन्नित्यस्य कालविध्यर्थत्वेनाज्यविध्यर्थत्वासम्भवात्सर्वस्मै वा एतद्यज्ञाय गृह्यते यद् ध्रुवायामाज्यमित्याज्यप्रापकमुक्तम् एवं तर्ह्यविलीनाज्यस्य होमाशक्त्यैव व्यावृत्तेराघारशब्दस्याज्यविशेषणत्वायोगात् आनर्थक्यं स्यादित्याशङ्क्य * क्षरणेत्युक्तम् * क्षरणात्मकत्वसिद्ध्यर्थं प्रागाज्यप्राप्त्यभ्युपगमे व्यानर्थक्यपरिहारायाज्येन सह विकल्पमानं द्रवद्रव्यमात्रं विधीय-

१ संयोगादिति २ पु० पा०।

तद्दत्याशयः । ननु नामधेयत्वेनैवानर्थक्यपरिहारो भविष्यतीत्याशङ्क्याह * न चेति * क्षरणात्मकत्वविशेषस्य धात्वर्थपर्यालोचनयैव सिद्धेर्नामानर्थक्यमित्यर्थः । आघारणस्य च तस्याघारमाघार्येति त्वाश्रुत्या प्रयाजार्थजौहवचतुर्गृहीताज्यसंस्कारार्थत्वावधारणात् संस्काराणां च संस्कार्यनिष्ठत्वात्तद्विशेषेणैव विशेषसिद्धेर्नामानर्थक्यमित्याह * न चेति * आघारशब्दे गुणविध्यर्थे ऽपि मत्वर्थलक्षणा नास्तीत्यभिधानार्थमाघार इति भाष्यं गुणविधित्वेनाभिमतस्याघारशब्दस्य द्वितीयान्तत्वाद् गुणत्वाभिधानाशक्तेरयुक्तमाशङ्क्य व्याचष्टे * श्रुत्यैवेति * विधित्सितगुणप्रख्यमन्यच्छास्त्रं यस्मिन्स्तदपि नामधेयमिति पूर्वसूत्रगतयस्मिच्छब्दानुषङ्गेण[1] च सूत्रं योजयन् सिद्धान्तमाह * अत्रेति * पूर्वसूत्रनिर्दिष्टगुणपरामर्शार्थत्वेन तच्छब्दं व्याख्यातुं विधित्सिते गुणेत्युक्तम् अनेन च स विधित्सितो गुणः प्रख्याप्यते प्राप्यते ऽनेनेति विग्रहो दर्शितः । अग्निप्रजापत्योर्द्वयोः शास्त्रान्तरप्राप्तयोरग्नेः पुनर्वचनं प्रजापतिपरिसंख्यार्थमित्याशङ्क्य प्रत्यक्षश्रुतपरिसंख्यायां त्रिदोषत्वापत्तेः परिसंख्येयस्य च विध्यानर्थक्यापत्तेरयुक्ता परिसंख्येत्यभिधानार्थं प्रजापतिनिवृत्त्यर्थमित्यादिभाष्यं व्यर्थत्वोक्त्या व्याख्यातं भवति इह च सो ऽन्यतः प्राप्तो यदग्नये चेति टुप्टीकायामुक्तत्वादिहापि देवताव्यवस्थापरे वाक्ये वाक्यान्तरतः प्राप्तः कालो ऽनूद्यतइत्याधाराग्निहोत्राधिकरणे वक्ष्यमाणत्वात् भाष्यकृद्वार्त्तिककृतो ऽपि यदग्नये च प्रजापतये च सायं जुहोतीत्येतदेव तत्प्रख्यशास्त्रान्तरमभिमतं लक्ष्यते भिन्नपदोपात्तस्यापि देवताद्वयस्य चशब्दात् परस्परसापेक्षस्याख्यातान्वयप्रतीतेः । प्रत्येकं विधिव्यापाराभावात् वाक्यभेदानापत्तिश्चादीनां हि निपातोपसर्गाणां पृथक्पदत्वे ऽपि केवलाप्रयोगित्वेन स्वातन्त्र्येणार्थप्रतिपादकत्वाभावात्पदान्तरार्थातिशयद्योतनार्थत्वावधारणात् तत्समभिव्याहृतस्य नामपदस्याख्यातपदस्य वा तन्नैरपेक्ष्येण स्वार्थासमाप्तत्वात् पदान्तरान्वयानुपपत्तेश्चशब्दोपहितयोरेवाग्निप्रजापतिशब्दयोराख्यातान्वयान्नेतरेतरनिरपेक्षयोः प्रत्येकं विधिव्यापारो युज्यते अत एव गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणेति चशब्दसमुच्चितानां[2] दक्षिणात्वाद्विकृतौ धेनुर्दक्षिणेति श्रुतायाः धेन्वाः प्राकृतकृत्स्नदक्षिणाविकारत्वं द-

---

१ तत्पूर्वसूत्रगतनामधेयपदानुषङ्गेणेति २ पु० पा० ।

२ चशब्दयोगेन समुच्चितानामि २ पु० पा० ।

शमे वक्ष्यते तत्र ह्येष भूर्यैश्वदेवस्त्रिवृदे सर्वस्तस्य विश्ववत्यः स्तोत्रीया धेनुदाक्षिणेत्युदाहृत्य किं धेनुर्गवां निवर्त्तिकोतकृत्स्नाया दक्षिणाया इति सन्दिग्धे यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणमित्यनेन न्यायेन दक्षिणासम्बन्धे प्रथमं गवादीनामुपादानेनोद्देश्यत्वावगमात् उद्देश्यगतस्य चशब्दोक्तस्यापि साहित्यस्याविवक्षितत्वात् प्रत्येकं दक्षिणात्वावगतेर्गोत्वैकार्थसमवेतदोग्ध्रीत्ववाचिना धेनुशब्देन गवामेव दोग्ध्रीणां निवृत्तिंप्रतीतेरेकवचनेन च द्वादशशतसंख्यानिवृत्तिप्रतीतेर्यथा सौर्यं चरुं निर्वपेदिति निर्वापलक्षणगुणशब्दे नैष्ठिको विध्यन्तो नियम्यते तथा धेनुशब्देन गोमात्रनिवृत्तेर्नाश्वादिनिवृत्तिरिति तस्य धेनुरिति गवां प्रकृतौ विभक्तचोदितत्वात् सामान्यात्तद्विकारः स्यात् यथेष्टिर्गुणशब्देनेति सूत्रेण पूर्वपक्षयित्वा सर्वस्य वा क्रतुसंयोगादेकत्वाद्दक्षिणार्थस्य गुणानां चार्थैकत्वाद्यै विकृतौ श्रुतिभूतं स्यात्तत्समवायो हि कर्मभिरिति सूत्रेण सिद्धान्तितं तस्यार्थः सर्वस्य क्रतुदाक्षिण्यस्य धेनुर्विकारो वाधिका कुतः तस्य विश्ववत्यः स्तोत्रीया इति तच्छब्दानुषङ्गेण तस्य भूनाम्नः क्रतोर्धेनुर्दक्षिणेति कृत्स्नक्रतुसंयोगाद्विकृतौ भूनाम्नि क्रतौ प्राकृते ऽर्थे दक्षिणात्मके कार्ये श्रुतितो भूतं प्रत्यक्षश्रुत्या प्राप्तं धेनुर्द्रव्यमानुमानिकं सर्वदक्षिणावाधकं स्यात् । ननु ज्योतिष्टोमे वहुद्रव्यानतानामृत्विजां कर्मसम्बन्धावगतेस्तद्विकृतौ भुव्यप्येकद्रव्यानतानां कर्मसम्बन्धो न युक्त इत्याशङ्क्य * तत्समवायो हीत्युक्तम् * तया दक्षिणया ऋत्विजां कर्मसम्बन्धावधारणात् एकेनापि द्रव्येण दक्षिणात्वेन श्रुतेनानतानां कर्मसमवायो युक्त इत्यर्थः । ननु गवादिद्रव्यजन्यानामानतीनां भेदान्न गोजन्यानत्यर्थं विहितया धेन्वाश्वादिनिवृत्तिर्युक्तेत्याशङ्क्यैकत्वाद्दक्षिणार्थस्येत्युक्तम् । ऋत्विगानत्युपायापेक्षायामृत्विग्भ्यो दक्षिणां ददातीत्यानतिसाधनवाचिदक्षिणाशब्दस्य ददात्यन्वयाद्दक्षिणायाश्चोपादेयत्वेन विवक्षितैकसंख्यत्वात् तदर्थस्य प्रयोजनस्यानमनस्याप्येकत्वमित्यर्थः । ननु दक्षिणां ददातीत्येकवचनश्रवणे ऽपि गौश्चाश्वश्चेत्यादिवाक्ये दक्षिणासमुच्चयप्रतीतेस्तत्प्रयोजनानतिभेदो ऽवसीयतइत्याशङ्क्य गुणानां चार्थैकत्वादित्युक्तं चशब्देनेतरेतरसहितानामेव गवादीनां दक्षिणात्वप्रतीतेस्तस्य द्वादशशतं दक्षिणेत्येकवचनाच्च समुच्चितानामेव दक्षिणात्वमित्यर्थः । गवादीनामुद्देश्यत्वात् साहित्याविवक्षाशङ्कानिरासायोपादेयत्वज्ञापनार्थङ्गुणशब्देनाभिधानं दक्षिणात्वं च गवादीनां प्रत्युद्देश्यमिति ज्ञापयितुमर्थशब्देनोक्तं ततश्च यथैव गौर्दक्षिणेति न प्रत्येकं दक्षिणाशब्दः

सम्बध्यते तथात्राप्यग्नये जुहोति प्रजापतये जुहोतीति प्रत्येकमाख्यातसम्बन्धाभावान्न वाक्यभेदापत्तिः।न चैतावताग्नीषोमादिवत्समुच्चितयोर्देवतात्वापात्तिः पृथक्चतुर्थीनिर्देशेनेतरेतरनिरपेक्षयोरेव देवतात्वप्रतीतेः पदान्तरसम्बन्धे हि चशब्दात्साहित्यं प्रतीयते न विभक्तिसम्बन्धे तत्सम्बन्धात् यागपरिपूर्णस्य[1] पदान्तरेण चशब्देनान्वयानुपपत्तेः । तस्माद्देवतयोरेवात्र चशब्दात्साहित्यमवगम्यते न सहितयोर्देवतात्वं न चाग्निसूर्यवाक्याभ्यां देवताविधौ तत्प्रकाशनसमर्थयोर्मन्त्रयोर्लिङ्गादेव प्राप्तेरग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातर्जुहोतीति मन्त्रविध्योस्तदर्थशास्त्रसद्भावेनानर्थक्यं शङ्कनीयम् अग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहेति सायं जुहोति सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहेति प्रातर्जुहोतीति च मिश्रलिङ्गमन्त्रविधिपर्युदस्तयोः केवललिङ्गयोः प्रतिप्रसवार्थं विधानार्थवत्त्वोपपत्तेश्चतुर्थीतश्च मन्त्रवर्णदौर्बल्यात् प्रजापत्तेरपि च यज्ञसाधनत्वधर्मयोगात् अङ्गतेर्वा गत्यर्थादग्निशब्दव्युत्पत्तेर्हिरण्यगर्भत्वसंस्तवसामान्याद्वाग्निशब्देनैन्द्रीवद्गौण्यावृत्त्या भिधानोपपत्तेर्न चतुर्थीसद्भावे देवताप्रापकत्वं युक्तं मिश्रलिङ्गमन्त्रपक्षे च द्विदेवत्यहोमापत्तेः केवलस्याग्नेर्देवतात्वाभावान्नित्यवदनुवादो न युक्तः। प्रजापतिमात्रविधेश्चैकेनैव वाक्येन सिद्धेरन्यतरवाक्यानर्थक्यं व्यवस्थानपेक्षणाच्च सायम्प्रातःशब्दावनर्थकौ स्यातां तस्मादाघाराग्निहोत्राधिकरणे मान्त्रवर्णिकदेवताभिधानं परमतेनेति द्रष्टव्यम् । ततश्च ब्राह्मणेनाग्निसूर्ययोः शुद्धयोर्देवतात्वविधानाच्छुद्धावेवाग्निसूर्यौ द्रव्यत्यागवेलायामुद्देष्टव्यौ न मन्त्रवर्णानुसारेण ज्योतिष्ट्वगुणविशिष्टाविति यदग्नये चेति शास्त्रान्तरेण सायं होमेऽग्निविधानाच्चतुर्गृहीतं वा इत्यनेनाघाराख्ये कर्मणि द्रव्यविधानाच्चाग्निहोत्राघारशब्दयोर्विधानार्थत्वं युक्तमित्यभिधानार्थं यदग्नये चेत्यादिभाष्यं दर्विहोमोपांशुयाजयोर्गुणविधिः पूर्वपक्षोक्तस्य कर्मान्तरगतेन गुणविधिना वैयर्थ्यानापादनादयुक्तमित्याशङ्कते * अत्रेति * पूर्वपक्षिणा उक्तमपि सायंहोमे देवताविधिमाघारे च द्रव्यविधिमापाद्यैतदुक्तमित्येवं भाष्यं समाधातुमग्निहोत्रशब्दस्य तावत् परमार्थतो विधानार्थत्वैव नास्तीत्याह * उच्यतइति * यद्यग्निहोत्रशब्दो प्राप्तार्थत्वात्. विधेयसमर्पकः स्यात् ततोऽस्य विधेयगुणविषयभूतकर्मापेक्षिणः प्रकृते प्रातर्होमे दूरस्थेऽपि वा दर्विहोमे निवेशः स्याद्विशिष्टविधौ गौरवा-

---

१ यागपरिपूर्णस्य पदस्येति २ पु० पा० ।

पत्तेः। कर्मानुवादेन गुणविधानस्य युक्तत्वात् यदग्नये चेति त्वन्येन शास्त्रेणाग्नेर्होत्रेण हूयमानेन हविषा सम्बन्धे कृते प्रवर्त्तमानत्वेन प्राप्तार्थत्वादग्निहोत्रपदे ऽनुवादलक्षणं स्पष्टमित्यर्थः। न केवलं प्राप्तार्थविधानात्[1] गुणविध्यसम्भवः किं त्वनुवाद्यकर्माभावादपीत्याह * अनूद्येति * ततश्च प्रकृतकर्मानुवादेन गुणविध्युत्पत्तिशिष्टसूर्यावरोधेन प्रातर्होमे गुणविध्ययोगात् सायं होमे गुणविध्यापत्तेस्तत्र चाग्नेः शास्त्रान्तरेण प्राप्तेः सिद्धा तत्प्रख्यतेत्याह * प्रकृतमिति * ननु तत्प्रख्यतापरिहारायैवाप्रकृतौ विधिर्भविष्यतीत्याशङ्क्याह * अन्यत्रेति * प्रत्यभिज्ञायमानविषयत्वं नानुवादानां प्रकृतपरिग्रहस्य न्याय्यत्वादित्यर्थः। न केवलं तत्प्रख्यत्वात् प्रत्यभिज्ञायमानदोषाभ्यां प्रकृता ऽप्रकृतानुवाद्यकर्मालाभः किं त्वप्राप्तत्वादपीत्याह * नेति * गुणविधित्वाभावे तर्ह्यग्निहोत्रवाक्यस्य का गतिरित्याशङ्क्याह * तस्मादिति * ननु यदग्नये चेत्यादीनां ऋजुमाघारयतीत्येवमादीनां गुणसंक्रान्तिशक्तित्वात् कर्मविधायित्वासम्भवे ऽपि सायं च प्रा- २९७।२
तश्च जुहोतीत्यस्यानुपादेयकालसम्बन्धादग्निहोत्रं जुहुयात्स्वर्गकाम इत्यस्य चानुपादेयफलसम्बन्धाद्यावज्जीवमग्निहोत्रं जुहोतीत्यस्य चानुपादेयनिमित्तसम्बन्धादूर्ध्वमाघारयतीत्यस्य चानुपादेयदेशसम्बन्धात् प्रकरणान्तरन्यायेन कर्मविधायित्वात् तद्विहितयोः कर्मणोरग्निहोत्राघारशब्दौ गुणविधी भविष्यतइत्याशङ्क्याह * सायमिति * सिद्धान्ते तावदग्निहोत्राघारवाक्यविहितयोः कर्मणोः प्रत्यभिज्ञानात् प्रकरणान्तरन्यायाभावात्पूर्वपक्षे ऽपि विशिष्टविधेः क्व चिदनभ्युपगमात् केवलस्य गुणस्य कर्मणो वा विधेयत्वापत्तेर्न प्रकरणान्तरन्यायः सम्भवतीत्याशयः। ननु भिन्ने जुहोतीत्यादिष्वविहितदेवताकेषु दूरस्थेषु दर्विहोमेषु कर्मप्रत्यभिज्ञाभावेनानुपादेयनिमित्तादिसम्बन्धेन च प्रकरणान्तरन्यायात् कर्मविधिप्रतीतेस्तत्र देवताविधिर्भविष्यतीत्याशङ्क्याह * दूरस्थस्येति * तेषामसम्बन्धव्यवायेनाबुद्धिस्थत्वान्नानुवादः[2] सम्भवतीत्यर्थः। कुण्डपायिनामिदं कौण्डपायिनं कुण्डपायिनामयनाख्यं सत्रं तत्सम्बन्धिनो होमस्य मासमग्निहोत्रं जुहोतीति विहितस्य असम्बद्धव्यवायेनाबुद्धिस्थत्वाद्यदग्नये चेत्यादिदेवताविधौ दध्ना जुहोतीत्यादिद्रव्यविधौ चानुवादो यथा न युक्त इत्यातिदेशिककर्मसम्बन्धाङ्गीकरणेन दृष्टान्तसिद्धिः। यदाहवनीये जुहोतीत्यादौ द्रव्यदेवतस्योपदेशतो ऽतिदे-

१ प्राप्तार्थत्वादिति पु० पा०।

२ असंबद्धपदव्यवायेनेति पु० पा०।

शतो वा लाभासम्भवेनारूपत्वात्कर्मणो विध्यनुपपत्तेरगत्या दूरस्थानुवादाश्रयणमित्याशयः । एवं कर्मानुवादेन गुणविधित्वे ऽग्निहोत्रवाक्यस्य पूर्वपक्ष्युक्ते निरस्ते यदि कश्चिद् गुणविशिष्टकर्मविधिमङ्गीकृत्य प्रत्यवतिष्ठेत तं प्रति अन्यतो विशेषणांशस्य विशेष्यांशस्य वा प्राप्तिसम्भवे विशिष्टविधिगौरवाश्रयणमयुक्तम् । यदग्नये चेति शास्त्रान्तरेण चोभयवादिसिद्धगुणविधित्वेनेह विधित्सितस्य प्राप्तत्वात् व्यर्थं विशिष्टविधानमित्युत्तरद्वयं वाच्यमित्याह * विधीयतामिति * विकल्प्यते ऽन्यथा पूर्वपक्षो रच्यतइत्यर्थः देवताधिकरणे देवताप्राधान्यस्य निषेध्यमानरूपतया होत्रशब्दाभिधेयस्य हूयमानस्याग्न्यर्थत्वाभावात् प्रकृतिविकारभावायोगाच्च चतुर्थीतदर्थार्थबलिहितसुखरक्षितैरिति चतुर्थीसमासलक्षणाभावात् व्यधिकरणबहुव्रीहेश्च नियतविषयत्वान्न चतुर्थीबहुव्रीहिर्युक्त इत्याह * नेति * समासान्तरं तर्हि भवत्वित्याशङ्क्याह * न चेति * ननु शेषलक्षणाया अपि षष्ठ्याः सम्प्रदानसम्प्रदेयलक्षणसम्बन्धविशेषनिष्ठत्वसम्भवाद्देवतायाश्च सम्प्रदानशब्दवाच्यं त्यज्यमानद्रव्योद्देश्यत्वप्रतिग्रहीतृत्वसमुदायैकदेशेन त्याज्यद्रव्योद्देश्यत्वेन प्रतिग्रहीतृत्वांशाभावे ऽपि समुदायलक्षणया सम्प्रदानत्वोपपत्तेः षष्ठीतत्पुरुषेण देवताविधिर्भविष्यतीत्याशङ्क्याह * य इति * विधौलक्षणानुपपत्तेरिति भावः । षष्ठीसमासाश्रयणे ऽपि व्यधिकरणबहुव्रीहेरसामञ्जस्यात्तत्पुरुषो ऽभ्युपगन्तव्य इति तत्पुरुषादित्यनेनोक्तं यस्मिन्नग्नये होत्रं होमे तद्धोमात्मकं कर्माग्निहोत्रशब्दवाच्यं भवतीति भाष्येण सिद्धान्ते ऽपि चतुर्थीबहुव्रीहिराश्रितः स कथं समञ्जसः स्यादित्याशङ्क्याह * अनुवाद इति * नामधेयत्वे ऽनुवादत्वात्तस्य च प्रमाणान्तरपारतन्त्र्यादन्यतः सिद्धे देवतात्वलक्षणसम्बन्धविशेषे तल्लक्षणार्था सम्बन्धमात्रवाचिन्यपि षष्ठी हूयतइति च कर्मणि जुहोतेर्धातोर्हुयामाश्रुभसिभ्यस्त्रन्निस्यौणादिके त्रन् प्रत्यये कृते सार्वधातुकार्द्धधातुकयोरिति च गुणे कृते होत्रशब्दव्युत्पत्तेरग्निहोत्रशब्दस्य बहुव्रीहिं विना जुहोतिसामानाधिकरणायोगाद्व्यधिकरणे बहुव्रीहिः कण्ठेकालवत्कथ्यते इत्यर्थः । यथा ऽश्वार्थो घास इति प्रमाणान्तरसिद्धतादर्थ्यविवक्षायामपि प्रकृतिविकारभावाभावेन तदर्थसमासायोगात् तादर्थ्यलक्षणार्थः षष्ठीतत्पुरुषः कथ्यतइति दृष्टान्तार्थः । ननु यद्यपि गौरवापत्तेस्तत्प्रख्यशास्त्रान्तरसद्भावाच्च विधिर्न युक्तः । नापि च सायं होमे गुणविधिः दूरस्थस्यानुवादाभावाच्च न दर्विहोमे गुणविधिः तथापि प्रकृते प्रातर्होमे देवताविधिर्भविष्य-

तीत्याशङ्क्याह * विधातव्यश्चेति * बहुव्रीह्यर्थस्य होमस्य प्राप्तत्वाल्लोहितोष्णीषादिवत्तद्विशेषणभूतयोर्द्रव्यदेवतयोर्होत्राग्निपदार्थयोः सम्बन्धो जुहोतिपरेण प्रत्ययेन विधातव्यः स्यादित्यर्थः। समासानुपपत्त्यादिदोषसमुच्चयार्थश्चशब्दः। ननु प्रातर्होमे ऽग्नेरविधाने निमित्ताभावान्नाग्निहोत्रनामधेयानुवादः सम्भवेदित्याशङ्क्याह * एकदेशे ऽपि चेति * अग्निहोत्रवाक्योत्पादितस्य कर्मणः सायं च प्रातश्च जुहोतीति वाक्यान्तरवशात्सायम्प्रातरावृत्तावपि ज्योतिष्टोमवत्स्वरूपभेदाभावात् तदेकदेशे सायं होमे ऽग्निदेवत्यत्वज्ञानान्नाग्निहोत्रे नामधेयानुवादो ऽपगच्छतीत्यर्थः। एतच्चाहवनीये होमो नापरयोरिति गार्हपत्यान्वाहार्यपचनयोर्होमनिषेधाद् बह्वृचब्राह्मणे सप्त च शतानि विंशतिश्च संवत्सरं सायमाहुतयः सप्तशतानि विंशतिश्च संवत्सरे प्रातराहुतयः तावत्यो ऽग्नेर्यजुष्मत्य इष्टकाः संवत्सरेणाहास्याग्निना चित्येनेष्टं भवति य एवं विद्वानग्निहोत्रं जुहोतीत्याहवनीयाहुतिसंख्ययैवाग्निहोत्रस्य स्तुतत्वात् प्रातर्होमे चाहवनीये ऽग्निदेवत्यहोमाभावात्तत्पक्षाश्रयणेनोक्तं द्वे आहवनीये जुहोति चतस्रो गार्हपत्ये चतस्रो ऽन्वाहार्यपचन इति तु दशाहुतिपक्षे। द्वे आहवनीये द्वे गार्हपत्ये द्वे आन्वाहार्यपचनइति षडाहुतिपक्षे वा प्रातर्होमे ऽपि गार्हपत्यान्वाहार्यपचनयोरग्नये गृहपतये स्वाहा ऽग्नये संवेशयतये स्वाहेत्यादिमान्त्रवर्णिकाग्निदेवत्यहोमसद्भावादग्निहोत्रशब्दप्रवृत्तिः सुतरां युज्यते यथा च परपदार्थसम्बन्धविधानादिक्लेशापत्तेर्नाग्निहोत्रशब्दस्य प्रकृते ऽपि प्रातर्होमे गुणविधित्वं युक्तं तथाघारशब्दस्यापि क्षरणसमर्थद्रव्यमात्रवाचित्वं कल्पयित्वा तस्यान्यत्र विनियुक्तस्यापि द्वितीयामात्रेण संस्कार्यत्वं कल्पयित्वा तदन्यथानुपपत्त्योपांशुयाजाङ्गत्वकल्पनायामाघारयतिं परेण वा प्रत्ययेनोपांशुयाजभावनामनूद्याघाराख्यद्रव्यविधिकल्पने ध्रौवाज्यप्राप्तापादितक्षरणात्मकत्वोपांशुयाजभावनानुवादेन वा द्रव्यविधिकल्पनेति क्लेशापत्तेर्नाघारशब्दस्योपांशुयाजाख्येन कर्मणा सह तदङ्गभूतार्थाभिधानेनान्वयो युक्त इत्याह * आघारस्येति * ततश्चोपांशुयाजे द्रव्यविध्यसम्भवात् आघारयतीत्याख्यातविहिते कर्मण्याघारशब्दस्य द्रव्यैविधित्वापत्तेस्तत्र च चतुर्गृहीतवाक्येनैव द्रवद्रव्याज्यप्राप्तेः। प्रयाजाज्यसंस्कारार्थे चाघारणे द्रव्यान्तरानपेक्षणात्पयःप्रभृति द्रवद्रव्यमात्रविधानानुपपत्तेः तत्प्रख्यशास्त्रान्तरसद्भावो ऽपरिहार्य इत्याशयः। नन्वस्य संस्कारकर्मत्वे सति यद्भाष्यकृतोच्यतइत्यादिना घारणक्रियया प्रयाजद्रव्यस्यैकदेश-

क्षरणात्मकातिशयावगतेः क्षारितैकदेशस्य च प्रयाजयागसाधनत्वेन संस्कारानर्थक्याभावात् संस्कारकर्मत्वं त्वया ऽप्येष्टव्यं संस्कारस्य च संस्कार्यनिष्ठत्वेन तद्विशेषादेव विशेषसिद्धेर्न नाम्ना प्रयोजनमित्याशङ्क्योच्यते एतदेवाघारणं प्रधानकर्मेत्युक्तं तदयुक्तम् । प्रयाजाङ्गरूपत्वेन प्रधानत्वायोगात् अयागरूपस्यापि स्तोत्रशस्त्रादेः प्रधानकर्मत्वदर्शनात् द्रव्यदेवतान्वयेन यागत्वापादनमनर्थकं क्षारणात्मकत्वेन च प्रक्षेपाधिक्यात् प्रस्तरप्रहरणवद्धोमत्वापत्तेर्यजतेर्नामधेयामित्येतदप्ययुक्तमित्याशङ्काद्वयनिरासं सूचयन् सर्वत्र धात्वर्थस्य करणत्वेनान्वयादाघारमग्निहोत्रमिति द्वितीयान्तरस्य सामानाधिकरण्यानुपपत्तेस्तन्नामत्वमयुक्तमित्याशङ्कां निरस्यति * सामानाधिकरण्यं चेति * कर्तृव्यापारव्याप्यत्वं विना करणत्वायोगात् तदाक्षिप्तकर्तृव्यापारव्याप्यत्वेनानीप्सितकर्मत्वरूपसाध्यांशविवक्षया सामानाधिकरण्यं युक्तमित्यर्थः । नन्वेवं सति तृतीयान्तस्याप्युद्भिदादिपदस्य गुणविधित्वे ऽर्थाक्षिप्तसाध्यांशविवक्षया वैयधिकरण्येनान्वयोपपत्तेर्न मत्वर्थलक्षणापत्तिरित्याशङ्क्येहेत्युक्तम् । इह नामधेयत्वपक्षे साध्यांशविवक्षा गुणविवक्षा गुणविधौ त्वपूर्वसाधनांशे गुणं विधातुं करणत्वांशस्यैव विवक्षेत्याशयः । साध्यशब्देन च भाष्यगतः प्रधानशब्दः साध्यांशविवक्षार्थ इति सूचितं कस्य प्रधानभूतस्य साध्यभूतस्य द्वितीयान्तमेतन्नामधेयं स्यादित्यर्थः । संस्कार्यनिष्ठस्य संस्कारस्य साध्यत्वानिरूपणात्साध्यत्वविवक्षायां संस्कार्यान्वयस्यावश्यापेक्षणीयत्वात्तत एव विशेषसिद्धेर्नामानर्थकमित्याशङ्कानिरासार्थमाघारणस्वरूपस्य संस्कारत्वे ऽपि द्रव्यदेवतान्वयेन यागत्वसिद्धेः तस्य च प्रधानकर्मत्वात् स्विष्टकृदादेवच्च संस्कारकर्मत्वे ऽपि प्रधानकर्मत्वाविरोधात्कर्मशब्देन (धर्ममाज्येभ्यस्तद्गृह्णान्नेप्रकर्म स्यात् इतिवत्[1]) प्रधानकर्मत्वमुक्तं प्रक्षेपाधिक्याच्च सत्यपि होमत्वे प्रधानकर्मत्वमात्रेण नामधेयार्हत्वासिद्धेस्तस्य चेह द्रव्यदेवतान्वयलभ्ययागत्वाधीनसिद्धित्वात् प्रधानकर्मत्वमात्रविवक्षया भाष्ये यजतिशब्दो न होमत्वनिवृत्त्यर्थ इति कर्मण इति सामान्यशब्देन सूचितं यज्जुह्वां चतुर्गृह्णाति प्रयाजार्थेनोत्पन्नस्य चतुर्गृहीतस्याप्यन्यत्र विनियोगात् 'तस्याघारमाघार्येति तस्य प्रयाजार्थं चतुर्गृहीतस्यैकदेशं क्षारयित्वा इतः क्षारितैकदेशाच्चतुर्गृहीतात्त्रिःप्रयाजान् यजतीत्याघारणस्य प्रयाजाज्यसंस्कारार्थत्वप्रतीतेः स्वरूपेण

१ गुणविवर्चीत २ पु० पा० ।

२ अर्थ पा० २ पु० ना० परं लेतरस्थाने धर्ममात्रे तु कर्म स्यादितिवदिति पा० ।

च प्रधानकर्मत्वसम्भवे यागरूपत्वापादनानर्थक्यापत्तेर्न संस्कारककर्मत्वनिरपेक्षं प्रधानकर्मत्वं भाष्यकृतोक्तमिति भ्रमितव्यं ततश्चाघारहोमानन्तरं चतुर्गृहीतस्य नाशदोषापहारेष्वन्यत्प्रयाजार्थं चतुर्गृहीतं गृहीत्वा घारणेन संस्कृत्य प्रयाजा यष्टव्या इति । ननु यद्यप्याघारशब्देनोपांशुयाजे स्ववाक्यविहिते चाघारकर्मणि द्रव्यं न विधीयते तथा ऽप्याज्यपयःप्रभृतिद्रव्यं सान्नाय्योपांशुयाजादिषु विहितमाघारशब्देनानूद्य क्षारणसंस्कारविधिरयं भविष्यतीत्याशङ्कां निराकर्त्तुमाह * विस्पष्टमिति * आघारशब्देनान्यत्र द्रव्यस्याविधानेनान्यत्र विहितद्रव्यप्रत्यभिज्ञाभावान्न कर्मान्तरविहितद्रव्यानुवादो ऽत्र सम्भवतीत्याशयः ॥

॥ अथ श्येनादिशब्दानां यागनामधेयताधिकरणम् ॥ ४ ॥

## तद्व्यपदेशं च ॥ ५ ॥

अथैष शब्दसमभिव्याहारात्साहश्येनाथैष ज्योतिरित्यादीन्यपि इहोदाहरणमिति कस्य चिच्छङ्कास्यात्तन्निवृत्त्यर्थमाह * अथैष इति * नन्वेवं सति तेषां गुणविधित्वं निरस्तं न स्यादित्याशङ्क्य गुणविधित्वशङ्कैव तेषु नास्तीत्याह * तेषामिति * कर्मनामत्वे तस्य कारकविभक्त्या विनापि विधिमात्रेण विनियोगोपपत्तेरज्ञातस्वरूपज्ञापनार्थं प्रातिपदिकार्थप्रधानप्रथमाविभक्तिनिर्देशो युक्तः गुणस्य तु लोकसिद्धस्य स्वरूपज्ञापनानपेक्षणात् कारकविभक्त्या च विना विनियोगायोगात् तदभावे गुणविधित्वाशङ्का न युक्तेत्याशयः । नन्वेतेन सहस्रदक्षिणेन यजेतेति वाक्यान्तरेण तेषामपि तृतीयानिर्देशाद् गुणविधित्वाशङ्कास्तीत्याशङ्क्याह * ते ऽपि चेति * तद्व्यपदेशरहितानामेतदधिकरणविचार्यत्वायोगे ऽप्युद्भिदधिकरणादिषु यथासम्भवं विचारो भविष्यतीत्याशयः । ननु प्रथमानिर्देशेनावधारितकर्मनामत्वानां न वाक्यान्तरस्थेन तृतीयानिर्देशेन निवृत्तिर्युक्तेत्याशङ्क्यापरितोषात्पक्षान्तरमाह * अथ वेति * एते ऽपि प्रथमानिर्दिष्टा अपि ज्योतिरादिशब्दा यथासम्भवमुद्भिदाद्यधिकरणेपूदाहरणमित्यर्थः । प्रसिद्ध्यादिभिरिति पूर्वपक्षभाष्यं व्याचष्टे * तत्रेति * तृतीयान्तत्वेनोद्भिदादिशब्दवत् श्येनादिशब्दानामपि करणवाचित्वप्रसिद्धेर्द्रव्यस्यैव करणत्वोपपत्तेः श्येनादिशब्दानां द्रव्य- २९८।१

१ अथैष ज्योतिरथैष विश्वज्योतिरित्यत्र तृतीयानिर्देशाभावात् गुणविधित्वशङ्कैव नास्तीत्युच्यते तर्हि सिद्धान्ते ऽपि तृतीयाया अभावादेव यागत्वे कार्थसंभवेन करणत्वानुपपत्तेर्ज्योतिरादिशब्दस्य यागार्थत्वमपि न स्यादित्याशङ्कां परिहर्तुमाह कर्मनामत्वइति ।

वाचितेत्युक्ते ननूद्भिदादिसिद्धान्तन्यायेन तृतीयान्ततयैव सामानाधिकरण्यात् कर्मनामत्वं सेत्स्यतीत्याशङ्कानिरासार्थं नन्विति भाष्यं व्याचष्टे * न चेति * निरूढार्थत्वेनैषां न सामानाधिकरण्यं निर्णायकमितिभावः । ननु यथा वै श्येन इत्याद्यर्थवादावगतो वत्यर्थः कर्मणि प्रवृत्तिनिमित्तं भविष्यतीत्याशङ्क्याह * वत्यर्थोपादानेन चेति * श्रुतिवृत्त्यपेक्षया विप्रकृष्टापि लक्षणा वाच्येन स्वसम्बन्ध्युपस्थापनात् सन्निकृष्टा गौणता तु वाच्यलक्षितेन वाच्यसम्बन्धिनो ऽर्थस्योपस्थापनात् अत्यन्तविप्रकृष्टा वत्यर्थोपादानेन कर्मणि प्रवृत्तौ गौणता स्यात् सा चात्यन्तविप्रकृष्टेति योज्यम्। ननु श्येनादेर्यागसम्बन्धानवगमात् कथं लक्षकतेत्याशङ्क्याह * साधनं हीति * उद्भिदादीनामिवेति दृष्टान्तोपादानेन तद्वदेव ज्योतिष्टोमे गुणविधानस्य सूचितत्वात् तदुद्देशेन विधीयमानस्य श्येनादेस्तत्साधनत्वप्रतीतिः । स्वसाध्यलक्षकत्वं युक्तमिति भावः । नन्वेवं सति वैदिकत्वेन श्येनादिशब्दानामपि निरूढलक्षणापत्तेः गुणवचनत्वान्मतुप्लोपो ऽन्वाख्यातव्यः स्यादित्याशङ्क्याह * विनैवेति * मतुप्लोपः स्मर्यतइति सिद्धान्ते दर्शनात् स्मर्यमाणेनेति शेषः कल्पनीयः। गुणवचनेषु शब्दस्वभावनिबन्धनत्वात् लक्षणाया गुणशब्दस्य गुणिनि वृत्तिप्रतीतेर्वाचकत्वशङ्कायां तन्निरासार्थं मतुल्लोपान्वाख्यानं श्येनादिशब्दानां तु पदान्तरसामानाधिकरण्यनिबन्धनत्वात् मतुल्लोपानन्वाख्याने ऽपि वाचकत्वशङ्काभावात् तन्निरासार्थमन्वाख्यानमनर्थकमित्याशयः। मत्वर्थलक्षणायां च श्रुत्यर्थस्यापि वाक्यार्थान्वयित्वेनात्यागाद्वत्यर्थस्य प्रतीतिमात्रोपाधिकत्वेन वाक्यार्थान्वयाभावात् त्यागापत्तेर्मत्वर्थलक्षणैव ज्यायसीत्याह* किं चेति* मत्वर्थस्य वैशिष्ट्यस्य यज्यन्वयमात्रात्सिद्धेः श्येनप्रातिपदिकस्य तात्पर्याभावेन श्रुत्यर्थप्राधान्याविघातात् स्वार्थपरश्येनौपयिकत्वेन वा पाताख्यानान्वयासम्भवे ऽपि[1] यजिसामानाधिकरण्योत्तरकालं तदन्यथानुपपत्त्या लक्षणेति सामानाधिकरण्यरूपैकवाक्यवशादित्युक्तं गौणत्वे तु श्रुत्यर्थस्य वाक्यार्थानन्वयात् श्येनप्रातिपदिकस्य तात्पर्यानुपपत्तेर्वत्यर्थ एव सादृश्ये तात्पर्यकल्पनां विनाख्यातान्वयायोगात् वत्यर्थाकल्पनापुरःसराख्यातान्वयसिद्ध्यर्थं पदवेलायामेवासौ श्रुत्यर्थतात्पर्यत्यागेन लक्षणीय इति श्रुत्यर्थबाधापत्तेर्मत्वर्थाद् दुर्बल इत्यर्थः । श्लोकं व्याचष्टे * गुणविधिपक्षे हीति * तेन श्येनादिनेति भाष्येण सौत्रं तच्छब्दं यस्मिन् गुणोपदेश इत्ये-

१ स्वार्थपरस्यैवाख्यातान्वयासंभवे ऽपीति २ पु० पा० ।

तत्सूत्रनिर्दिष्टविधित्सितगुणपरामर्शिनमङ्गीकृत्य विशब्दं च भेदवाचिनमङ्गीकृत्य तेन विधित्सितेन च श्येनादिरूपेण गुणेन भिन्नार्थतया व्यपदेशः सङ्कीर्त्तनं यस्य श्येनादिपदस्य तदपि नामधेयमिति नामधेयपदानुवृत्त्या सूत्रं योजितं तत्र कथं भिन्नार्थत्वावगतिरित्यपेक्षिते श्येनादिशब्दानां कर्मणि प्रवृत्तिनिमित्तप्रदर्शनार्थेन सादृश्यव्यपदेशादित्यादिभाष्येणोक्तमार्थवादिकं श्येनसादृश्यमेव भिन्नार्थत्वावगतावपि कारणमिति प्रदर्शयन् सिद्धान्तमाह * तदिति * उपपत्तिरित्यादावुपशब्दस्य सादृश्यार्थत्वदर्शनात् उपमीयते सादृश्येनावगम्यते ऽनयेति व्युत्पत्त्या सादृश्यावच्छेदकमुपमाशब्देनोक्तं तथा यद्वस्तु स्तूयते तद्भिन्नया सत्या तस्माच्छ्येनद्रव्येणोपमानेनोपमितस्य श्येनेन यजेतेति श्येनशब्दार्थस्य श्येनद्रव्याद्भेदो ऽवसीयतइत्यर्थः। ननु श्येनशब्दार्थस्य पक्षिविशेषस्योपमानात् पक्षिविशेषाद्भेदे ऽपि तद्वतो यागस्य ततो भेदात्सादृश्येन स्तुतिर्भविष्यतीत्याशङ्क्य विधेयमित्युक्तम्। एतदधिकरणपूर्वपक्षे यजिना ज्योतिष्टोममनूद्य तत्र श्येनादिगुणमात्रविधानमभ्युपगमात् तदेव स्तोतव्यं न याग इत्याशयः। ननु स्तुतिः स्वरूपसत्यत्वानपेक्षणात् यथा कथं चिदुपपत्स्यते इत्याशङ्क्य न हीत्युक्तं सादृश्यद्वारा स्तुतिर्भेदाभावे सादृश्यस्योपायमात्रत्वेनापि वक्तुमशक्यत्वात् निरालम्बना स्यादित्याशयः। ननु गगनं गगनाकारं सागरः सागरोपम इत्यादावभेदे ऽपि सादृश्येन स्तुतिर्दृष्टेत्याशङ्क्य * सदेत्युक्तम् * काल्पनिकभेदाश्रया स्तुतिर्गत्या कदा चिदङ्गीक्रियते न सर्वदेत्यर्थः। श्लोकं व्याचष्टे * श्येनादिवाक्येषु हीति * सदेति पदं शङ्कानिरासार्थत्वेनाथोच्यतेत्यादिना व्याख्यातम्। श्रुतिर्हीति भाष्यं नामधेयत्वे वत्यर्थलक्षणया श्रुत्यर्थत्यागापत्तेरयुक्तमाशङ्क्योपमासामञ्जस्यपरत्वेन व्याचष्टे * नामधेयत्वे त्विति * लक्षणेति भाष्यं मत्वर्थलक्षणाया वत्यर्थलक्षणातो ज्यायस्त्वस्योक्तत्वादयुक्तमाशङ्क्य वत्यर्थलक्षणायाः पक्षद्वयसाम्येनापर्यनुयोज्यत्वाद् गुणविधौ च काल्पनिकभेदाश्रयणत्वेनात्यन्तासामञ्जस्यात् मत्वर्थलक्षणादोषाधिक्याभिप्रायत्वेन व्याचष्टे * इतरथा हीति * सामानाधिकरण्यसिद्ध्यर्थं श्येनवता यागेनेति मत्वर्थस्तावल्लक्षयितव्यः कर्माङ्गभूतस्य च श्येनस्य इतरश्येनैकजातीयत्वेन भूयो ऽवयवसामान्ये योगो जात्यन्तरस्य तदिति भिन्नजातीयाश्रयत्वेनोक्तस्य जातिसादृश्यस्याभावात् काल्पनिकभेदाश्रयणे ऽपि कर्मणि व्यापृतस्य भ्रातृव्यादातृत्वायोगादभिचार्यस्य च यजमानभ्रातृव्यस्यादाने योग्यत्वस्याप्यभावात् सादृश्यानुपपत्तेरर्थवादोक्तस्यापि

वस्तुतो सम्भवात्तदालम्बनसिद्ध्यर्थं भ्रातृव्यादानसाधनद्वारा तदङ्गभूते श्येने वत्यर्थोऽपि लक्षयितव्य इत्यर्थः। ननु यागस्य भ्रातृव्यादानसाधनत्वेन श्येनसादृश्योपपत्तेर्विधेयश्येनस्तुत्यर्थायामिव वेतसावकास्तुत्यर्था स्तुतिर्भविष्यतीत्याशङ्क्याह * न चेति * यागविधेर्निराकर्तुमशक्यत्वात् स्तुतेर्नान्यत्र सञ्चारो युक्त इत्यर्थः। एतदेव विवृणोति
२९९।१ * अविधेयेति * ननु यागविधावपि तद्विशेषणतया द्रव्यस्यापि विधेयत्वोपपत्तेः स्तुतिभाक्त्वं भविष्यतीत्याशङ्क्य नामधेयत्वेन गतिसम्भवे विशिष्टविधिगौरवस्यानाश्रयणीयत्वात् द्रव्यस्याविधेयत्वमुक्तं सामानाधिकरण्यार्थं च द्रव्येण मत्वर्थे यागं लक्षयित्वा यागस्तुतिं द्रव्ये सञ्चारयितुं पुनरपि यागेन द्रव्यलक्षणाद्विप्रकर्षोऽस्मिन् पक्षे स्यादित्याह * पुनरपि चेति * यथा च लौकिकप्रयोगात् श्येनशब्दस्य द्रव्यवचनत्वं मुख्यं तथा वैदिकात् सामानाधिकरण्याद्यागवचनत्वमपि मुख्यं वक्तुं शक्यमिति श्रुतिहीति भाष्यं प्रौढया यथाश्रुतं व्याख्यातुमाह * समभिव्याहाराच्चेति * लक्षणेत्यादिभाष्यम् अन्यथा व्याचष्टे * विधौ चेति*गुणे श्येनशब्देन विहिते विधौ मत्वर्थलक्षणा स्यात् इत्येवमनेन भाष्येण व्याख्यातम्। एतदेवं भाष्यं गुणशब्देषु मतुब्लोपस्य विहितत्वात् मत्वर्थलक्षणा युक्ता नान्यत्रेत्यन्यथा व्याख्यातुमाह * गुणेति * नन्विवलोपस्याप्यस्मरणात् तदर्थलक्षणाप्ययुक्ता स्यादित्याशङ्क्याह * इवार्थस्त्विति * फलसकल्पाभिप्रायौ वा भाष्यगतौ श्रुतिलक्षणाशब्दावित्यन्यथा व्याख्यातुमाह * मत्वर्थलक्षणा त्विति * दोषान्तराण्यपि भाष्यगतेन लक्षणाशब्देनोपलक्षितानीति सूचयितुम् उद्भिदधिकरणवार्त्तिकोक्तान्यागं प्रति गुणविधावभिचरन्निति फलपदस्यानुवाद्यज्योतिष्टोमयागविशेषणत्वासम्भवादानर्थक्यं सार्वकाम्यप्राप्तज्योतिष्टोमविशेषणत्वे वाक्यभेदः प्रत्ययव्यापारविप्रकर्षः धातुपारार्थ्यं यागमात्रे च गुणविधौ उत्पत्तिविशिष्टेन सह विकल्पः फलविशिष्टयागे गुणविधौ सामान्यशिष्टस्य सोमस्य विशेषविशिष्टेन श्येनादिना बाध इति दोषान् योजयति * पूर्वोक्तांश्चेति *

॥ अथ वाजपेयादिशब्दनां यागनामधेयताधिकरणम् ॥ ५ ॥

## नामधेये गुणश्रुतौ स्याद्विधानमिति चेत् ॥ ६ ॥

ननु किमत्र ज्योतिष्टोमयागानुवादेन वाजपेयलक्षणगुणविधिः पूर्वपक्ष्यते, गुणविशिष्टयागविधिर्वा, तत्राद्ये कल्पे ज्योतिष्टोमक्रियातो वाजपेयक्रियाया भेदाभावाल्लिङ्गदर्शनसूत्रानुपपत्तिः। सा-

र्वकाम्यप्राप्तस्वाराज्यकामानुवादापत्तेश्च। फलसम्बन्धस्याविवक्षितत्वाद्वैरूप्यं सूत्रस्याप्यनुपपत्तिः। द्वितीयकल्पे तु मत्वर्थलक्षणा स्यात् तन्त्रसम्बन्धेन मत्वर्थलक्षणापरिहारशङ्कायामुद्भिदादिष्वपि तन्त्रसम्बन्धाभ्युपगमेन मत्वर्थलक्षणापरिहारोपपत्तेर्गुणविधित्वसम्भवात् नामधेयत्वसिद्धान्तः प्रत्युद्ध्रियेत वाजं पेयमस्मिन्निति बहुव्रीहिणा मत्वर्थलाभाभ्युपगमे बहुव्रीह्यान्तर्णीतगुणसम्बन्धस्य कर्मण एव श्रुत्या फले विधानादर्थाद् गुणविधाने ऽपि वचनव्यक्त्यन्यथात्वाभावाद्वैरूप्यसूत्रानुपपत्तिस्तदवस्थितेत्याशङ्क्याह *तन्त्रसम्बन्धेनेति* विशिष्टविधावपि तन्त्रसम्बन्धेन मत्वर्थलक्षणापरिहारशङ्कोद्भिदादिष्वपि प्रसज्यमाना तदाक्षेपेण प्रत्यवस्थानान्न दूष्यतीति तात्पर्यार्थः। यागानुवादेन गुणविधावनूद्यमानस्य यागस्य फलेन विशेष्टुमशक्यत्वादुभयसम्बन्धाभावेन तन्त्रत्वानुपपत्तेः। फलसाधनतयान्यतः प्राप्तस्य गुणवत्त्वाभिधानायावश्यं मत्वर्थलक्षणापद्येत विशिष्टविधौ तु विध्युत्तरकालं तत्सामर्थ्यलभ्ये धात्वर्थस्य फलं प्रति करणत्वे ऽर्थाक्षिप्ते च गुणं प्रति साध्यत्वे सत्यपि विधीयमानावस्थायां कारकविभक्त्यभावाद्धातुतः स्वरूपमात्रेण प्रतीतस्योभयसम्बन्धो मत्वर्थलक्षणां विना ऽपि न विरुध्यते फलसम्बन्धोत्तरकालं गुणसम्बन्धाभ्युपगमे फलसम्बन्धेन साधनत्वाक्षेपात् तादृशस्य साधनभूतेन गुणेन समत्वात् सम्बन्धो न युज्यते गुणसम्बन्धोत्तरकालं च फलसम्बन्धाभ्युपगमे गुणसम्बन्धेन साध्यत्वाक्षेपात् साध्यभूतेन फलेन न युज्येतेति युगपदुभयसम्बन्धप्रदर्शनार्थं तन्त्रत्वमुक्तम्। आख्यातपदस्य तन्त्रेणोभयसम्बन्धोत्तरकालं तेनैव हेतुना धात्वर्थस्य साध्यसाधनभावो भवन्न विरोत्स्यतइति हेतौ तृतीयामङ्गीकृत्य योज्यम्। ननु वैरूप्यापत्तेर्मत्वर्थलक्षणां विनोभयसम्बन्धो न युक्त इत्याशङ्क्य तेनेत्युक्तं येन कारणेन धात्वर्थस्य साध्यसाधनत्वनिरपेक्षस्य स्वरूपमात्रेण[1] धातुनोक्तस्योभयसम्बन्धोत्तरकालमर्थादापन्नः साध्यसाधनभावो न विरुध्यते तेन कारणेन युगपद्विधेयव्यापारोत्तरकालं तद्धेतुकसाध्यसाधनरूपेणोभाभ्यां मत्वर्थलक्षणया विनैव धात्वर्थस्य सम्बन्धत्वसिद्धिरित्यर्थः। तन्त्रसम्बन्धेन च विशिष्टविधावपि मत्वर्थलक्षणपरिहारसम्भवे चित्रावाक्ये ऽपि चित्रात्वस्त्रीत्वविशिष्टयागविधानोपपत्तेः। स्त्रीत्वाक्षिप्तप्राणिद्रव्यकत्वेन दैक्षसादृश्यात्तदीयेतिकर्त्तव्यतालाभेन नैराकाङ्क्ष्योपपत्तेर्न वाक्यभेदापत्तिः। आज्यैः स्तुवतइत्यादिष्वप्याज्यादिविशिष्टस्तुतिविधानोपपत्तेः पञ्चदशादिवाक्यैराज्याद्यनुवादेन सं-

१ साध्यसाधनत्वनिरपेक्षस्य स्वरूपमात्रं यथा धातुनोक्तस्योभयसंबन्ध इ० २ पु० पा०।

ख्यामात्रविधानान्न वाक्यभेदापत्तिः सूर्याग्निवाक्ययोश्च देवताद्वय-विशिष्टहोमान्तरविधायित्वोपपत्तेरग्निहोत्रवाक्याविहिते होमे शास्त्रान्तरेणाग्नेः प्राप्त्यभावात्तत्प्रख्यता परिहर्तुं शक्या ।श्येनादिवाक्येष्वपि श्येनादिवाक्यविहितस्य च द्रव्याविशिष्टस्य यागस्य श्येनादिद्रव्योपमानेन स्तुत्युपपत्तेस्तद्व्यपदेशतापि परिहर्त्तुं शक्येति सूचितम्।यद्यपि घृतादेः स्तुतावकरणत्वात्कारकविभक्तिसम्भवे चोपपदविभक्तित्वाश्रयणस्यायुक्तत्वात् सहार्थे तृतीयाङ्गीकरणेनाज्यादिभिः सह स्तुवतइत्येवमपि विशिष्टविधानं न युज्यते तथापि पञ्चदशादिवाक्येष्वेवाध्याहृतभवतिपराख्यातोक्ताया यागभावनायाः स्तापनाख्यधात्वर्थावच्छेदाभ्युपगमात्तस्य च देशानपेक्षस्यानुष्ठानाशक्तेर्विध्ययोगात् प्रकरणस्यगम्यस्तोत्रदेशान्विताज्यादिविध्यवगतेराज्यादिपदस्य प्रकरणप्राप्तेन स्तोत्रेण वाक्योपात्तया च संख्यया सह तन्त्रेण सम्बन्धात् संख्याविशिष्टघृतादिरूपैकार्थविधानोपपत्तेर्न वाक्यभेदापत्तिरिति दर्शयितुं तथेत्युक्तम् । आदिशब्दात्त्रिवृच्छब्दस्य बहिष्पवमानत्वयोगोक्त्यर्थःसर्वाक्षेपे सूत्रसामञ्जस्यप्रदर्शनार्थम् * तस्मादित्यनेन * सूत्रम् योजितं मत्वर्थलक्षणापरिहारमात्रेणाक्षेपे सत्युद्भिदधिकरणानन्तरमेवैतदधिकरणारम्भोपपत्तेरिहासङ्गतिमाशङ्क्य सर्वेत्युक्तम्। कथं वाक्यभेदादिपरिहरणीयमित्यपेक्षिते ऽस्मदुक्तप्रकारसूचनार्थं यथासम्भवमित्युक्तमिति । ननु पूर्वाधिकरणचतुष्टयाक्षेपेणैतदधिकरणारम्भे सत्यपूर्ववाक्योदाहरणमनर्थकमित्याशङ्क्याह * तत्रेदमिति * वाजं पेयमस्मिन्निति बहुव्रीहिणैव मत्वर्थलाभान्मत्वर्थलक्षणानापत्तेः पेयत्वस्य च वाजशब्दवाच्यान्नविशेषणत्वोपपत्तेः पानार्हत्वविशिष्टवाजरूपैकार्थविधानसम्भवाद्वाक्यभेदानापत्तेस्तत्प्रख्यान्यशास्त्रतद्व्यपदेशयोश्चाभावात् पूर्वन्यायचतुष्टयेन वाजपेयशब्दस्य गुणविधित्वनिरासासिद्धेर्वैरूप्यापत्त्या तन्निरासायेदं वाक्यम् उदाहृतमित्यर्थः।। यद्यप्युपदिष्टेषु धात्वर्थेपूपदेशसामर्थ्यात्करणत्वं प्रतीयते तेन चार्थात् कर्तृव्यापारव्याप्यत्वरूपं साध्यत्वं कल्प्यते तथाप्युपदिश्यमानावस्थायां कारकविभक्त्यभावात् साध्यसाधनत्वशून्यरूपस्वरूपमात्रेण धातुनोक्तस्य धात्वर्थस्य तन्त्रसम्बन्धेन मत्वर्थलक्षणां विनैव गुणविधानोपपत्तेर्नास्ति मत्वर्थलक्षणेति यदुक्तं तत्रैव वृद्धसम्मतिमाह * आह चेति* यद्वा करणभूतस्यापि च यागस्योत्पत्तिवाक्यावगतकरणत्वाक्षिप्तसाध्यांशानुवादेन गुणे ऽपि विधीयमानेन मत्वर्थलक्षणेति चित्राधिकरणपूर्वपक्षवार्त्तिकोक्तन्यायेन यागानुवादेनापि गुणविधौ मत्वर्थलक्षणानापत्तेः किमिति विशिष्टविधिमभ्युपेत्य तन्त्रस-

म्बन्धेन मत्वर्थलक्षणापरिहारक्लेशः क्रियतइत्याशङ्कानिरासार्थो ऽयं श्लोकः करणेषूपदिष्टेषु सत्सु याथार्थ्यसाध्यत्वकल्पना तस्यां च गुणविधाने मत्वर्थलक्षणा न नास्ति किं त्वस्त्येति द्वौ नञौ प्रकृतयर्थं गमयतः इति न्यायेन योज्यः। विधिसामर्थ्याद्धातोः साधनत्वरूपस्यार्थप्रतिपादकत्वावगतेस्तत्सिद्धये ऽर्थाक्षिप्तस्यापि साध्यत्वस्याशाब्दत्वाच्छब्देन गुणेनान्वयानुपपत्तेरन्यथा च क्व चिदपि मत्वर्थलक्षणानापत्तेरित्याशयः।

## तुल्यत्वात् क्रिययोर्न ॥ ७ ॥

नन्वेतल्लिङ्गोपन्यासात् वाजपेयवाक्यमेवात्रोदाहरणं प्रतीयतइत्याशङ्क्याह * वाजपेये तावदिति * वक्ष्यमाणसूत्रोक्तवैरूप्यलक्षणन्यायमूलत्वाल्लिङ्गस्य न्यायस्य च सर्वसाधारण्यान्न लिङ्गमात्रेण सङ्कोचो युक्त इत्याशयः। भाष्यकृता सौत्रं नञं पूर्वपक्षनिरासार्थत्वेन व्याख्याय गुणविशिष्टकर्मविधिपक्षे वाजपेयक्रियाया दर्शपूर्णमासक्रियया तुल्यत्वात् दार्शपौर्णमासिकविध्यन्तापत्तेर्दीक्ष्योपसद्दर्शनं न युक्तमिति पूर्वपक्षनिरासलिङ्गाभिधानार्थत्वेन च सूत्रं व्याख्याय नामधेयत्वे सत्यव्यक्तचोदितत्वेन ज्योतिष्टोमक्रियया तुल्यत्वाद्दीक्षोपसद्दर्शनं युक्तमिति सिद्धान्तलिङ्गाभिधानार्थत्वेन व्याख्यातं तत्र नामधेयपक्षवद् गुणविधिपक्षे ऽपि स्वार्थविहितदेवताशून्यत्वलक्षणाऽव्यक्तचोदितत्वसद्भावात् सौमिकविध्यन्तप्राप्त्युपपत्तेरौषधद्रव्यकत्वेनेष्टिसादृश्ये ऽपि सत्यैष्टिको विध्यन्तः सौमिको वेति सन्देहे दीक्षोपसद्दर्शनात् सन्दिग्धेषु वाक्यशेषादिति न्यायेन सौमिकविध्यन्तनिश्चयात् नानेन लिङ्गेन गुणविधित्वनिरासो नामधेयत्वं वा सिध्यतीत्याशङ्क्याह * वाजमिति * विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपाख्यत्वादित्यष्टमाधिकरणन्यायेन द्रव्यसादृश्यस्य बलीयस्त्वाद्दीक्षोपसद्दर्शनस्यापि वा न्यायपूर्वत्वाद्यत्र नित्यानुवादवचनानि स्युरिति विध्यन्ताधिकरणोक्तन्यायेन यथा सम्भवं परिहारोपपत्तेरौषधिद्रव्यकत्वे सति द्रव्यसारूप्येण वाजपेयस्य दर्शपूर्णमासाभ्यां समानत्वादिष्टिप्रकृतिकत्वं प्रसज्येतेत्यर्थः। ३००।१

## ऐकशब्द्ये परार्थवत् ॥ ८ ॥

भाष्यकृता यदि गुणविशिष्टकर्म विधिः स्यात् ततः स्वार्थवत्परार्थवच्चाभिधानं प्रसज्येत तच्च यजेतेत्यस्य शब्दस्यैकत्वाद्विप्रतिषिध्येतेति वदता गुणविशिष्टकर्मविधौ स्वार्थवत्

स्वविधानार्थवदपूर्वविधित्वेनोपादेयत्वेन गुणत्वेन चाभिहितस्य यागस्य परार्थवत् गुणविधानार्थवत् प्राप्तानुवादत्वेनोद्देश्यत्वेन प्राधान्येन च अभिधानमेकशब्दे सकृदुच्चरिते धातोर्न युक्तमिति पूर्वसूत्रगतस्य नञः काकाक्षिवदिहाप्यन्वयमङ्गीकृत्य विप्रतिषेधशब्देन नञर्थव्याख्यानात् सूत्रं योजितं तत्र गुणप्रधानत्वाद्यनपेक्षस्वरूपमात्रेण धातुनोक्तस्य यागस्य पश्चाद् गुणप्रधानत्वादिरूपापत्तावपि विधीयमानावस्थायामैकरूप्येण तन्त्रसम्बन्धोपपत्तेरुक्तत्वाद्विप्रतिषेधासम्भवमाशङ्क्याह * तन्त्रत्वमिति * अयमाशयः। धात्वर्थस्याक्रियारूपत्वात् कर्मकारकेण तत्फलेन करणकारकेण च गुणेन सह साक्षात् सम्बन्धायोगात् भावनाद्वारा ताभ्यां सम्बन्धो वाच्यः। न चाकारकरूपस्य क्रियारूपया भावनयान्वयः सम्भवतीति भावनान्वयायावश्यं कारकरूपता धात्वर्थस्याभ्युपगन्तव्या अशाब्देन च कारकत्वेन शाब्दे व्यवहारे अन्वयायोगात् कारकत्वरूपेणैव धात्वर्थो भावनान्वयार्थं धातुनाभिधातव्यस्तत्र कर्मत्वेनाभिधाने फलसम्बन्धायोगात् करणत्वेन चाभिधाने गुणसम्बन्धायोगात् तन्त्रसम्बन्धायोगात्तन्त्रसम्बन्धानुपपत्तिरिति योज्यं चैवं यदि यः फलस्य साधनाकाङ्क्षापूरणलक्षणो धात्वर्थसम्बन्धेनोपकारः क्रियते स एव गुणस्यापि यो वा गुणस्य साध्याकाङ्क्षापूरणलक्षणः स एव कालस्यापि[1] ततो वैरूप्याभावात् तन्त्रत्वं युक्तं तदभावे त्विहावृत्तेरुभयसम्बन्धो लक्षणद्योतको भवतीति नन्वृत्विजो वृणीते ग्रहं सम्मार्ष्टीत्यादौ उपकारतुल्यत्वे ऽपि प्रत्येकं वाक्यपरिसमाप्तेरावृत्तिप्रसङ्गात् तन्त्रत्वं नास्तीत्याशङ्क्याह * द्वेधा हीति * सकृदुक्तस्यापि वरणसम्मार्गादेः सभामध्यस्थप्रदीपवत् प्रत्येकमुपकारकत्वेनान्वयोपपत्तेर्नाख्यातावृत्तिस्तत्र कल्प्येत्याशयः। एवं तर्ह्यरुणया पिङ्गाक्ष्यैकहायन्येति क्रयवदृत्विगादिसमुदाये ऽपि वाक्यपरिसमाप्तिः कस्मान्नेष्टेत्याशङ्क्याह * आख्यातगुणत्वेति * आख्यातेन च स्वार्थस्य गुणत्वप्राधान्यरूपेणानभिधाने प्रधानभूतेनर्त्विगादिना गुणभूतेन चारुणादिनान्वयायोगात् गुणत्वप्राधान्यरूपेण स्वार्थाभिधानद्योतनायाख्यातस्य गुणप्रधानतार्थगतोपचारेणोक्ता गुणभूतेन चरणादिना प्रधानभूतानामृत्विगादीनां समुदायिकर्तुमशक्यत्वात् आख्याततन्त्रत्वे ऽपि प्रत्येकं वाक्यसमाप्तिरङ्गीकार्येत्याशयः। पूर्वसूत्रगतानुषक्तनञभिहितविप्रतिषेधविवरणार्थेन यदीति भाष्येण फलं प्रति विधेयतयोक्तस्य यागस्य गुणावि-

१ फलस्यापीति २ पु॰ पा॰।

धानायानुवाद्यतयाभिधानं न युक्तं तत्रोत्पत्तिविधिव्यापारपूर्वकत्वे-नेतरविधिव्यापाराणां द्रव्यवत्फलस्याप्यनुत्पन्नया क्रिययान्वयायोगात् उत्पन्नायाश्च विधानायोगात् पूर्वं फलसम्बन्धे ऽपि तद्विधानार्थं यागस्यानुवाद्यत्वाद्विप्रतिषेधानुपपत्तिमाशङ्क्याह * तदिहेति * ततश्च न फलसम्बन्धे यागस्यानुवाद्यतेत्याशयः । कथं विधेयत्वस्य फलत्वाभावापादकतेत्याशङ्क्याह * उद्दिश्यमानं हीति * यमर्थमधिकृत्य प्रवर्त्तन्ते तत्प्रयोजनमिति नैयायिकोक्तलक्षणानुसारात् कृत्युद्देश्यप्रयोजनस्य फलत्वप्रसिद्धेर्विधेयत्वं च यागमनुतिष्ठता स्वाराज्यं कामयितव्यमित्युपादेयत्वापत्तेः । कृत्युद्देश्यत्वाभावात्फलत्वं न स्यात् प्रत्युत विधेयत्वादङ्गतैव स्यादित्यर्थः । एवं तर्हि फलसम्बन्धवत् द्रव्यसम्बन्धे ऽपि यागस्यैव सन्निकृष्टतया विधेयत्वेनैकरूप्यात् तन्त्रत्वं युक्तमित्याशङ्क्याह * यागो ऽपीति * यद्यपि विधित्वं प्रत्ययोपात्तं न नामपदमृच्छतीत्याघाराग्निहोत्राधिकरणवार्त्तिकोक्तन्यायेन सर्वत्र धात्वर्थावच्छिन्ना भावनैव विधेया तथापि फलं सिद्धवत्कृत्य यथापाद्यत्वेन यागो विधीयते नैवं द्रव्यं सिद्धवत्कृत्यापाद्यत्वेनासौ विधीयते निमित्तदेशकालसंस्कार्याणां पञ्चानामेव सिद्धवत्कारोपपत्तेर्द्रव्यस्य च देशादिचतुष्टयान्तर्गत्यसम्भवात्पारिशेष्यात्संस्कार्यत्वापत्तेस्तथा च सति तृतीयाबाधापत्तिरित्यर्थः। भूतभाव्युपयोगाभावाच्च द्रव्यस्य च संस्कार्यता न युक्तेत्याह * न चेति * एवं यजेः तन्त्रेण फलद्रव्यपदसम्बन्धे पूर्वपक्ष्युक्ते निरस्ते यदि कश्चिद् द्रव्यपदस्येतराभ्यां तन्त्रसम्बन्धं ब्रूयात् तन्निरासायाह * एतेनेति * यागस्य द्रव्यं प्रत्युपादानस्य निरस्तत्वेन फलस्य च यागं प्रत्युपादानस्य निरासात् सुतरां द्रव्यं प्रत्यसम्भावनेत्यर्थः । द्रव्यस्यैवंभूतप्रत्युपादेयत्वेनैकरूप्यं फलं प्रत्युपादानस्य निराकरिष्यमाणत्वात् न सम्भवतीत्याशयः । नन्वेवं सति फलस्य सर्वप्राधान्येनैकरूप्यादितराभ्यां तन्त्रसम्बन्धो भविष्यतीत्याशङ्क्याह * न चेति * फलस्य त्वितरे प्रत्युपादानमनाशङ्क्यमेवेत्याशयः। ननु यथा सोमेन यजेतेत्यादौ यागद्रव्ययोरेकस्यां भावनायामुपादानमिष्यते तथा फले ऽपि किं न स्यादित्याशङ्क्याह * एकेनेति * भावनायाः साध्यसाधनेतिकर्त्तव्यतारूपांशत्रयाकाङ्क्षत्वात् साधनाकाङ्क्षायां धात्वर्थान्वयनिवृत्तायामपीतिकर्त्तव्यताकाङ्क्षायां द्रव्येणाप्यन्वयो युक्तः । फलस्य तु साधनप्रतियोगिकसाध्यत्वसिद्ध्यर्थं साधनमात्राकाङ्क्षत्वात् एकेन साधनेन नैराकाङ्क्ष्ये कृते ऽन्यस्य तदुद्देशेनाविधानात् न तादर्थ्येनापाद्यता युक्तेत्याशयः । ननु द्रव्यमप्यप्राप्त-

त्वादवश्यविधेयं तस्य फलार्थत्वाभावे कैमर्थ्येन विधिः स्यादित्याशङ्क्याह * यथेति * प्रतिपदाधिकरणभाष्योक्तन्यायेन यागार्थं द्रव्यं भविष्यतीत्यर्थः । नन्वेवमपि द्रव्येण विशेष्यमाणस्यैव यागस्य फले विधानात् तन्त्रसम्बन्धाविरोध इत्याशङ्क्याह * न चेति * फलसाधनतया विधीयमानस्य यागस्य तृतीयानिर्दिष्टेन द्रव्येण मत्वर्थलक्षणां विना विशेष्टुमशक्यत्वादिति भावः । मत्वर्थलक्षणापरिहारार्थं तु फले यागविधाने यागे च द्रव्यविधाने चाभ्युपगम्यमाने वैरूप्यमपरिहार्यमित्याह * तत्रेति * नन्वर्थाद्यागस्य फलसम्बन्धे साधनत्वापत्तौ द्रव्यसम्बन्धे च साध्यत्वापत्तावपि धातुना स्वरूपेणाभिधानान्न वैरूप्यापत्तिरित्याशङ्कां निराकर्त्तुं तन्त्रसम्बन्धासम्भवमुपसंहरति * ततश्चेति * भावनान्वयनिरपेक्षस्य यागस्य विधातुमशक्यत्वात् अविधीयमानस्य च भावनान्वयद्वाराफलाद्यन्वयायोगाद्विधीयमानावस्थायामेव साधनरूपताभ्युपगन्तव्या । न चाशाब्देन साध्यसाधनत्वरूपेण शाब्दे व्यवहारेऽन्वयः सम्भवतीति शाब्देनैव साध्यसाधनरूपताभिधातव्येत्यपरिहार्यं वैरूप्यमित्याशयः । साध्यसाधनत्वरूपाभिधानस्य त्रिविधवैरूप्यापादकत्वप्रदर्शनायोपादेयेत्युक्तं साध्यस्य तावत्प्रयोजनत्वात् प्राधान्यम् । साधनस्य च साध्यसिद्ध्यर्थत्वेन पारार्थ्यात् शेषत्वापरपर्यायं गुणत्वं प्रसिद्धमेव प्राधान्यस्य चँ कृत्युद्देश्यं विनानुपपत्तेरुद्देश्यत्वापादकत्वम् अप्राप्तस्य चोद्देष्टुमशक्यत्वात् प्राप्तानुकीर्त्तनरूपानुवादापादकत्वम् एवं शेषत्वस्य शेषिपारतन्त्र्यरूपत्वात् पारतन्त्र्यापाद्यत्वलक्षणोपादेयत्वापादकत्वम् । उपादेयत्वस्य विध्यधीनत्वात् विधेयत्वापादकत्वमिति विरुद्धत्रिकद्वयापत्तिः । देशकालयोर्विधेयगुणभावेऽप्युपादेयत्वाभावात् प्राधान्यानुवाद्यत्वाभावेऽपि चोद्देश्यत्वाभ्युपगमात् कथं गुणत्वस्योपादेयत्वापादकत्वमुद्देश्यत्वस्य चानुवाद्यत्वापादकत्वमित्याशङ्कानिवृत्त्यर्थं यागशब्दः देशकालयोः स्वभावसिद्धत्वेनानापाद्यत्वात् सिद्धवत् करणरूपमुद्देश्यत्वं प्रधानत्वं स्वाभाविकत्वात् गुणत्वेऽपि नापनीयते कर्मणस्तु स्वभावसिद्ध्यभावात् उभयरूपाभिधानसम्भवे प्रतियोग्यन्वयानुरूपविवक्षोपपत्तेर्गुणत्वस्योपादेयत्वापादकत्वं सिद्धवत्करणस्य च स्वयम्प्राप्त्यनापादकत्वेऽप्यप्राप्तस्य सिद्धवत्कर्त्तुमशक्यत्वात् प्राप्त्यपेक्षत्वं युक्तमेवेत्याशयः । अतएवोद्देश्यानूद्यप्रधानभूतापेक्षणादित्यपेक्षामात्रमुक्तम् । इह च वदः सुपि क्यप्चेत्यत्र गदमदचरयमश्चानुपसर्गइत्येतत्सूत्रगतानुपसर्गपदानु-

१ सिद्धसाध्यरूपेत्यर्थः ।

वृत्त्या ऽनुपसर्गे सुबन्ते उपपदे वदतेः क्यप्प्रत्ययान्वाख्यानात् उपसर्गयोगे क्यप्प्रत्ययाभावेन किन्निमित्तसम्प्रसारणाभावात् ऋहलोर्ण्यदिति सामान्यविहितण्यत्प्रत्ययप्राप्तेः प्रवाद्यापवाद्येतिवदनुवाद्येति रूपापत्तेर्नु क्षिप्रं वाद्यं नूद्यमिति क्षिप्रवाचिनि नुशब्दे निपातरूपे सुप्युपपदे वदः क्यपं कृत्वा ऽनुवाद्यस्य प्राप्त्यपेक्षत्वेन क्षिप्रोद्यत्वायोगात् नूद्यं न भवतीत्यनूद्यमिति नञ्समासाश्रयणेन रूपसिद्धिः कार्या। ननु यद्यपि फलेनोपादेयत्वादिरूपेण यागो गृह्यते गुणेन चोद्देश्यत्वादिरूपेण तथापि एकेन रूपेणाभिधानादितरेण चार्थात्प्रतीतस्योभयसम्बन्धो न विरोत्स्यते इत्याशङ्क्याह * एकेति * आभिधानिकं रूपं विना शाब्दे व्यवहारे ऽन्वयायोगाद्यागस्यैकरूपाभिधाने ऽप्यविशेषादुपादेयत्वादिरूपेणाभिधानाश्रयणे गुणस्य यागेनासम्बन्धादुद्देश्यत्वादिसाधारणादिरूपेण फलस्यासम्बन्धस्तन्त्रत्वाभाव इत्यतीतानुषङ्गेण समापनीयम्। तर्ह्युपादेयोद्देश्यत्वादिसाधारणरूपेणाभिधानादुभयसम्बन्धो भविष्यतीत्याशङ्क्याह * तत्रेति * अनेन च भिद्येत हीति भाष्यं व्याख्यातम्। ननु सकृदुच्चरितस्यैवोभयसम्बन्धात् कथं वाक्यभेदापत्तिरित्याशङ्क्याह * अवश्यं हीति * सकृदुच्चरिते चास्मिन् विवक्षैकैव दृश्यतइति अनेन न्यायेन सकृदुच्चरितस्य विरुद्धानेकरूपाभिधानपरत्वायोगाद्यत्र गुणसम्बन्धे यागस्योद्दिश्यमानादिरूपमभिधेयं यत्र च फलसम्बन्धे यागस्योपादीयमानाद्यात्मकताभिधेया तत्राख्यातपदावृत्त्या स्वाराज्यकामो यजेत वाजपेयेन यजेतेति द्वे वाक्ये कल्पनीये स्यातामित्यर्थः। भावनायाः सर्वत्रैकरूप्यात्तन्त्रेणानेकसम्बन्धसम्भवे ऽपि भावनासम्बन्धोत्तरकाले धात्वर्थस्य कारकसम्बन्धालोचनकाले वैरूप्यापत्तिरिति सूचयितुम् * यागस्येत्युक्तम्। नन्वित्याशङ्काभाष्यमाख्यातैक्येनैकवाक्यतायाः स्पष्टत्वादयुक्तमाशङ्क्य व्याचष्टे * ननु चेति * तन्त्रेणाख्यातस्योभयसम्बन्धाद्वाक्यार्थद्वित्वेन वाक्यद्वित्वाभिधानमित्यर्थः। नैतदेवमिति परिहारभाष्यमाख्यातद्वयाभावे ऽपि तन्त्रसम्बन्धोपपत्तेः। पदचतुष्ट्याप्रसङ्गादयुक्तमाशङ्क्याह * चत्वारीति * उच्यतइत्याशङ्काभिप्रायविवरणार्थं भाष्यं व्याचष्टे * परस्य त्विति * विभक्त्यभावा- ३०।१९
त्कर्मकरणत्वनिरपेक्षस्वरूपमात्रेण धात्वर्थस्य धातुना ऽभिधानादित्याशयः। कारकरूपाभिधानं विना क्रियारूपया भावनया सहान्वयायोगात्कारकरूपेणैव धात्वर्थो ऽभिधातव्यः। ततश्च धात्वर्थाभिधानलक्षणकार्यप्राधान्यात्कार्यगतकर्मकरणत्वाभिधानवैरूप्याद्याग

यागेनेति शब्दरूपस्य भेदापत्तिरिति परिहाराभिप्रायविवरणार्थं नैतदस्तीति भाष्यं व्याचष्टे * नैतदस्तीति * यद्यपि विभक्त्यभावाद्धातोः स्वतो रूपभेदो नास्ति तथापि यद्यप्राप्तो धात्वर्थस्ततो धातुविधिः प्राप्ते त्वनुवाद इति विध्यनुवादरूपत्वात् अर्थतो रूपभेदः प्रसज्येतेति भाष्यार्थः। विधिशब्देनोपादानगुणत्वे ऽनुवादशब्देन चोद्देश्यत्वप्राधान्ये ऽप्युपलक्षिते वाजपेयेन गुणेन सम्बन्धं परार्थमनूद्येतेत्यनेन यद् गुणसम्बन्धे धात्वर्थस्यानुवाद्यत्वं वैरूप्यापादनायोक्तं तदाक्षेपार्थमाहेति भाष्यं व्याचष्टे * आहेति * ननु वाजपेयशब्दस्याख्यातकृत्यवत्प्रवर्त्तनानभिधायित्वे ऽपि विधेयसमर्पकत्वाद्विधायकत्वं भविष्यतीत्याशङ्क्य भाष्यकृता नामशब्दार्थेत्युक्तं व्यापार एव साक्षाद्विधेयः न च नामशब्दस्यार्थो व्यापार इत्यर्थः। नन्वाख्यातशब्दार्थव्यापारद्वारा नामशब्दार्थस्य विधेयत्वं भविष्यतीत्याशङ्क्य यश्चात्रेत्युक्तं पूर्वापरीभूतानिष्पन्नरूपत्वात् धात्वर्थ एव व्यापारः धातोश्चानुवाद्यत्वसमर्पकत्वस्य त्वयोक्तत्वात्तस्यार्थो व्यापारो न विधातुं शक्यतइत्याशयः। अतः फलसम्बन्धवद् गुणसम्बन्धो ऽप्याख्यातस्य विधिरूपत्वात् न वैरूप्यापत्तिरिति तात्पर्यार्थः यदीति समाधानभाष्यस्यायमाशयः धात्वर्थानुवादे ऽपि प्रत्ययार्थस्य भावनायाः सर्वकारकानुरञ्जनसहत्वात् फलविशिष्टत्ववद् गुणविशिष्टतयाप्यैकरूप्येण विधानात्तद्द्वारा नामशब्दार्थस्यापि विधानोपपत्तेर्न विध्यभावदोषापत्तिः।यदि तु भावनातिरस्कारेण साक्षाद् धात्वर्थस्यैव फलवद् गुणविधिरिष्यते ततस्तस्य व्यापारात्मकत्वे ऽप्यन्योत्पादानुकूलस्वभावत्वाभावेनाक्रियारूपस्यैकरूप्येणातुल्यरूपानेककारकानुरञ्जनासहत्वात् फलं प्रति गुणभूतस्य गुणं प्रति प्राधान्यायोगेनोभयं प्रति गुणत्वापत्तेः प्रत्येकं वाक्यपरिसमाप्तिप्रसङ्गात् फलगुणयोः परस्परानन्वयः स्यादिति तत्र वाजपेयाख्यद्रव्यं प्रति यागस्य गुणत्वे द्रव्यस्य यागसंस्कार्यत्वापत्तेस्तृतीयानुपपत्तिदोषः कस्मान्नोक्त इत्याशङ्क्याह * यदीति * स्पष्टतानादरकारणमित्याशयः। ननु यथा व्रीहिविधेर्दर्शपूर्णमासविध्येकत्वाभावे ऽपि प्रकरणेन दर्शपूर्णमासयोरेव व्रीहीणामवरोधात् व्यवस्था तथा वाजपेयस्यापि स्वाराज्यकामयागएव प्रकरणेनावरोधात् व्यवस्था भविष्यतीत्याशङ्कार्थं प्रकरणादिति भाष्यं व्याचष्टे * प्रकरणेति * नेति परिहारभाष्यमपूर्वसाधनांशलक्षणार्थं वाक्यस्य प्रकरणापेक्षित्वादविरोधोपपत्तेरयुक्तमाशङ्क्य व्याचष्टे * नेति * यद्वाजपेयेन यजेत तत् स्वाराज्यकामा यत् स्वाराज्यकामो यजेत तद्वाजपेयेनेति चै-

कविशेषितेन यागेनेतरस्य सम्बन्धे ज्ञातवद्विशेषणत्वेनोपादाना-दज्ञातवच्च विधानाद्वैरूप्यलक्षणवाक्यभेदापत्तेस्तन्त्रसम्बन्धे परस्परानपेक्षेति भाष्यतात्पर्यव्याख्या तत्रैवं परस्परनैरपेक्ष्ये सति गुणो विधीयमानः सार्वत्रिको ऽपूर्वयागसम्बन्धो वेति मात्रशब्दस्य द्वेधा व्याख्या प्रकरणानिष्पत्तेः शुद्धयजिसम्बन्धादित्याशङ्कापरिहारः अ-स्त्वित्याशङ्काभाष्यं स्पष्टत्वादव्याख्याय नेत्यादिपरिहारान्तरभाष्यं व्याचष्टे * तेनेति *

॥ अथाग्नेयादीनां नामनामताधिकरणम् ॥ ६ ॥

## तद्गुणास्तु विधीयेरन्नविभागाद्विधानार्थेन चेद-न्येन शिष्टाः ॥ ९ ॥

अत्र भाष्यकृताग्नेयादयः शब्दा गुणविधयः कर्मनामधेयानि वेति चिन्ता दर्शिता साष्टाकपालादिसामानाधिकरण्यात् कर्मणश्चा-श्रवणान्मन्त्रतस्तु विरोधे स्यात् इत्यत्र चाग्नेयाग्नीषोमीययोर्ब्राह्मण-क्रमविपर्ययेण मन्त्रक्रमाम्नानस्य वक्ष्यमाणत्वेन क्रमविनियुक्तमन्त्रा-भावात् श्रुत्यविनियुक्तानां च मन्त्राणां स्वार्थसमवायकल्पकत्वाभा-वात् मान्त्रवर्णिकदेवताकल्पनानुपपत्तेर्द्रव्यदेवतासंयोगेनापि यागस्य कल्पयितुमशक्यत्वात् आग्नेयं चतुर्द्धा करोतीत्यादिव्यवहारस्य द्रव्य-विषयत्वेन कर्मनामानपेक्षत्वात् निष्प्रयोजनत्वेनाप्याग्नेयादिशब्दस्य कर्मनामत्वशङ्कानुपपत्तेरयुक्तेत्याशङ्क्याह * एवमिति * अयमाशयः पूर्वाधिकरणे तन्त्रसम्बन्धानुपपत्त्या विशिष्टविधौ निरस्ते क्व चिद-प्यनावृत्तेन प्रत्ययेन विशिष्टविधिर्नसम्भवतीत्याशङ्क्य विशिष्टविधिव्यु-त्पादनायैतदधिकरणं तद्व्युत्पादनस्य चोत्पत्तिशिष्टबलीयस्त्वसिद्धिः प्रयोजनं सोमेन यजेतेति सोमविशिष्टे यागे श्रुतेन प्रत्ययेन विहिते शुद्धस्याप्राप्तत्वेनानुवादायोगात् विशिष्टस्य च द्रव्यान्तरानाकाङ्क्ष-त्वान्नोत्पत्तिशिष्टसोमावरुद्धे ज्योतिष्टोमे खनित्रादिद्रव्यान्तरं वि-धातुं शक्यमित्युद्भिदादिशब्दानां नामधेयत्वं सिध्यति श्रुतेन तु प्र-त्ययेन शुद्धं यागं विधायोपपदानर्थक्यपरिजिहीर्षया तदर्थविधा-नायाश्रुतप्रत्ययान्तरकल्पने श्रुतस्यैव वा वृत्तिकल्पने शुद्धयागानुवा-देनोत्पत्त्युत्पन्नशिष्टयोर्वाक्यीयत्वाविशेषात्तुल्यबलत्वेन विकल्पोप-पत्तेर्नामधेयत्वं न सिध्यतीत्युद्भिदादिशब्दानामुत्पत्तिशिष्टगुणाव-रुद्धे यागे गुणान्तरविधायकत्वासम्भवान्नामधेयत्वं द्रढयितुं विशिष्टविधिरिह व्युत्पाद्यते सर्वे चात्र विशिष्टविधयः उदाह-

रणं तत्र सन्निकृष्टविध्यसम्भवनिबन्धनत्वाद्विप्रकृष्टविधेर्विशिष्टविधौ च सन्निकृष्टविप्रकृष्टयोर्विशेष्यविशेषणयोर्युगपद्विधेयत्वात् सन्निकृष्टविधानार्थं तस्य विधेयत्वसम्भवो विप्रकृष्टविधानार्थं चासम्भवो ऽभ्युपगन्तव्यः स्यादिति युगपद्विरुद्धसम्भवाऽसम्भवायोगात् न क चित्सकृच्छ्रुतेन प्रत्ययेन विशिष्टविधिः सम्भवतीति प्राप्ते तत्यागादिकर्मतद्विशेषणभूताश्च सोमादयो गुणा युगपद्विधीयेरन्निति प्रतिज्ञाय शुद्धस्य कर्मणो ऽनुष्ठानाशक्तेर्विधानासम्भवाद्विधानार्थे लिङ्प्रत्यये विशेषणविशेष्यविधिविभागाभावादिति हेतुरुक्तः एवं तर्ह्यंशत्रयोपेताया भावनायाः सर्वत्रानुष्ठानयोग्यत्वेन विधेयत्वाद्वाक्यान्तरगतानामप्यङ्गानां प्रधानविधिनैव विधेयत्वापत्तेरुत्पत्त्युत्पन्नशिष्टविवेको न स्यादित्याशङ्क्य न चेदन्येन शिष्टा इत्युक्तं किं चित्केन चित्कथं चित् कुर्यादिति सर्वत्र सामान्यतः साध्यसाधनेतिकर्त्तव्यतान्वितभावनाविधाने ऽपि विशेषाकाङ्क्षायां वाक्यान्तरविहितविशेषलाभेनोपपन्नस्य प्रधानविधायिनः प्रत्ययस्य तद्विधानक्लेशाङ्गीकरणायोगात् स्ववाक्यगतविशेषविधानमात्रपर्यवसानोपपत्तेरुत्पत्त्युत्पन्नविशिष्टविवेकाविरोध इत्याशयः । अतः परमार्थतो विशिष्टविधिव्युत्पादनायैवैतदधिकरणम् तथापि पूर्वापवादत्वेन सङ्गतिं वक्तुं भाष्यकृता गुणविधयः कर्मनामधेयानि वेति विचारो दर्शित इत्यपवादशब्देन सूचितं । नामधेयत्वाशङ्कायाश्चेह निर्बीजत्वात्तदपवादो ऽनर्थक इति तद्द्वारा नामधेयकार्यस्य गुणफलोपबन्धादेरपवादो ऽयमिति नामधेयकार्यशब्देन सूचितम् । नामधेयाभावे ऽप्याग्नेयं चतुर्द्धा करोतीत्यादिव्यवहारोपपत्तेश्चशब्देनाग्नेयादिशब्दे गुणविधिनामधेयचिन्तायाः निष्प्रयोजनत्वं सूचितम् । उद्भिदादिशब्देषु हि गुणविधित्वे खनित्रादिना यष्टव्यं नामधेयत्वे सोमेनैवेति चिन्ताप्रयोजनं चित्राशब्देष्वप्येवं स्पष्टमेव प्रयोजनं तत्प्रख्याविचारे ऽप्यग्निहोत्रशब्दस्य गुणविधित्वे दर्विहोमेष्वविहितदेवताकेष्वग्निर्देवता नामत्वे मान्त्रवर्णिकी आघारशब्दस्य तु गुणविधित्वे द्रवद्रव्यमात्रेणोपांशुयाजः कार्यो नामत्वे त्वाज्येनैवेति प्रयोजनमाग्नेयादिशब्दस्य तु गुणविधिनामधेयत्वयोर्न प्रयोजनविशेषो ऽस्तीत्यपवादत्वे सङ्गतिप्रदर्शनमात्रार्थः । सन्देहवेलायां नामधेयपक्षोपन्यासो ऽत एवानेकगुणोपादानात् गुणविध्यसम्भव एव पूर्वपक्षितः । सिद्धान्ते ऽपि गुणविधित्वसमर्थनमात्रं कृतं न नामत्वं निराकृतं गुणविध्यसम्भवस्य चाधिकरणपञ्चकोक्तस्यापवादायैतदधिकरणं गुणविध्यसम्भवे त्वाग्नेयादिशब्दस्यानर्थक्यपरिहाराया-

गत्या यथा कथं चिन्नामत्वं शिरो वा एतद्यज्ञस्य यदाग्नेयो हृदयमुपांशुयाजः पादावग्नीषोमीय इत्यादि व्यवहारसिद्ध्यर्थमेष्टव्यमिति दर्शयितुं नामधेयत्वोपन्यास इति द्रष्टव्यम्। ननु समाप्तायां नामधेयत्वचिन्तायाम् अपवादप्रस्तावस्योचितत्वात् दर्विहोमपदमविचार्यापवादो न युक्त इत्याशङ्कते *कस्मादिति* वैश्वदेवपदस्य तु नामत्वमङ्गीकृत्य गुणार्थताप्यस्ति नास्तीति वैश्वदेवाधिकरणे चिन्तेत्यभिप्रेत्य तच्चिन्तेहानाशङ्किता समिदादिपदानामपि तत्प्रख्यन्यायान्नामत्वे सत्येव पार्वणशब्दस्य कर्मनामधेयस्यापि कालाभीज्या समुदायाभीज्या वेति विचारेण देवताविधित्वावसायात्तन्न्यायेन देवताविधित्वमङ्गीकृत्य प्रकृतसमिदादिशब्दवाच्यदेवतासंस्कारार्थाः प्रयाजा इत्याशङ्क्य द्वितीयान्तत्वेन देवताविधित्वायोगात् मान्त्रवर्णिकसमिदादिदेवतायोगेन यागेषु लक्षणया समिदादिशब्दप्रवृत्तेर्मन्त्रवर्णेभ्यश्चापूर्वाणां देवतानामेव यागार्थत्वप्रतीतेर्न देवतासंस्कारार्थतेति नवमे वक्ष्यमाणत्वात् नेह तच्चिन्ताशङ्किता। दर्विहोमपदं किं गुणविधिः कर्मनामधेयं वेत्यष्टमे विचारयिष्यमाणमिहैव कस्मान्न विचारितमित्याशङ्कितम्। लौकिकहोमेष्वाचारतस्त्वग्बिलया मूलदण्डया दर्व्या जुहोतीति स्मृत्या च विधित्सितस्य दर्विलक्षणस्य गुणस्य प्राप्तेः पुरो ऽनुवाक्यामनुयाज्यया[1] जुहोति सदेवत्वायेति विध्येकवाक्यतया चार्थवादत्वेनोपयुक्तस्य समासान्निःकृष्य दर्विपदस्य तद्विधायित्वमङ्गीकृत्य स्मृतिमूलत्वकल्पनायोगात्तत्प्रख्यन्यायेनैव नामधेयत्वं सिद्धं वैदिकेष्वपि स्रुवेण जुहोति चमसेन जुहोतीति साक्षाद्विहितेन स्रुवादिना सह समासान्निष्कृष्य विधेयत्वेन कल्प्यमानाया दर्वेर्विकल्पायोगाच्छास्त्रान्तरेण वैपरीत्यप्राप्तेस्तत्प्रापणस्यासम्भवेन वैयर्थ्यापत्तेस्तेनैव च सिद्धमित्यभिप्रेत्य परिहरति * विचारितमिति* एवं त्वाष्टमिकस्य गुणविधिनामधेयविचारस्य पौनरुक्त्यापत्तेरपरितोषादन्यथा परिहरति * विध्युद्देशगतानामिति * ततश्च विध्युद्देशगतानां नामधेयविचारस्य समाप्तत्वाद्युक्तो ऽपवाद इत्याशयः अर्थवादगतानामपि तुल्यन्यायतया सिद्धस्य नामधेयत्वस्य किं लौकिकानामेवैतन्नामधेयमुत अलौकिकानां वैदिकानां तत्रापि किं यजतिचोदनानामप्युत जुहोतिचोदनानामेवेति ।विशेषविचारार्थं स्मारणमितीहाप्यपरितोषादन्यथा परिहरति * सिद्धे वेति * ननु विशेषविचारे गुणविध्याशङ्का न युक्तेत्याशङ्क्याह * या त्विति * परि- ३०२।२
चोदनामात्रत्वोपपादनायात्राधिकरणमध्यशब्दः तत्र हि दर्विहोमो

[1] अनूच्य याज्यया जुहोतीति २ पु० पा०।

यज्ञाभिधानं होमसंयोगादिति सूत्रेण होमपदेनास्य समासपदस्य संयोगात्तत्र च होमस्य प्राधान्यातद्वाची दर्विहोमशब्द इति यज्ञशब्दलक्षितकर्मनामधेयत्वं प्रस्तुत्य तद्विशेषे ऽपेक्षिते स लौकिकानां स्यात् कर्त्तुस्तदाख्यत्वादित्यनेन स्मार्त्ताष्टकादिकर्त्तरि दर्विहोमिकसमाख्यानात् स्मार्त्तानामेवैतन्नामेति पूर्वपक्षं कृत्वा सर्वेषां वा दर्शनाद्वा ऽस्तु होमे इत्यनेन वैदिके ऽपि वास्तु होमे यदेकया जुहुयाद् दर्विहोमं कुर्यादिति दर्विहोमशब्दप्रयोगात् वैदिकानां चैतन्नामकत्वाभावे सत्येकया ऋचा दर्विहोमशब्दप्रयोगानुपपतिप्रसङ्गात् होमशब्दस्य च सामान्याभिधायित्वात्सर्वेषां नामेति सिद्धान्तिते तत्रापि विशेषापेक्षायां यजतिचोदनानामपि दर्शपूर्णमासादीनां चतुरवत्तादिवाक्यैर्होमत्वापत्तेस्तेषामप्येतन्नामेति प्राप्ते जुहोतिचोदनानां चातत्संयोगादित्यनेन होमशब्दसंयोगात् होमनामत्वप्रतीतेर्यजतिचोदनानां च देवतोद्देशद्रव्यत्यागमात्रेण पर्यवसानाच्चतुरवत्तादिवाक्यैर्यागीयद्रव्यप्रतिपत्त्यर्थं प्रक्षेपविधाने ऽपि होमत्वानापत्तेर्जुहोतिचोदनानामेव दर्विहोमशब्दो नामेति सिद्धान्तयित्वा द्रव्योपदेशाद्वा गुणाभिधानं स्यादित्यनेन दर्विहोमशब्दात्पात्ररूपद्रव्योपदेशप्रतीतेर्गुणविधिरित्याशङ्क्य न लौकिकानामाचारग्रहणात् शब्दवतां चान्यार्थविधानात् इत्यनेन लौकिकेष्वाचारेषु दर्व्या गृहीतत्वाद्वैदिकेषु चान्येषां स्रुवादीनां पात्राणां होमनार्थितानामाकाङ्क्षितानां विधानाद्दर्विसमासान्निष्कृष्य विधानं न युक्तमित्याशङ्कां निराकृत्य नामधेयत्वमुपसंहृते ननु विशेषविचारो ऽपीहैव नामधेयचिन्ताधिकारात्कर्त्तुं युक्तो नाष्टमे विशेषातिदेशलक्षणत्वात् तस्येत्याशङ्क्याह * सर्वमेवेति * लक्षणान्तरगोचरो ऽपि विचारः प्रसङ्गाल्लक्षणान्तरे क्रियमाणो न दोषमावहतीत्याशयः । कथं तत्र प्रसङ्ग इत्यपेक्षायामाह * पूर्ववदिति * अविहितेतिकर्त्तव्यताकेष्वतिदेशेनेतिकर्त्तव्यताप्राप्ता युक्तायां दर्विहोमेष्वविहितेतिकर्त्तव्यताकेष्वपि नातिदेशेनेतिकर्त्तव्यता प्राप्तिरस्तीत्यपवादार्थं किं दर्विहोमाः कुतश्चिद्धर्मग्राहित्वात् पूर्ववन्तो ऽथ पूर्वा इति चिन्तामधिकृत्य सर्वेषां जुहोतिचोदितानामपूर्वत्वसिद्ध्यर्थं विशेषचिन्तेत्यर्थः आग्नेयादिवाक्येषु कर्माश्रवणात् नाग्नेयादिशब्दानां तन्नामत्वशङ्कायुक्तेत्याशङ्कते * केनेति * तत्र शिरो वा एतद्यज्ञस्य यदाग्नेय इति यज्ञावयवस्तुत्या प्रसिद्धयागनामोपांशुयाजशब्दसाहचर्याच्च यागनामत्वप्रतीतेर्व्युत्क्रमाम्नातानामष्टाकपालादीनां लिङ्गदर्शनत्वात् कस्यां चिच्छाखायां क्रमाम्नानं भविष्यतीत्यारोप्य मान्त्रवर्णिकदे-

वतान्वयेन यागकल्पनोपपादनार्थं प्रकाशनार्हानुष्ठेयक्रियां विना प्रकाशकमन्त्रान्वयायोगादष्टाकपालादीनामप्राप्तत्वेन विधेयत्वावसायात् विधेश्च भावनैकगोचरत्वात् तदाक्षेपकत्वेनाष्टाकपालादिवाक्येषु भावनाप्रतीतिं तावदाह * तादिति * भावनानां चावच्छेदकधात्वर्थविशेषापेक्षायां यागाख्यधात्वर्थान्वयसिद्धये ऽग्न्यादिदेवत्यमन्त्रान्वयं दर्शयितुमाह * तासां चेति*आनन्तर्यमचोदनेत्यानन्तर्यलक्षणस्य क्रमस्याविनियोजकत्वाभ्युपगमात् पाठसादृश्यलक्षणक्रमप्रतिपत्त्यर्थः स्थानशब्दः यागाङ्गमन्त्रवाचियाज्यानुवाक्यासमाख्ययापि यागाक्षेपसूचनार्थं याज्यानुवाक्यायुगलानीत्युक्तम् ननु श्रुत्यविनियुक्तानां मन्त्राणां करणत्वानवगमाददृष्टार्थत्वेनाप्यङ्गत्वोपपत्तेः स्वार्थसमवायकत्वाभावान्न तत्प्रतिपाद्यस्याग्न्यादेः क्रियाङ्गत्वसिद्धिरित्याशङ्क्योपांशुयाजे याज्यानुवाक्यायुगलानां क्रमाविनियुक्तानामपि देवताकल्पकत्वदर्शनात् तत्सामान्यमात्रेणापि देवताकल्पकत्वसम्भवं दर्शयितुमाह * तानीति * ननूपांशुयाजे यजिना विहितस्य यागस्य देवताकाङ्क्षत्वाद्यथाकथंचिदुपस्थापितदेवताग्रहणं युक्तम्। इह तु यज्यश्रवणेनानाकाङ्क्षिताया देवतायास्तत्सम्बन्धप्रमाणतद्धिताद्यभावेन युक्ता कल्पनेत्याशङ्क्याघारादिवद्यज्यश्रवणे ऽपि क्रियातत्समवेतार्थप्रकाशनेन मन्त्राणां क्रियाङ्गतेति सामान्यतो दृष्टेनाग्न्यादेः क्रियाङ्गत्वमुपपादयति * न हीत्यादीना * क्रियाङ्गमित्यन्तेन नन्वग्न्यादेः क्रियान्वये देवतात्वावगतिः कथमित्याशङ्क्याह * न चेति * अग्निर्मूर्द्धेत्यादिमन्त्रेष्वग्न्यादीनां प्राधान्येनाभिधानाद्यमर्थं प्राधान्येन मन्त्रो ऽभिदधाति सापि देवतेति लक्षणेन देवतात्वावसायात् कर्मस्वपि देवतात्वावगतिरित्यर्थः। नकेवलं मन्त्रेष्वग्न्यादीनां देवतात्वात् कर्मस्वपि देवतात्वं किं त्वष्टाकपालादिशब्दानामनेकत्र पुरोडाशशब्दसामानाधिकरण्यदर्शनादिहापि ते पुरोडाशं कूर्मभूतं सर्पन्तमपश्यन्नित्यष्टाकपालवाक्यशेषात् पुरोडाशपरत्वावगतेः पुरोडाशादीनां च वृद्धव्यवहारात् धानाः करम्भः परिवापः पुरोडाशः पयस्येत्येष वै यज्ञो हविःपङ्क्तिरित्यादिलिङ्गाच्च हविष्ट्वप्रसिद्धेर्हविःशब्दस्य चार्च्चिशुचिहुसृपिछदिभ्य इसिरिति जुहोतेरौणादिके कर्मणि इसिप्रत्यये कृते हूयतइत्येतस्मिन्नर्थे हविःशब्दव्युत्पत्तेर्देवतां च विना होमायोगात् द्रव्याकाङ्क्षावशादग्न्यादेर्देवतात्वावगतिरित्याह * पुरोडाशादिभिरिति * जुहोत्युत्पन्नस्यापि हविःशब्दस्याहूयमाने ऽपि द्रव्ये हवींष्यासादयतीति प्रयोगदर्शनात् तादर्थ्यनिमित्तत्वाप्रतीतेरजुहो-

तिचोदिते कर्मणि होमस्यैव यागीयद्रव्यसंस्कारार्थत्वेन द्रव्यस्य होमार्थत्वायोगात् यागार्थद्रव्यवाची हविःशब्द इति मत्वा देवतान्वयं विनापि द्रव्यान्वयमात्राद्यागानुमानसूचनार्थं यागेत्युक्तम् । नन्वेवं सत्यपि देवतान्वये कथं यागकल्पनं कथं च सत्स्वपि यागेष्वाग्नेयादिशब्दानां नामतेत्याशङ्क्याह * इतीति * यजतिस्तु द्रव्यफलभोक्तृत्वसंयोगादित्यत्र द्रव्यदेवतान्वयेन यागकल्पनस्य वक्ष्यमाणत्वाद्विधित्सितस्य च गुणस्यान्यतः प्राप्तौ नामत्वस्योक्तत्वात् उभयसिद्धिरिति भावः। नन्वष्टाकपालादिवाक्यान्याग्नेयादिशब्दैर्विना पर्यवस्यन्ति न वातत्रापर्यवसाने स्वार्थासमाप्तस्य वाक्यस्य वाक्यान्तरान्वयायोगात् मन्त्रान्वयाभावे तत्प्रतिपाद्यदेवतान्वयकल्प्ययागासिद्धिः । पर्यवसाने त्वाग्नेयादिशब्दस्यानन्वयान्नामत्वानुपपत्तिरित्याशङ्क्याश्रुतयागनामत्वाशङ्कासम्भवे ऽपि च चतुरवत्तं जुहोतीति श्रुतहोमनामत्वेन पूर्वपक्षो भविष्यतीत्याह * अथ वेति * चतुरवत्तवाक्याद्धोमनिष्पत्तावपि आग्नेयादिशब्दानां कथं तन्नामतेत्याशङ्क्य क्रमविनियुक्तमन्त्रवशात् देवताप्राप्तेस्तत्प्रख्यन्यायेनैवेति दर्शयितुं तथैवेत्युक्तम्। सकृच्छ्रवणेन होमैक्यान्मन्त्राणां च बहुत्वाद्विसंख्यत्वेन क्रमानुपपत्तिमाशङ्क्य यावद्द्रव्यमित्युक्तम । कानि द्रव्याणीत्यपेक्षिते ऽष्टाकपालादीनां सम्बन्धिनां होमानामित्युक्तं कथं चतुरवत्तवाक्यस्याष्टाकपालादिविषयतेत्याशङ्क्याष्टाकपालादीनां चतुरवत्ततोक्ता तदुपपादनार्थं द्विरिति वाक्याद्व्यवदानसिद्धिरुक्ता तस्याष्टाकपालादिविषयत्वोपपादनार्थं हविष्ट्वादित्युक्तम्। एवमपि चतुरवत्तनिष्पत्तिः कथमित्यपेक्षिते चोदनान्तरेणेत्युक्तम्। ननूपस्तृणात्यभिघारयतीति चोदनान्तरेणोपस्तरणाभिघारणयोर्ग्रहणे ऽपि तयोरुपस्तरणाभिघारणयोरुपस्तृणन्नभिघार्याज्यस्य यजेतेति ध्रौवाज्यसाधनत्वेनाष्टाकपालादीनां कथं चतुरवत्ततेत्याशङ्क्य तत्संस्कारार्थेत्युक्तं दशमे कृष्णलचरावुपस्तरणाभिघारणयोरर्थलोपेन बाधं वक्तुं कर्म वा संसर्गार्थनिवृत्तित्वात् तस्मादाप्तिसमर्थत्वमिति सिद्धान्तसूत्रे हविषः स्रुक्संसर्गस्योपस्तरणाभिघारणयोर्निवर्त्यत्वेन प्रयोजनस्य कृष्णले च विशदत्वेन स्वत एव निवृत्तेश्चत्वारि चत्वारि कृष्णलान्यवद्यति चतुरवत्तस्याप्त्यै इति चोपस्तरणाभिघारणसाध्यस्य चतुरवत्तत्वसम्पादनस्यान्येनाप्तेस्तदकरणसमर्थनादकरणं तयोरिति वक्ष्यमाणत्वाद्धविषः स्रुच्यसंसर्गलक्षणसंस्कारार्थत्वमनयोरवसीयतइत्याशयः । नन्वग्नीषोमीयब्राह्मणस्य प्राक्पाठादाग्नेयब्राह्मणस्य च पश्चात्पाठाद्याज्यानुवाक्यायुगलयोश्च ब्राह्मणक्रमविपर्ययेण पा-

ठादविद्यमानक्रमाम्नानाध्यारोपेणात्यन्तक्लिष्टनामत्वाशङ्का न युक्तेत्याशङ्क्य * आहैवं चेति * प्राप्ते कर्मण्याग्नेयादिवाक्यैर्द्रव्यदेवताद्यनेकगुणविधाने चोदिते हि तदर्थत्वात् तस्य तस्योपादिश्यतेत्यनेन वाक्यभेददोषापत्तिः । विशिष्टविधाने तु सन्निकृष्टविप्रकृष्टविशेषणविशेष्यरूपानेकार्थविधानापत्तेस्तत्र च सन्निकृष्टविधानासम्भवनिमित्तत्वाद्विप्रकृष्टविधानस्य युगपत्सन्निकृष्टविधानसम्भवासम्भवाभ्युपगमदोषसम्भवाद् गुणविध्यसम्भवमात्रमत्र पूर्वपक्षिणोऽभिमतं तथा च सत्याग्नेयादिशब्दानर्थक्यापत्तेस्तत्परिहारार्थं यथाकथञ्चिन्नामधेयत्वाभिधानमित्याशयः । एवं नामधेयत्वे सत्याग्नेयादिशब्दस्य गुणविधित्वाभावान्न सन्निकृष्टविप्रकृष्टविशेष्यविशेषणरूपानेकार्थविधिनिमित्तो युगपत् सन्निकृष्टविप्रकृष्टविधिसम्भवासम्भवाभ्युपगमदोषो भविष्यत्यतदर्थं नामधेयत्वं यथाकथञ्चिदुक्तं न तु पूर्वपक्षिणोऽभिमतमित्यर्थः । पूर्वपक्षभाष्यं चानेन व्याख्यातं तत्र च विशिष्टविधेः सिद्धान्तिनोऽभिमतत्वात् विशेष्यस्य यागस्याश्रुतत्वेन द्रव्यदेवतासम्बन्धलक्षणगुणविधिकल्प्यत्वात् श्रुत्या गुणमात्रविधिं मत्वा गुणे विधिशब्दः तस्मिन्सत्यनेको विशेषणविशेष्यरूपोऽर्थोऽभिधीयते तत्र च सन्निकृष्टविध्यसम्भवनिमित्तत्वाद्विप्रकृष्टविधेर्युगपत्सन्निकृष्टविशेष्यविधिसम्भवासम्भवाभ्युपगमदोषापत्तिरित्युक्तम् । ननु विशेष्यस्य यागस्याश्रुतत्वात् कथं गुणविधौ सति विशेषणविशेष्यरूपानेकार्थविधिः स्यादित्याशङ्क्याग्निर्देवता पुरोडाशो द्रव्यमिति द्रव्यदेवतासम्बन्धलक्षणगुणविधिद्वारेत्युक्तमिति भाष्यं योज्यम् । एतच्च वार्त्तिककृताघाराग्निहोत्राधिकरणे परदौर्बल्यवतोऽष्टौ श्रुतिप्रकारान् परोक्तान्निराकुर्वता विशिष्टविधेरत्यन्तक्लिष्टत्वं तृतीयस्थानानिवेशासम्भवोपपादनार्थं वक्ष्यमाणत्वान्नेह प्रपञ्चितमित्यनवद्यम् । सूत्रं योजयन् सिद्धान्तमाह * तथेति * यत्र ३०३।९
पुनरन्येन वचनेन शिष्टा गुणा भवन्तीति भाष्याद्विशेषणस्यैवान्यतः प्राप्तावविधेयत्वं विशेष्यस्य त्वन्यतः प्राप्तावपि तन्निरपेक्षविशेषणविध्ययोगात् विधेयतेत्याभाति तच्च सर्वतो पदार्थसङ्क्रान्तविधिशक्तौ धात्वर्थानुवादाभ्युपगमात् अयुक्तमित्याशङ्क्य गुणग्रहणस्योपलक्षणार्थत्वं दर्शयितुं यागइत्युक्तम् । न चेदिति सूत्रावयवे प्राप्तेर्विधेयत्वहेतुत्वाभिधानार्थं इति प्राग्व्याख्यया सूचितम् । तच्च कर्मेति भाष्यात् तच्च गुणाश्चेत्येकवचनाध्याहारेण विग्रहः प्रतिभाति तच्चोदाहरणबहुत्वेन तुल्यत्वात्क्रिययोर्नेति सूत्रोक्तक्रियापरामर्शितच्छब्दोपात्तयागबहुत्वोपपत्तेः श्रुतस्यैव बहुवचनस्य तन्त्रेणोभयान्वये

सम्भवत्यश्रुतैकवचनाध्याहारायोगात् अयुक्तमित्याशङ्क्य त इति बहुवचनान्तविग्रहो दर्शितः । सोमेन यजेतेत्यादौ गुणकर्मणोर्भिन्नपदोपादाने ऽपि तावच्छुद्धस्य कर्मणो ऽशक्यानुष्ठानत्वेन विध्ययोगात्सन्निकृष्टस्य शुद्धरूपेण विध्यसम्भवात् विशिष्टरूपेण च सम्भवात् रूपभेदेन युगपत्सम्भवासम्भवविरोधपरिहारोपपत्तेर्विशिष्टविधेरदुष्टत्वाभिधानार्थमविभागाद्विधानार्थं इति सूत्रावयवविधानार्थे लिङ्प्रत्यये गुणकर्मविध्योरविभागादित्येव व्याख्यातुमविभक्तरूपेण सकृदुच्चरितेन विधिनेत्युक्तम् । आग्नेयादिवाक्ये त्वेकस्मिन्नेव विधेयसमर्पके तद्धितान्ते शब्दे गुणकर्मविभागादित्येवं व्याख्यातुं विधेयसमर्पकेण तद्धितान्तेन शब्देन सह गुणकर्मशब्दानामविभागात्सन्निकर्षविप्रकर्षविरोधाभावाभिधानायैकशब्दोपादानप्रदर्शनार्थं तद्धितान्तेन विधिनेति योज्यम् । हिशब्दः पादपूरणार्थः । ननु मान्त्रवर्णिकदेवतासंयोगान्यथानुपपत्त्या यागप्राप्तिरसिद्धान्याशिष्टतेत्याशङ्क्य निराकरोति * नेति * संस्कारशब्देन स्मृतिहेतुसंस्कारोद्बोधार्थो मन्त्रो विवक्षितः । अष्टाकपालादिद्रव्यं देवतासंस्कारश्चाग्निर्मूर्द्धेत्यादिमन्त्रः तत्संयोगेन यो ऽत्र यागविधिः पूर्वपक्षिणोक्तः स नोपपद्यतइत्यर्थः । यदपि पुरोडाशादीनां हविष्ट्वाद्यागसाधनत्वप्रतीतेर्यागानुमानमुक्तं तदपि निराकरिष्यतइति तावच्छब्देन सूचितम् । यद्वा यागविधिस्तावन्नोपपद्यते ततश्च तन्नामत्वमनाशङ्क्य चतुरवत्तचोदनाविहितहोमतापि निराकरिष्यतइत्येवं तावच्छब्दो योज्यः । एतदेव प्रश्नपूर्वकमुपपादयति * कथमिति * ननु भावनाकाङ्क्षायां मन्त्रसम्बन्धस्योक्तत्वात् स्वरूपेण द्रव्यस्य मन्त्राकाङ्क्षानिरासो न युक्त इत्याशङ्क्याह * नेति * भावनाया अश्रुतत्वात् विध्यश्रवणाच्च तद्वशेनापि कल्पयितुमशक्यत्वात् अप्राप्तस्यापि च द्रव्यस्य भावनानिवेशं विना विधेयत्वायोगात् विधिवशेन भावनाकल्पने विधेरपि भावनाकल्प्यत्वेनेतरेतराश्रयं वक्तुं विध्यभावाभिधानं कथं चिद्भावनाकल्पने ऽपि धात्वर्थानवच्छिन्नायास्तस्या अनुष्ठातुमशक्यत्वान्मन्त्राकाङ्क्षानुपपत्तेर्मन्त्रान्वयादेव तद्वाक्यदेवतासंयोगेन यागाख्यधात्वर्थकल्पने चानुष्ठेयत्वसिद्धये धात्वर्थविशेषावच्छेदाधीनत्वात् मन्त्रान्वयस्येतरेतराश्रयापत्तेर्द्रव्यस्य स्वरूपेणैवाकाङ्क्षापद्यतइति सूचनार्थः कश्चिच्छब्दः । सामान्यतो ऽपि पुरुषव्यापारो न विधीयते किमुत धात्वर्थावच्छिन्न इत्यर्थः । नन्वष्टाकपालभवनस्यासिद्धत्वेनानुष्ठेयत्वान्मन्त्राकाङ्क्षा भविष्यतीत्याशङ्क्य न चेत्युक्तम् । भवनक्रियायामसिद्धस्यैव कर्तृनियमात् सिद्धा-

त्मकपुरुषानुष्ठेयत्वायोगान्न स्मारकापेक्षेत्याशयः। ननु द्रव्यस्यैव तद्यागानुष्ठानात्प्राक् असिद्धत्वेनानुष्ठानापाद्यत्वात् स्मारकापेक्षा भविष्यतीत्याशङ्क्य नापीत्युक्तम्। तस्याव्यापारात्मकत्वेनानुनिष्पादिततृत्यादिवत् साध्यत्वे ऽपि अननुष्ठेयत्वात् न स्मारकापेक्षेत्याशयः। कथं चित्सत्यामपि द्रव्यस्य मन्त्राकाङ्क्षायां अग्न्यादिवाचिना मन्त्रेण सह सम्बन्धो न प्रतीयतइत्येवमुत्तरार्द्धं व्याचष्टे * न चेति * ननु पुरोडाशादिभिर्हविरात्मकत्वाद्यागसाधनत्वेनावगम्यमानैर्देवतापेक्षणात्तद्वाचिमन्त्राणामन्वयो भविष्यतीत्याशङ्क्याह * न चेति* पुरोडाशे यागः साध्यत्वेन नावधारित इत्युक्ते यागसम्बन्धाश्रयणे ऽपि हविःशब्दाभिधेयत्वात् यागानुमानं भविष्यतीत्याशङ्क्य हविष्ट्वमपि नावधारितमित्युक्तम्। श्लोकं व्याचष्टे *यदि हीति* भावनोपादाने सति तस्या धात्वर्थविशेषापेक्षायां कथञ्चिद्यागत्वावधारणं शक्येत न तु तदस्तीति दर्शयितुं भवतिशब्देन भावनानुपादानाद्यागत्वं नोक्तमित्युक्तं हविः शब्दस्तु यागान्वयं विना न क्व चिदस्तीत्यर्थः। हविष्ट्वाभावादेव चतुरवत्तचोदनाविहितहोमनामतापि निरस्तेत्याह * एतेनेति * नन्वाघारादिवद्यागत्वावधारणात् प्रागपि मान्त्रवर्णिकदेवताकल्पनं भविष्यतीत्याशङ्क्याह * आघारादिषु त्विति * उपांशुयाजे तु वाचनिकविनियोगाभावे ऽपि यागात्मकत्वात् सामान्यतो देवतान्वये सिद्धे मन्त्रवर्णाद्धि शेषमात्रावधारणं युक्तं न तु श्रुत्यविनियुक्तस्य मन्त्रस्यापूर्वदेवताकल्पकत्वं क्व चिदस्तीत्याशयः। तद्धितेन देवतान्वयसम्भवे तद्धितचतुर्थीमन्त्रवर्णानां देवतान्वयप्रमाणानां मध्ये जघन्येन मन्त्रवर्णेन देवताकल्पनं न युक्तमित्याह * सर्वजघन्यश्चेति * न च तद्धितसम्भवे मन्त्रवर्णस्य प्रामाण्यमप्यस्तीत्याह * अन्यथेति * मन्त्राङ्गत्वान्यथानुपपत्तिस्तद्धितेन देवतान्वये ऽवधारिते नास्तीत्यर्थः। ननु तद्धितेन देवतान्वयावगमे लिङ्गादेव मन्त्रप्राप्तेर्मन्त्राम्नानमनर्थकं स्यादित्याशङ्कां निराकुर्वन् सिद्धान्तमुपसंहरति * तस्मादिति * सामान्यतो ऽग्निदेवत्यमन्त्रप्राप्तावप्यग्निर्मूर्द्धेत्यादिमन्त्रविशेषार्थं क्रमाम्नानमित्यर्थः। अविद्यमानमपि क्रमं पूर्वपक्ष्यारोपितमभ्युपगम्य परिहारसामर्थ्यप्रदर्शनार्थः क्रमशब्दः। ननु तद्धितेन देवतान्वये कृते ऽपि तस्याविधायकत्वाद्विधीयेरन्नित्ययुक्तमित्याशङ्क्य भवति इति पञ्चमलकाररूपेणाख्यातशब्देनेत्युक्तम्। नन्वस्य वर्त्तमानापदेशसन्दिग्धत्वात् पञ्चमलकारत्वनिश्चयः कथमित्याशङ्क्यार्थवादेत्युक्तम्. अङ्गिरसो वा इत उत्तमाः स्वर्गं लोकमायन्नित्याद्यर्थवादान्वयान्यथानुपपत्त्या

विधित्वनिश्चयः । अन्यथास्यार्थवादत्वासम्भवेनानर्थक्यापत्तेरित्याशयः । नन्वेवं सति विधिगौरवक्लेशः स्यादित्याशङ्क्याह * अगत्या चेति * विधानार्थ इति भाष्यं तद्धितस्याख्यातकृत्यत्वाभावेनाविधायकत्वादयुक्तमाशङ्क्य व्याचष्टे * विधानार्थेति * अविभागादिति सूत्रावयवव्याख्यानार्थमविभक्ता हीति भाष्यावयवं तद्धितान्तर्गत्यभिधानार्थत्वेन तत्सापेक्षत्वात् पश्चाद्व्याचष्टे * सर्वं चेति * एतदेवोपपादयति * देवतेति * नन्वाग्नेयतेति भावप्रत्ययात् सम्बन्धस्यापि अविभक्ततोक्ता प्रतिभाति सा च सम्बन्धवाच्यत्वस्य अरुणाधिकरणे निषेत्स्यमानत्वादयुक्तेत्याशङ्क्याह * सम्बन्धो ऽपीति * नन्वेवमप्यष्टाकपालशब्दवाच्यस्याष्टत्वकपालतदधिकरणसंस्कारोपसर्ज्जनस्य पुरोडाशस्याग्नेयादिशब्दानन्तर्गतत्वादष्टाकपालस्येति विशेषणाभिधानमयुक्तमित्याशङ्क्याह * तदिति * नैव हि द्रव्यमात्रस्य तद्धितैर्देवतोच्यते अस्य शब्दाभिधेयस्य विशेषस्यैव देवतेत्यनेन न्यायेनाष्टाकपालपदार्थो ऽपि तद्धितान्त एव शब्दान्तर्गत इत्यर्थः । स एष इति भाष्येण यागस्य तद्धितान्तर्गतिरुक्ता सा यागं विनापि यथाकथञ्चित्सिद्धाग्नेयत्वसङ्कीर्त्तनेनोपपत्तेरयुक्तेत्याशङ्क्याग्नेयस्य भाव्यमानत्वं यागं विना न सिध्यतीति दर्शयितुं भावनान्तर्गतिपूर्वकं यागान्तर्गतिमाह * द्रव्यस्येति * अन्तर्गतेति शेषः पुरुषव्यापारस्य भावनाया यागावच्छेदकत्वाद्विशेषो न व्यक्तित्वेन । सर्वान्तर्गत्यभिधानस्य पूर्वपक्षोक्तवाक्यभेदपरिहारं प्रयोजनमाह * ततश्चेति * तद्धितान्तपदेनोपात्तस्यार्थस्य विधिनेति विग्रहः भिन्नपदोपादानाभावान्न वाक्यभेदापत्तिरित्याशयः । नन्वेकपदोपाने ऽप्यनेकार्थस्य विधानाच्चित्रत्वस्त्रीत्वविधाविव वाक्यभेदः स्यादेवेत्याशङ्क्याह * भावनेति * यागो हि विहितो भवतीति भाष्ये यागशब्दो यागावच्छिन्नभावनाभिप्रायेणेत्याशयः । स एवमिति भाष्यं व्याचष्टे * तत इति * ननु सम्बन्धो हीति भाष्येण सम्बन्धविधानान्यथानुपपत्त्या सम्बन्धिनोर्द्रव्यदेवतयोर्विधानाक्षेपस्योक्तत्वात् भाष्यविरुद्धं भावनाविधानाभिधानमित्याशङ्क्याह * सर्वेति * सर्वेद्धात्वर्थकारकैः सम्बध्यतइति कर्मव्युत्पत्त्या भावना सम्बन्धशब्देनोक्तेत्यर्थः । किमित्येवं व्याख्यायतइत्यपेक्षायामाह * न हीति * विशिष्टविधावप्यन्यतो लभ्यमानस्याविधानान्न गौरवलक्षणवाक्यभेदापत्तिरित्यभिधानार्थो न चेदन्येन शिष्टा इति सूत्रावयवो ऽष्टाक्षित्यादिभाष्येणानेककपालाधिकरणसंस्कारस्य पुरोडाशादन्यत्राप्रसिद्धेस्ते पुरोडाशं कूर्मं भूत्वा सर्पन्तमपश्यन्नित्यर्थवादावगतस्य

पुरोडाशस्याष्टसंख्यकपालाधिकरणसंस्कारविधिनैव प्राप्तेः कपाला-
नां तद्बहुत्वस्य तदधिकरणस्य संस्कारस्य च कपालेषु श्रपयतीति
वाक्यान्तरादेव प्राप्तेर्बहुत्वविशिष्टत्वमात्रविशिष्टद्रव्यविशेषाग्न्या-
ख्यदेवताविशिष्टयागभावनाविधानान्नातिगौरवापत्तिरित्येवं व्याख्या-
तः । तन्नाविभागादित्यावृत्तिलक्षणवाक्यभेदपरिहारार्थो हेतुः । न
चेदिति तु गौरवलक्षणवाक्यभेदपरिहारार्थं इति हेतुद्वयस्य विवि-
क्तविषयत्वं दर्शयितुमाह * अविभागादिति * तद्धितान्तोक्तेन
देवताविशिष्टेन द्रव्येण सम्बन्धस्य विभागात् सम्बन्धं विना वैशि-
ष्ट्यासिद्धेरर्थात् सम्बन्धाक्षेपः । न क्रियाकर्तृसम्बन्धादृते सम्ब-
न्धनं क्व चिदित्यनेन च न्यायेन क्रियागर्भत्वात्सर्वसम्बन्धानां देवतो-
द्देशपूर्वकद्रव्यत्यागाच्च विना द्रव्यस्य देवतान्वयायोगाद्यागाख्यस्य
क्रियाविशेषस्य द्रव्यदेवतासम्बन्धाविभागात्तेनार्थादाक्षेपः । यागस्य
चाभावितस्यानिष्पत्तेर्भावनाया यागाविभागात्तेनार्थादाक्षेप इत्यर्थः।
अन्यथानुपपत्त्यधीनत्वाच्चार्थाक्षेपस्यान्यतः प्राप्तस्य कपालादेरनाक्षे-
पान्नातिगौरवापत्तिरित्यदुष्टो विशिष्टविधिरित्याशयः । यत्तु विधि-
त्सितस्यान्यतः प्राप्तौ तद्वाचिनः शब्दस्य नामधेयतेति एतदर्थपरत्वेन
न चेदित्यवयवस्य पाठपूर्वकं व्याख्यानान्तरं भाष्यकृता कृतं तन्ना
मधेयत्वस्य पूर्वपक्षिणोऽप्यनभिमतत्वात्तत्प्रख्यं चान्यशास्त्रमित्यनेन
च पौनरुक्त्यापत्तेरयुक्तमित्युपेक्षितं वार्त्तिककृतेति विशिष्टविधिव्यु-
त्पादनार्थतैवास्याधिकरणस्यावसीयते ॥

॥ बर्हिरादिशब्दानां जातिवाचिताधिकरणम् ॥ ७ ॥

बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः ॥ १० ॥

बर्हिरादिशब्दो लवनादिसंस्कारनिमित्तः कुशत्वादिजातिनि-
मित्तो वेति चिन्तायाः प्रकृतगुणविधिनामधेयचिन्तारूपत्वाभावात्
पूर्वाधिकरणकृतविशिष्टविधिव्युत्पादनवच्च तच्छेषत्वाभावान्न प्रक-
रणसङ्गतिरित्याशङ्क्य प्रासङ्गिकीं प्रकरणसङ्गतिमाह * नामधेये-
ति * अनन्तरसङ्गतिस्त्वाग्नेयादिशब्दानां देवतोद्देशपूर्वकद्रव्यत्या-
गात्मकयागाख्यक्रियागर्भसम्बन्धनिमित्तदेवताविशिष्टद्रव्यवाचि-
त्वात्तद्द्वारेण क्रियानिमित्तत्वेऽभिहिते बर्हिरादिशब्दानामपि सं-
स्कारात्मकक्रियानिमित्ततास्त्युत नेति विचारात् स्पष्टैवेति नोक्ता
पुरोडाशोदाहरणमुत्सूत्रत्वादयुक्तमाशङ्क्याह * तुल्यहेतुत्वादिति *
यूपादिवद्वचनव्यक्तिविपर्ययाश्रयणसम्भवासम्भवमस्य सन्देहहेतोः

१ असंख्येति २ पु० पा० ।

संस्कृतप्रयोगबलीयस्त्वस्य च पूर्वपक्षहेतोः संस्कारनिमित्तत्वे च परस्पराश्रयपरिहारासम्भवस्य च सिद्धान्तहेतोस्तुल्यत्वात् सूत्रे बर्हिराज्यग्रहणमुपलक्षणार्थमित्याशयः। सर्वत्रेति भाष्यावयवेन संस्कृतप्रयोगस्य सार्वत्रिकत्वं पूर्वपक्षोपपत्तित्वेनोक्तं नासंस्कृतेष्वित्यनेन चासंस्कृतप्रयोगाभावः तदुभयमप्ययाज्ञिकदेशे संस्कृतेषु प्रयोगाभावादसंस्कृतेष्वपि च कस्मिंश्चिद्देशे प्रयोगादयुक्तमाशङ्क्य व्याचक्षाणः पूर्वपक्षमाह * तत्रेति * याज्ञिकप्रयोगो ऽत्र विवक्षितः सर्वे च याज्ञिकाः संस्कृतेष्वेव प्रयुञ्जते नासंस्कृतेष्वित्याशयः। तस्य बलीयस्त्वाय शास्त्रस्था वेत्युक्तं यश्चासंस्कृतेषु क्व चित्प्रयोगः स प्रादेशिकत्वेनाशिष्टस्थत्वेन च दौर्बल्यात्सादृश्योपपत्तेर्न याज्ञिकप्रयोगस्य विगीतत्वापादने शक्त इत्येवमर्थत्वेन न त्वसंस्कृतेष्वपीत्याशङ्कानिरासार्थं सादृश्यादिति भाष्यं व्याख्यातुमविगीतत्वादित्युक्तम्। ननु बर्हिराद्यनुवादेन विधीयमानस्य संस्कारस्य प्राक्सिद्धबर्हिराद्यपेक्षत्वेनेतरेतराश्रयापत्तेर्न बर्हिरादिशब्दप्रवृत्ति-
३०५।१ निमित्तता युक्तेत्याशङ्क्याह * तथा हीति * क्व चिद्देशे पुरोडाशादिशब्दैर्व्यवहारं सत्यप्यभियुक्तजने लोक्यते दृश्यते शब्दार्थसम्बन्धो ऽनेनेति व्युत्पत्त्या लोकशब्देन विवक्षिते व्यवहाराभावाच्छिष्टप्रयोगविरोधेचाशिष्टप्रयोगस्याप्रामाण्यात् यद् बर्हिस्तल्लुनातीत्यादिवचनव्यक्त्यनुपपत्तेर्यल्लूयते तद् बर्हिरित्यादिविपरीतवचनव्यक्त्याश्रयणात्। पुरोडाशादिशब्दानां संस्कारहेतुतेत्यर्थः। यथा च पलाशे बध्नातीति प्रकृत्य यूपं छिनत्तीति श्रवणाच्छेदनस्य पलाशविषयत्वावधारणाच्छेदनसंस्कृतपलाशनामत्वं यूपशब्दस्यावसीयते तथात्रापि दर्भैस्तृणीत हरितैः सुपर्णैरिति बर्हिस्तरणार्थे मन्त्रे कुशवाचिदर्भशब्दश्रवणाद् बर्हिःशब्दस्य लवनादिसंस्कृतकुशनामत्वावधारणात् पिष्टानि संयौति पिण्डं करोतीत्यादिश्रवणाच्च पुरोडाशशब्दस्य प्रथनादिसंस्कृतपिष्टपिण्डनामत्वावधारणादुत्पवनादीनां च घृतविषयत्वं कथं चिदुत्प्रेक्ष्याज्यशब्दस्योत्पवनादिसंस्कृतघृतनामत्वावधारणाद्यूपादिवद्वचनव्यक्तिविपर्ययाश्रवणमदुष्टमिति दृष्टान्तेन सूचितम्। संस्काररहिते कुशादिजातिमात्रे बर्हिरादिशब्दस्य क्व चित्प्रयुक्तस्य संस्कृतेष्वपि जात्यनपगमेन लाभान्नायं संस्कारशब्द इत्येवं सूत्रव्याख्यानार्थमेवं प्राप्तइति भाष्यं व्याचष्टे * तदिति * शास्त्रस्य शब्दार्थसम्बन्धहेतुत्वाभावेन लोकप्रसिद्ध्यपेक्षत्वात् प्रादेशिकस्यापि प्रयोगस्य शास्त्रस्थप्रसिद्ध्या बाधो न युक्त इति वक्तुमेकदेशे ऽपीत्युक्तम्। श्लोकं व्याचष्टे *य एवेति * ननू-

कामिति भाष्येणासंस्कृतेषु सादृश्यात् प्रयोगोपपत्तिं पूर्वपक्षोक्तामनुभाष्य तन्नेत्यनेन संस्कारशब्दत्वप्रसिद्धेः सादृश्यनिमित्तप्रयोगकल्पना न युक्तेत्युक्तं तदतिस्पष्टत्वादव्याख्याय कथमिति प्रश्नपूर्वकमप्रसिद्ध्युपपादनार्थं बर्हिरित्यादिभाष्यम् असंस्कृतेष्वपि शब्दलाभादित्यनेनैकस्या युक्तेरुक्तत्वाद्युक्त्यन्तरसमुच्चयार्थत्वेन व्याचष्टे * किं चेति * जातिशब्दत्वाभावे पलाशे बध्नातीतिवत्कुशादीनामप्रकृतत्वेन संस्कारान्वयाज्ञानात् मन्त्रस्य च श्रुत्यविनियुक्तत्वेन स्वार्थसमवायकल्पकत्वानुपपत्तेस्तद्द्वयेनापि लवनादेः कुशविषयत्वाज्ञानात् उत्पवनादीनां च घृतविषयत्वोत्प्रेक्षायाः प्रापकानुपलम्भेनायोगात् प्रथनादीनां च कथं चित्पिष्टपिण्डविषयत्वज्ञानसम्भवे ऽपि युपकार्यपशुबन्धनार्थत्वेनेव पलाशस्य पुरोडाशकार्ययागार्थत्वेन पिष्टपिण्डस्याश्रवणात् पुरोडाशशब्दस्य प्रथनादिसंस्कृतपिष्टपिण्डनामत्वावधारणाशक्तेः पिष्टपिण्डप्रथनादिना पुरोडाशीकुर्यादिति वचनव्यक्त्याश्रयणायोगात् यद्बर्हिरादिशब्दवाच्यं तत्संस्कार्यं यच्च संस्क्रियते तद्बर्हिरादिशब्दवाच्यमितीतरेतराश्रयस्यापरिहार्यत्वात् यल्लोकसम्मतं बर्हिरादिशब्दानां जातिशब्दत्वं तद्द्वेदेनापि लवनादिसंस्कारे विधेये तस्मात्प्रागाश्रितमित्यर्थः । ननु संस्कारविधितः प्रागेव केन चिद्यदृच्छया लवनादिभिः संस्कृतं कुशादि बर्हिरादिशब्दैरुद्दिश्य संस्कारविधिसम्भवान्नेतरेतराश्रयापत्तिरित्याशङ्कायाः । स्वाश्रयस्यापूर्वसाधनत्वयोग्यताधानार्थायाः क्रियायाः संस्कारशब्दवाच्यत्वाद्विध्यभावे च तादर्थ्यानवधारणात् यदृच्छया लवनादौ कृते ऽपि संस्कारस्याभावेन बर्हिरादिशब्दप्रवृत्तौ निमित्तत्वायोगात् अपरिहार्यमितरेतराश्रयमित्येवं निरासार्थं न चेत्यादिभाष्यम् आशङ्कायास्तुच्छत्वे ऽप्यन्वयव्यतिरेकाभ्यां जातिवाचित्वावधारणार्थमिति व्याख्यातुमाह * तेनेति * येन संस्कारात् प्रागेव जातिशब्दत्वमाश्रितं तेनेत्यर्थः । सत्यां च गतौ वचनव्यक्तिविपर्ययाङ्गीकरणमयुक्तमित्यभिधानार्थं न चालौकिकानां सतामित्यादिभाष्यं व्याचष्टे * न चेति * श्लोकं व्याचष्टे * यदि हीति * प्रयोजनभाष्यं तु निर्देशात्तु विकृतावपूर्वस्यानाधिकार इत्यत्र तृतीये यूपावटस्तरणार्थे बर्हिषि यूपाञ्जनार्थे चाज्ये लवनोत्पवनादयः संस्काराः कार्या न वेति विचारेण स्पष्टीकरिष्यमाणत्वान्न व्याख्यातम् ।

॥ प्रोक्षण्यादिशब्दानां यौगिकताधिकरणम् ॥ ८ ॥

प्रोक्षणीष्वर्थसंयोगात् ॥ ११ ॥

अत्र भाष्यकृता प्रोक्षणीशब्दः किमुत्पवनादिसंस्कारनिमित्तो जातिनिमित्तो वा प्रकर्षसेचनलक्षणक्रियानिमित्तो वेति सन्दिह्य पूर्वन्यायनिरस्तमपि संस्कारशब्दत्वमत्तच्छब्द इति पूर्वसूत्रावयवेनेह सूत्रे प्रतिज्ञाकाङ्क्षयानुषक्तेन निरासप्रतीतेस्तद्व्याख्यानायोपन्यासपूर्वकं निरस्य पूर्वन्यायेनैव जातिशब्दत्वं प्राप्तं यौगिकत्वेनापोदितं तद्रथकाराधिकरणे समुदायप्रसिद्धेरवयवप्रसिद्धितो बलीयस्त्वस्य वक्ष्यमाणत्वात् विरुद्धमित्याशङ्कते * नन्विति * षष्ठे हि वचनाद्रथकारस्याधानस्य सर्वशेषत्वात् इत्यत्र वर्षासु रथकार आदधीतेति किमवयवप्रसिद्ध्या त्रैवर्णिकानामन्यतमो रथकारशब्देनोच्यते समुदायप्रसिद्ध्या वा ऽन्यो जातिशब्द इति सन्दिग्धे ऽवयवप्रसिद्ध्या रथकारिणि त्रैवर्णिके रथकारशब्दसम्भवात् अपशूद्राऽधिकरणप्रतिषिद्धस्यात्रैवर्णिकस्याधिकारो न युक्त इति प्राप्ते समुदायप्रसिद्ध्यावयवप्रसिद्धिबाधाद्वचनबलेनात्रैवर्णिकस्यैवाऽधिकार इति वक्ष्यते । अन्यत एव तु समुदायप्रसिद्धिबलीयस्त्वसिद्धौ न्यायेन प्रतिषिद्धस्याप्यत्रैवर्णिकस्यैव वचनबलेनाधिकारनिश्चयात्सन्देहाभावेन रथकाराधिकरणारम्भो न युज्येत। न चान्यत्र क्वचित्समुदायप्रसिद्धिबलीयस्त्वव्युत्पादनं दृश्यते । न च तद्व्युत्पादनं विना पारिशेष्यमात्रेणात्रैवर्णिकस्याधिकारसिद्धिः। त्रैवर्णिकस्याप्यवयवार्थयोगेन रथकारशब्दवाच्यत्वसम्भवे वसन्तादिवाक्यैस्तस्याधानप्राप्तावपि रथकारित्वेन निमित्तेन वर्षाकालाधानार्थतया वचनोपपत्तावविदुषो ऽत्रैवर्णिकस्याधिकारकल्पनानुपपत्तेः । अत एव वचनादिति मुख्यं हेतुं व्याख्यायाधानस्यासर्वशेषत्वादित्यनेनाधानसम्बन्धितया सर्वेभ्यो ब्राह्मणराजन्यवैश्येभ्यः प्राप्तेभ्यो ऽत्रैवर्णिकस्य परिशिष्टत्वादयमाधानविधिरित्येवमुक्तो हेतुः सर्वशेषश्चात्रैवर्णिक आधानइति भाष्ये भाष्यकारेण चशब्दप्रयोगादुपचयोपपत्तित्वेन व्याख्यातः । तस्माद्रथकाराधिकरणसिद्धमेतत्समुदायप्रसिद्धिबलीयस्त्वमिहोक्तम्। कथं समुदायप्रसिद्धेः श्रुतिस्थानीयत्वं कथं चावयवप्रसिद्धेर्वाक्यस्थानीयतेत्यपेक्षिते रथकाराधिकरणवक्ष्यमाणमेवोभयमुपपादयति * तथा ही-
३०६।। ति * वर्णसमुदायशक्तिनिमित्तज्ञानात्मकत्वेन समुदायप्रसिद्धेरशब्दात्मकत्वात् श्रुतित्वाभावे ऽप्यक्षरश्रवणमात्रापेक्षत्वात् श्रुतितुल्यत्वं प्रातिपदिकावयवशक्तिनिमित्तज्ञानात्मिकायास्त्ववयवप्रसिद्धेरेकार्थपदसमुदायात्मकवाक्यत्वाभावे ऽपि यौगिकप्रातिपदिकप्रतिपाद्यस्य विशिष्टस्यार्थस्य ये प्रकर्षादयो भागास्तेषामेकार्थवृत्तित्वनियमलक्षणेनोपसंहारेण प्रवृत्तेर्विप्रकृष्टत्वाद्वाक्यतुल्यतेत्यर्थः । य-

द्यपि रथकाराधिकरणे ऽवयवप्रसिद्धितः समुदायप्रसिद्धेर्बलीयस्त्वं वक्ष्यते तथापीह समुदायप्रसिद्धेरात्मलाभसदसद्भावौ चिन्त्येते तथापीह समुदायप्रसिद्धेरात्मलाभसदसद्भावौ चिन्त्येते यदि च सर्वत्र समुदायस्यैव शक्तिर्न क चिदवयवानां ततः सा चिन्ता विरुध्येत न त्वेतदस्ति तथा सत्यवयवप्रसिद्धेः सर्वत्राभावापत्तेरित्यभिप्रायेण परिहरति * सत्यमिति * ननु समुदायप्रसिद्धेः स्वात्मलाभः क्वास्ति क च नेति कथं ज्ञातव्यमित्यपेक्षायामाह * तत्र चेति * ननु समुदायप्रसिद्ध्या सर्वत्रावयवप्रसिद्धेर्बाधेनावयवार्थाभावात् सर्वत्रैव समुदायः प्रसिद्ध्येदित्याशङ्कानिरासपूर्वं श्लोकं व्याचष्टे * लब्धात्मिका हीति * नन्वेवं सति रथकारशब्दे ऽवयवार्थसद्भावे समुदायप्रसिद्ध्यनात्मलाभादभावे चाप्रतियोग्यभावात्तद्बलचिन्तानुपपत्तेरनर्थकं रथकाराधिकरणं स्यात् इत्याशङ्क्याह * ततश्चेति * रथकारशब्दस्य रथकारिण्यवयवप्रसिद्धिसम्भवात् माहिष्येण करिण्यां च रथकारः प्रजायतइति * स्मृते* श्चानुलोमविशेषे सौधन्वनास्तुहीनत्वात्मन्त्रवर्णात् प्रतीयेरन्नित्यनेन वा न्यायेन ऋभूणां त्वा देवतानां व्रतपते व्रतेनादधामि इति रथकारस्याद्ध्यादित्याधानमन्त्रवर्णात् सौधन्वना ऋभव इति च सौधन्वनशब्दसामानाधिकरण्यस्य ऋभुशब्दस्य तं नेमिमृभवो यथेति मन्त्रवर्णाद्रथकारविषयत्वप्रसिद्धेः।

व्रात्यात्तु जायते वैश्यात् सुधन्वाचार्य एव च।
मारुपश्च विजन्मा च मैत्रः सात्वत एव च॥

इति सात्वताद्यपरपर्याये सौधन्वनाख्ये जातिविशेषे समुदायप्रसिद्धिसम्भवाद्रथकार आदधीतेत्यत्र समुदायप्रसिद्धिबलीयस्त्वाभिधानं युक्तमित्यर्थः। नन्वेवं तर्ह्युदासीनास्वप्सु प्रकर्षसेचनकरणत्वाभावे ऽपि क चिद्देशे प्रयोगदर्शनात् प्रकर्षसेचनकरणत्वे सत्यपि च तैलादावप्रयोगाद्योगस्य व्यभिचारित्वेन समुदायप्रसिद्ध्यात्मलाभोपपत्तेस्तद्बलीयस्त्वाद्रथकाराधिकरणसिद्धान्तात् जातिवाचितैव युक्तेत्याशङ्कां तुशब्दसमानार्थेन पुनः शब्देन निरस्यन् सिद्धान्तमाह * अत्रेति * औदासीन्यावस्थायामपि प्रकर्षसेचनकरणत्वशक्तिसद्भावात् प्रयोगोपपत्तेर्वाच्यसद्भावेन च शब्दप्रयोगावश्यम्भावाभावात् तैलादावप्रयोगोपपत्तेः। क्लृप्तावयवशक्त्यानुसारेणैव शब्दप्रयोगोपपत्त्यार्थापत्तेः क्षीणत्वात् समुदायस्य शक्त्यन्तरकल्पनानुपपत्तेः समुदायप्रसिद्ध्यात्मलाभो नास्तीत्याशयः। स्वरूपतो ऽवयवार्थाभावे शक्तिसद्भावमा-

त्रेणाग्नाविवादग्धृत्वावस्थायामपि दग्धृशब्दस्य प्रोक्षणीशब्दप्रयोगोपपत्तौ समुदायस्य शक्त्यन्तरकल्पनं न युक्तमित्येतदेव व्यतिरेकदृष्टान्तमुखेन दर्शयितुमाह * तथा हीति * शालाख्ये वृक्षविशेषे ऽश्वत्वकर्णत्वयोः शक्तिरूपेणाप्यभावात्समुदायस्य शालजातिवाचित्वं कल्पितमित्यर्थः । सिद्धान्तमुपसंहरति * तस्मादिति * नन्वेवं सति तैलादावपि प्रोक्षणीशब्दः किमिति न प्रयुज्यते इत्याशङ्क्याह * इतीति * समुदायप्रसिद्ध्यभावसिद्धयौगिकत्वपरामर्शार्थो ऽयमितिकरणः । यस्मात्प्रोक्षणीशब्दस्य समुदायप्रसिद्ध्यभावाद्यौगिकत्वं सिद्धं तस्मात्तैलादावपि साधारणतास्त्येव प्रयोगाभावस्तु सत्यपि वाच्ये न विरुध्यतइत्याशयः। यद्वा समुदायप्रसिद्धेर्बलीयस्त्वे ऽप्यप्सु प्रोक्षणीशब्दस्य तदभावादवयवप्रसिद्धिरङ्गीक्रियमाणा न रथकाराधिकरणविरुद्धेति सूचनार्थत्वात् पूर्वशेषो ऽयमितिकरणः । प्रयोजनभाष्ये प्रोक्षणीशब्दस्य संस्कारशब्दत्वे धृते ऽप्यविकृतस्य प्रयोगमुक्तमाक्षिपति * नन्विति * परिहरति * यदि हीति * निपातानामनेकार्थत्वात् शङ्कानिरासार्थो हिशब्दः । एतदेवोपसंहरति * तस्मादिति * यौगिकत्वे स्त्रीप्रत्ययमात्रनि-
३०७।१ वृत्तिप्रयोजनत्वेनोक्तामुपपादयति * यौगिकत्वे त्विति * ननु यौगिकत्वे ऽपि घृतप्रोक्षणं भवतीति विधिवाक्ये घृतशब्दश्रवणात् विधिशब्दस्य मन्त्रत्वाभावः स्यात्तेन चोदनेति दशमाधिकरणन्यायेन द्रव्ये ऽपि देवतावद्विधिगतस्यैव शब्दस्य प्रयोगनियमाज्जातिशब्दत्ववत् घृतशब्दस्यैव प्राप्तेः प्रातिपदिकस्यापि निवृत्तत्वात् स्त्रीप्रत्ययमात्रनिवृत्त्यभिधानं न युक्तमित्याशङ्क्याह * न चेति * दशमएवाग्नये पवमानायाष्टाकपालं पुरोडाशं निर्वपेदिति विहिते किमग्निः पवमानादिगुणशब्दसहितेनाग्निशब्देनाभिधेयः केवलेन वेति सन्दिह्य प्राकृतस्य गुणश्रुतौ सगुणेनाभिधानं स्यादिति सिद्धान्तेनोपक्रम्याविकारो वार्थशब्दानपायात् स्याद् द्रव्यवदित्यनेनार्थस्याग्नेश्चोदकप्राप्तस्य चाग्निशब्दस्य केवलाभिधाने ऽप्यनपायाद्यथा सा वा एषा सर्वदेवत्या यदजा वशा वायव्यामालभेत भूतिकाम इत्यजाशब्देनापि विहिते द्रव्ये वशाशब्दवाच्यवन्ध्यात्वगुणयुक्ते चातिदेशप्राप्तौ न छागशब्देन निर्गुणेन चाभिधानं तथेहाप्यविकारः स्यादिति पूर्वपक्षमुपन्यस्यारम्भासमवायाद्वा चोदितेनाभिधानं स्यादर्थस्य श्रुतिसमवायित्वादवचने च गुणशास्त्रमनर्थकं स्यादित्यनेनार्थस्य देवतायाः श्रुतिसमवायित्वादारम्भेण स्वरूपेण कर्मण्यसमवायाद् गुणानभिधाने च गुणशास्त्रस्यानर्थक्यापत्तेः चोदितेन सगुणेनाभिधानं

स्यादित्येवं निरस्य द्रव्येष्वेवारम्भगामित्वादर्थे विकारसामर्थ्यमित्यनेनारम्भेण स्वरूपेण द्रव्येषु क्रियागामित्वाद्विकारसहितस्यापि शब्दस्य द्रव्यरूपे ऽर्थे सामर्थ्यमस्तीति वैषम्यं वदता द्रव्येष्वर्थरूपेण कर्मणि समवायाभ्युपगमाद्विधिगतशब्दप्रयोगनियमो नास्तीत्यर्थः ।

॥ अथ निर्मन्थ्यशब्दस्य यौगिकत्वाधिकरणम् ॥ ९ ॥

## तथा निर्मन्थ्ये ॥ १२ ॥

वैद्युताद्यग्निव्यक्तेर्मन्थनजन्यत्वे शक्तेरप्यभावात् पूर्वन्यायातुल्यत्वमाशङ्क्य विशेषरूपेण शक्त्यभावे ऽप्यग्निजातीयस्य कस्य चिन्मन्थनजन्यत्वदर्शनेन शक्त्यवधारणाद्वैद्युतादावप्यग्निजातीयकत्वाविशेषेण सामान्यतः शक्तिसम्भवेन कथं चित् क्लृप्तावयवशक्त्यनुसारात्प्रयोगोपपत्तौ समुदायस्य शक्त्यन्तरकल्पनानुपपत्तेस्तुल्यत्वातिदेशायेदमधिकरणमित्याह * निर्मन्थ्ये ऽपीति * भाष्यकारेणाचिरनिर्मन्थितत्वं यौगिकत्वप्रयोजनमुक्तमाक्षिपति * वैद्युतेति * पाकान्यथानुपपत्त्याग्निमात्रप्राप्तौ मन्थनजन्यत्वविशेषणस्यातज्जन्याग्निव्यावृत्त्या कृतार्थत्वात् नाचिरत्वाक्षेपकत्वं युक्तमित्यर्थः । ननु नावनीतेन भुङ्क्तइत्यत्रापि घृतशब्दानुदापानात्तैलादेरपि प्राप्तौ तन्निवृत्त्या नावनीतशब्दस्य कृतार्थत्वात् नाचिरत्वाक्षेपकतेत्याशङ्क्याह * लोक इति *प्रमाणान्तरावगतवक्तृभिप्रायानुसारात्तत्र विशेषप्रतीतिर्न शब्दसामर्थ्यादिति भावः । यद्वा यथैवाभ्यासः सामधेनीनां प्राथम्यात् स्थानधर्मः स्यादित्यत्र त्रिः प्रथमामन्वाह त्रिरुत्तमामिति प्रथमोत्तमशब्दयोः प्रथमावगताद्यन्तस्थानपरत्वातिक्रमहेत्वभावात्र तदुपलक्षितप्रवो वाजा आजुहोतेति ऋक्परतेति नवमे वक्ष्यते तथा नावनीतशब्दस्यापि प्रथमावगतनवनीतविकारत्वलक्षणधर्मातिक्रमेण तदुपलक्षितघृताख्यधर्मिपरत्वाभावात् धर्मस्य च प्रवो वाजा इति प्रथमऋक्प्रतीकम् । आजुहोतेति अन्त्यऋक्प्रतीकं तत्परता धर्मिगतस्पर्द्धमानधर्ममात्रव्यावर्त्तकत्वेनास्पर्द्धमानधर्म्यन्तरव्यावर्त्तकत्वायोगात् तैलादिव्यावृत्त्यप्रतीतेर्घृते च नवनीतविकारत्वावरुद्धधर्मान्तराऽभावादबुद्धिस्थनवनीतव्यक्तिविकारत्वव्यावृत्त्या बुद्धिस्थनवनीतव्यक्तविकारपरत्वावगतेश्चिरकालवगतायाश्च नवनीतव्यक्तेरबुद्धिस्थत्वादचिरावगतनवनीतव्यक्तिविकारत्वप्रतीतेः । शब्दसामर्थ्यादेवाचिरनिर्दग्धत्वावगतिरित्याह * सर्वघृतानां चेति * प्रकरणादिना घृतप्रतीतिमभिप्रेत्य पुनःश्रुतेरित्युक्तं नावनीतेन घृतेन भुङ्क्तइत्येवंविधवाक्याभिप्रायेण वा पञ्चम्यन्तं वा श्रुतिशब्दमङ्गीकृ-

स्य श्रुतितो ऽपि पुनरेवमचिरनिर्दग्धत्वावगतिरित्येवं योज्यम्। आनर्थक्यानुपपत्तिलक्षणार्थो वा पुनः शब्दः।निर्मन्थ्यशब्दे तु शब्दप्रमाणकत्वेन प्रमाणान्तरानुसारायोगादमन्थनजन्याग्निनिवृत्त्या च कृतार्थत्वेन शब्दसामर्थ्याभावादचिरनिर्मन्थिततत्वाप्रतीतेर्नाचिरनिर्मन्थितविषयता कल्प्येति वैषम्यमाह*इह त्विति * चिरग्रहणं दृष्टान्तार्थं ननु पङ्कजादिशब्दवन्निर्मन्थ्यशब्दस्य योगरूढित्वादचिरनिर्मन्थिताग्निगतमन्थनक्रियायोगानिमित्तत्वप्रतीतेर्विशेषावगतिर्भविष्यतीत्याशङ्क्याह * न हीति * पद्मव्यतिरिक्ते द्रव्ये पङ्कजन्यत्वे सत्यपि पङ्कजशब्दप्रयोगाभावात् योगरूढित्वं कल्पितं निर्मन्थ्यशब्दस्य त्वग्निमात्रे प्रयोगस्य भाष्यकृतोक्तत्वान्न योगरूढिता कल्प्येत्याशयः। आक्षेपमुपसंहरति * तस्मादिति * पाकाङ्गत्वेनेह विधीयमानस्य मन्थनस्य पाकैकदेशकालकर्तृकत्वादचिरनिर्मन्थिततत्वसिद्धिरिति परिहरति * नैष दोष इति * श्लोकं व्याचष्टे * यथैवेति * नन्वेवं सति देशकर्त्रैक्यमपि कस्मान्नोक्तमित्याशङ्क्याह * तेनेति *

॥ अथ विश्वदेवादिशब्दानां यागनामधेयताधिकरणम् ॥ १० ॥

## वैश्वदेवे विकल्प इति चेत् ॥ १३ ॥

अत्र भाष्यकृता किं वैश्वदेवशब्दो गुणविधिः कर्म नामधेयं वेति चिन्तोक्ता सा पूर्वपक्षसूत्रे विकल्पाभिधानात् सिद्धान्तसूत्रे च तन्निराकरणमात्रप्रतीतेरयुक्ता च प्रकरणपर्यालोचनया गुणविधिनामधेयविचारो ऽधिकरणस्य तात्पर्यावगमादेवमुपन्यासो युक्तः। आग्नेयाधिकरणे ऽपवादान्नामधेयविचारस्य पर्यवसितत्वावगतेर्नामधेयविचारस्यापर्यवसितस्याप्यपवादसम्भवे दर्विहोमपदस्यैव विचार्यत्वाशङ्काष्टमाध्यायासङ्गत्या शङ्कायास्तत्रैव निराकार्यत्वेनेहाप्रस्तुतत्वात् न युज्येताथाग्नेयाधिकरणस्यापवादत्वेन सङ्गतिप्रदर्शनार्थं गुणविधिनामधेयविचारे ऽपि विशिष्टविधिव्युत्पादने तात्पर्यादपवादे तात्पर्याभावेन पर्यवसानद्योतकत्वं नास्तीत्युच्यते तथा सत्युत्पत्तिशिष्टगुणबलीयस्त्वासिद्धिप्रयोजनत्वाद्विशिष्टविधिव्युत्पादनस्य तदधिकरणोक्ताक्रियानिमित्तत्वप्रसक्त्या कृते ऽधिकरणत्रये यत्प्रसक्त्या यो विचारस्तत्समाप्तौ स एव बुद्धिस्थो भवतीति प्रासङ्गिकाधिकरणत्रयसमाप्त्या तस्यैव बुद्धिस्थस्य प्रयोजनविचारायैतदधिकरणमिति गुणामिति गुणविधिनामधेयविचारे तात्पर्याभावात्तदुपन्यासस्तात्पर्यतो ऽप्ययुक्तः। उत्पत्तिशिष्टबलीयस्त्वव्युत्पादनार्थे चास्मिन्नधिक-

रणे सत्युद्भिदादीनामेवोदाहरणत्वोपपत्तेर्वैश्वदेवोदाहरणं व्यर्थ-
मित्याशङ्क्याह * तद्धितेति * अयमाशयः (सत्यपि विशिष्टवि ३०८।१
धौ[1])गुणविशिष्टस्यापि कर्मणो विहितस्य विशिष्टविध्यन्यथानुपपत्ति-
प्रसूतेन विधिना विशेष्यस्यापि विशेषणवद्विधानाच्छुद्धानुवादेनापि
वाक्यान्तरस्थस्यापि गुणस्य स्ववाक्यस्थवद्वाक्यीयत्वाविशेषाद्विकल्पे-
न विधानोपपत्तेरुत्पत्तिशिष्टेनापि सोमेनोत्पन्नशिष्टस्य खनित्रादेर्बा-
धायोगादुद्भिदादिशब्दानां ज्योतिष्टोमे गुणविधित्वोपपत्तेरुत्पत्ति-
शिष्टबलीयस्त्वेन गुणविधित्वनिरासायोत्पत्तिशिष्टबलीयस्त्वसिद्ध्य-
र्थं विशिष्टविधिव्युत्पादनं व्यर्थमित्याशङ्क्यानुष्ठानायोग्यत्वेन शुद्ध-
स्य विधातुमशक्यत्वात् अग्निहोत्रं जुहोतीत्यादावपि सामान्यतो
द्रव्यदेवताविशिष्टस्यैव विधेयत्वाभ्युपगमात् विशिष्टविधौ स्ववा-
क्यश्रुतद्रव्यादिविशेषविशिष्टस्यैव प्राप्तत्वेनानुवादापत्तेस्तादृशेन च
नैराकाङ्क्ष्ये स्ववाक्यश्रुतगुणविरोधिगुणान्तरविध्यनुपपत्तेर्विशिष्ट-
विधौ सत्युत्पत्तिशिष्टेनोत्पन्नशिष्टस्य बाधसिद्धिरिति विशिष्टविधि-
व्युत्पादनप्रयोजनमुत्पत्तिशिष्टबलीयस्त्वं समर्थयितुमेतदधिकरणम्
तथाप्युत्पत्तिशिष्टबलीयस्त्वेनैव वैश्वदेवशब्दस्य नामधेयत्वं सिध्यति
नान्यथेति दर्शयितुं भाष्यकृतैवं विचारारम्भः कृतः । वैश्वदेवोदा-
हरणस्याप्येतदेव प्रयोजनमित्येतदेवोपपादयितुं पूर्वोक्तकारणासम्भ-
वस्तद्धितोपात्तत्वादित्यादिना दर्शितः । न तूद्भिदाद्यधिकरणैरगता-
र्थत्वम् दर्शयितुम् इति भ्रमितव्यं गतार्थत्वशङ्कानुपपत्तेस्तन्निरासाया-
गतार्थत्वाभिधानानर्थक्यात् सास्यदेवतेति हि देवतातद्धिताधिकारे
सूक्तहविषोरिति स्मृतेर्देवतातद्धितस्य सूक्ते हविषि वा मुख्यत्वाव-
गमे ऽपि द्रव्यविशेषस्येहानुपादानेनास्य शब्दाभिधेयत्वायोगात्सा-
मानाधिकरण्योपात्तत्वेनास्य शब्दाभिधेयस्य यागस्यैव देवतास-
म्बन्धावगतेस्तदन्यथानुपपत्त्या द्रव्यस्यैव लक्ष्यमाणत्वात् मत्वर्थस्य
यागस्य लक्षणा नाशङ्कितुं शक्या आग्नेयमष्टाकपालं निर्वपति सौम्यं
चरुं सावित्रं द्वादशकपालं सारस्वतं चरुं पौष्णं चरुं मारुतं सप्तक-
पालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालमित्यष्टौ कर्माणि
प्रकृतानि वैश्वदेवेन यजेतेति याजिनानूद्य विधित्सितस्य देवतालक्ष-
णस्य गुणस्यामिक्षायागे प्राप्तस्यापि इतरेषु सप्तसु प्राप्त्यभावात्
विधिसम्भवे तत्प्रापणवैयर्थ्याभावात् तत्प्रख्यतापि नाशङ्कितुं शक्या
वाक्यभेदाद्याशङ्का त्वत्यन्तनिर्मूलेत्यगतार्थत्वाभिधानर्थक्यापत्तिरु-
त्पत्तिशिष्टबलीयस्त्वेनैव वैश्वदेवशब्दस्य नामधेयत्वं दर्शयितुमेव-

---

१ अयं पा० २ पु० पा० ।

मारम्भ इतीहस्येव ग्रन्थतात्पर्यव्याख्या युक्ता । ननु गुणविधिनामधेयचिन्तात्मकस्याधिकरणस्य बर्हिराज्यादिविचारात् प्रागेवारम्भः स्यादित्याशङ्क्याह * सर्वत्र चेति * बर्हिरादिशब्दो ऽपि कस्य नामेत्येवं विचारात्मकत्वात् तस्याव्यवधायकतेत्यर्थः । यदा तु गुणविधिप्रतियोगित्वेन विधिनिरपेक्षलोकप्रसिद्धदध्यादिनाम विलक्षणं विधेयकर्मण्यलौकिकं नाम वेदेन विधीयमानं नामधेयशब्देनोच्यते तदा संस्कारनिमित्तत्वपक्षे यल्लूयते तस्य बर्हिःशब्दो नामेति विधेयसंस्कारयुक्ते द्रव्ये वेदेनालौकिकस्य नाम्नो विधीयमानत्वात् नामधेयत्वजातिनिमित्तत्वे यौगिकत्वे च विधिनिरपेक्षलोकप्रसिद्धत्वात्तन्नामधेयतेति सामान्यत एव नामधेयचिन्तात्मकत्वात् स्पष्टमेवाव्यवधायकत्वं यद्वा निर्मन्थ्यशब्दस्य यौगिकस्य नामधेयत्वे सत्यपि गुणविधित्वस्य दर्शनाद्वैश्वदेवशब्दस्यापि यौगिकत्वात् सत्यपि नामधेयत्वे गुणविधित्वमप्यास्त्विति समुच्चयेन पूर्वपक्षः केवलनामधेयत्वेन सिद्धान्त इत्येव विचाराङ्गीकरणेनानन्तरसङ्गतिरेवं वक्तुं शक्येत्याह * अथ वेति * एतच्चानन्तरसङ्गत्युपपादनसामर्थ्यप्रदर्शनमात्रार्थमुक्तं न पारमार्थिकं सिद्धे हि वैश्वदेवशब्दस्य नामधेयत्वे समुच्चयेन पूर्वपक्षः स्यात् तत्सिद्धिश्च तत्प्रख्यतयैव सर्वेषां नामधेयमिति वार्त्तिकदर्शनात् तत्प्रख्यन्यायेनाशङ्क्यते स चाविदितबोधनं च विधिरित्युच्यते विदितं चात्रान्यतो गुणविधानमिति तत्प्रख्याधिकरणभाष्याद तस्तत्प्रापणं व्यर्थमिति च वार्त्तिकाद्विधित्सितस्य गुणस्यान्यतः प्राप्तौ विध्यानर्थक्याद् गुणविधित्वानुपपत्तेः पारिशेष्यान्नामधेयतेत्येवं रूपः प्रतीयते न चामिक्षायागव्यतिरिक्तेषु यागेष्वन्यत्र विधित्सितस्य गुणस्यान्यतःप्राप्तिरस्ति प्रकृत्याविशेषणाष्टस्वपि यागेषु गुणविधित्वापत्तावप्यस्यामिक्षातिरिक्तार्थत्वेनानर्थक्यायोगात् गुणविधित्वमाश्रित्य वैश्वदेवीमामिक्षामित्यस्यैवामिक्षामात्रविशिष्टभावनाविधायित्वाश्रयणेन क्रमाविनियुक्तवैश्वदेवयाज्याज्यानुवाक्यायुगलकल्पितमान्त्रावर्णिकदेवतान्वयाद्यागे ऽनुमिते वैश्वदेवीशब्दस्यामिक्षायागनामधेयत्वं वरं युक्तं मन्त्रवर्णाच्च तद्धितस्य बलीयस्त्वात् तद्विनियुक्ताया अपि देवताया वैश्वदेवेन यजेतेत्यनेन विधिराविरुद्धः उत्पत्तिशिष्टाग्न्याद्यवरुद्धत्वादामिक्षायागव्यतिरिक्तेषु देवताविध्यसम्भवेनामिक्षायागे देवताविधिप्रसक्तिमापाद्य तत्प्रख्यतया नामधेयत्वसिद्ध्यभ्युपगमे केवलामिक्षायागनामत्वापत्तेः सर्वनामतेष्टा न सिध्येत् । वार्त्तिककारीयं तु तत्प्रख्यत्वाभिधानमुत्पत्तिशिष्टबलीयस्त्वेनैतदधिकरणव्युत्पादितेन

गुणविध्यसम्भवान्नामधेयत्वे साधिते प्रवृत्तिनिमित्तप्रदर्शनार्थं न तु नामधेयत्वसिद्ध्यर्थम् सर्वत्र च गुणविधित्वसम्भवेनैव नामधेयत्वाभिधानात् इह गुणविधित्वसम्भवे नामधेयत्वानुपपत्तेः। समुच्चयेन पूर्वपक्षस्यानाशङ्क्यत्वात्प्रौढिमात्रमेतदिति स्थितं विशिष्टविध्यसम्भवे कस्य चिद् गुणस्योत्पत्तिशिष्टस्याभावात्तद्बलेन प्रसिद्ध्यादिहेतुत्रयावधारितगुणविधित्वनिरासाशक्तेः सन्देहायोगाद्विशिष्टविधौ व्युत्पादिते सत्युत्पत्तिशिष्टगुणसम्भवात्तद्बलीयस्त्वसन्देहेन गुणविधिनामधेयसन्देहो भवतीति सूचनार्थत्वेनेति चेदिति सूत्रावयवव्यानार्थं यदीति भाष्यं स्पष्टत्वान्न व्याख्यातं विकल्पशब्दस्य गुणविधिप्रतिज्ञानार्थत्वेन व्याख्यानार्थं वैश्वदेव इति भाष्यमुपपादयति * तत्रेति * विफलेन गुणविधिप्रतिज्ञानस्य किं प्रयोजनमित्यपेक्षायामुत्पत्तिशिष्टाग्न्याद्यविरुद्धेषु यागेषु देवतान्तरविध्ययोगाद् गुणविध्यसम्भवाशङ्कानिरासप्रयोजनमाह * एवं हीति * ननूत्पत्तिशिष्टबलीयस्त्वस्योत्पत्तिवाक्यविज्ञातमित्यादिना चित्राधिकरणे साधितत्वात् नेहोत्पत्त्युत्पन्नशिष्टयोर्विकल्पः पूर्वपक्षयितुं युक्त इत्याशङ्क्याह * न चेति * वाक्यभेदापत्त्या तत्र गुणविधित्वानिरासात् पुंपशौ प्राप्ते स्त्रीपशुरिति भाष्यावयवव्याख्यानार्थानागतावेक्षणेनैतदधिकरणसिद्धोत्पत्तिशिष्टबलीयतास्माभिरुक्तेत्यर्थः[1]। भाष्यावयवो ऽप्यनागतावेक्षणेनाभ्युच्चयहेत्वभिधानायेति भाष्यकारशब्देन सूचितम्। ननूत्पत्तिशिष्टामिक्षावरुद्धे यागे वाजिनस्योत्पन्नशिष्टस्य विधानाऽयोगेन भेदकत्वस्य गुणाधिकरणे वक्ष्यमाणत्वात् इह तुल्यबलत्वाशङ्का न युक्तेत्याशङ्क्य * क्व चिदित्युक्तम् * वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमिति तद्धितचतुर्थीकृतं बलाबलं तत्र वक्ष्यते नोत्पत्त्युत्पन्नशिष्टकृतमित्याशयः। नन्वेवमप्यष्टदोषविकल्पापादकत्वाद् गुणविधिर्न युक्त इत्याशङ्क्याह * किं चेति * वसन्ताद्येककालादियोगेनैव समुदायापादनसिद्धेः समस्तानुवादानर्थक्यप्रसङ्गाद्वैश्वदेवशब्दस्य चाग्नेयादिषु प्रत्येकं समुदाये वा प्रवृत्तिनिमित्ताभावेन नामधेयत्वायोगादगत्या विकल्पापादको गुणविधिरेव ज्यायानित्याशयः। श्लोकं व्याचष्टे * यदि हीति * नन्वाग्नेयादिषु प्रत्येकं समुदाये वा विश्वेदेवसम्बन्धस्य प्रवृत्तिनिमित्तस्याभावान्नामधेयत्वासम्भवे ऽप्यामिक्षायागनामत्वं प्रवृत्तिनिमित्तसद्भावाद्भविष्यतीत्याशङ्क्याह * न चेति * यजिसामानाधिकरण्यनिबन्धनत्वान्नामधेयत्वस्य यजेश्चामिक्षायागमात्राग्राहित्वायोगात् तन्मात्रनामधेय-

1 स्वाध्याय इ० २ पु० पा०।

त्वस्य च निष्प्रयोजनत्वेन सिद्धान्तिनो ऽप्यनिष्टत्वात् नैषा शङ्का युक्तेत्यर्थः । आमिक्षायागे तत्प्रख्यान्यशास्त्रसद्भावाद् गुणविधिर्व्यर्थः
३०९।१ स्यादित्याशङ्कां निरस्यन् पूर्वपक्षमुपसंहरति * तस्मादिति * यस्मादुत्पत्त्युत्पन्नशिष्टयोस्तुल्यबलत्वेनोत्पत्तिशिष्टाग्न्याद्यवरुद्धेष्वपि यागेषु विकल्पेन देवतान्तरनिवेशः सम्भवति नामधेयत्वं च समस्तानुवादानर्थक्यापत्तेरामिक्षांयागव्यतिरिक्तेयु च प्रवृत्तिनिमित्ताभावात् तन्मात्रनामत्वस्य चानिष्टत्वात् न युज्यते तस्मादित्यर्थः । शङ्कानिरासार्थं सप्तस्वित्युक्तम् । ननु प्रकृतत्वाविशेषात् सर्वेषु यागेषु यजिना गृहीतेषु एकस्यैव वैश्वदेवशब्दस्यामिक्षायागव्यतिरिक्तेषु विधित्वं तस्मिंश्चानुवादत्वं वैरूप्यापत्तेर्न युक्तमित्याशङ्कते * तत्रेति * परिहरति*तथेति* प्रकृतत्वात् सर्वयागानां ग्रहणाविशेषे ऽपि येषुयागेषु गुणस्याप्राप्तिस्तेषु विधिप्रत्ययस्य तात्पर्योपसंहारात् तद्विषयसमर्पकस्य वैश्वदेवशब्दस्यापेक्षाऽभेदादवैरूप्यमित्यर्थः ।

न प्रकरणात्प्रत्यक्षविधानाच्च न हि प्रकरणं द्रव्यस्य ॥ १४ ॥

वैश्वदेवशब्दे गुणविधानस्य प्रकृतयागापेक्षत्वात् तेषु च प्रत्यक्षेण द्रव्यदेवताविशिष्टयागविधिनैवाग्न्यादिदेवतालक्षणस्य गुणस्य विधानात्तद्विरोधिगुणान्तरनिवेशानुपपत्तेर्न गुणविधिः सम्भवतीत्युत्पत्तिशिष्टबलीयस्त्वेन गुणविधिनिराकरणमविहितदेवताकोपांशुयाजादियागे देवताविधौ देवताविशिष्टयागान्तरविधौ वा न सम्भवतीति प्रकृतयागानुवादो न गुणविधिरुत्पत्तिशिष्टबलीयस्त्वेन निरस्यत इति दर्शयन्सौत्रनञुक्तां प्रतिज्ञां व्याचष्टे * अत्रेति * उत्पत्त्युत्पन्नशिष्टत्वलक्षणवैषम्याभिधानसूचितमुत्पत्तिशिष्टेनोत्पन्नशिष्टस्य बाधं प्रश्नपूर्वकं हेतुत्वेनाह * कथमिति * उत्पत्त्युत्पन्नशिष्टयोर्वाक्ययित्वाविशेषात् विकल्पोपपत्तेः किमित्युपत्तिशिष्टगुणावरुद्धे कर्मणि उत्पन्नशिष्टो गुणो नावकाशार्ह इत्यपेक्षायां प्रकरणात्प्रत्यक्षविधानाच्चेति सूत्रावयवोक्तं वैषम्यं हेतुत्वेन योजयति * विकल्पो ऽपीति * पारिशेष्यान्नामत्वसिद्धिं तस्मादित्युपसंहारभाष्योक्तां विवरीतुम् * तस्मादित्युक्तम् * उत्पत्तिशिष्टबलीयस्त्वं प्रत्यक्षविधानादिति * सूत्रावयवोक्तम् * दर्शयितुं प्रत्यक्षेति भाष्यं व्याचष्टे * अग्न्यादयो हीति * यद्यपि सोमेन यजेतेत्यादौ

१ नायांमति २ पु० पा० ।

कर्मगुणयोर्भिन्नपदोपादाने ऽपि सकृच्छ्रुतेनैव प्रत्ययेनोभयविधानात् शुद्धकर्माप्राप्तेरुत्पत्तिशिष्टबलीयस्त्वं सिध्यति तथापीह विधेयसमर्पकमप्येकमेव पदमस्तीत्यतिशयाभिधानार्थं तद्धितग्रहणं तेषां यागादीनामिति भाष्योक्तस्याग्न्यादीनां यागसम्बन्धस्य द्रव्यसम्बन्धद्वारत्वं दर्शयितुमष्टाकपालादीनामित्युक्तम्। एकपदोपात्ताग्न्यादिवैषम्यसूचितामितरेषां भिन्नपदोपादानं विश्वेदेवा इत्यनेन दर्शितम्। नन्वाग्नेयमष्टाकपालं निर्वपतीत्यादावुत्पत्तिवाक्ये ऽपि द्रव्यविशेषसम्बन्धस्याष्टाकपालादिपदान्तरसम्बन्धाधीनत्वाद्वाक्यीयत्वेन तुल्यतेत्याशङ्कते * नन्विति * नैव हि द्रव्यमात्रस्य तद्धितैर्देवतोच्यते अस्य शब्दाभिधेयस्य विग्रहवाक्यस्थेनास्येति सर्वनाम्ना सन्निहितस्य द्रव्यविशेषस्यैव देवतासम्बन्धस्तद्धितेन क्रियते न चैतावता पदान्तरानर्थक्यम्।

आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः।
आमिक्षापदसामीप्यात्तस्यैव विषयार्पणम्॥

इत्यनेनैव न्यायेन सन्निहितविशेषणापेक्षितविशेष्यासमर्पणार्थत्वात् पदान्तरस्येति परिहरति * नेति * प्रत्यक्षविधानादिति सूत्रावयवोक्तेनैव तद्धितवाच्यद्रव्यविशेषसम्बन्धेन पशुसोमाधिकरणादौ व्यवहारादपौनरुक्त्यम् अस्यापि तद्धितत्वाविशेषात् तुल्यतामाशङ्कते * वैश्वदेवशब्दे ऽपीति * देवताशब्दस्य सम्बन्धिशब्दत्वेन गुर्वादिशब्दवत् प्रतिसम्बन्धिनमपेक्ष्य प्रवृत्तेर्यागस्य च सम्बन्धापादकत्वेनाध्यापनादिवत् प्रतिसम्बन्धित्वायोगात् द्रव्यस्यैव शिष्यादिवत् प्रतिसम्बन्धित्वप्रतीतेः। सास्यदेवतेति देवतातद्धिताधिकारसूत्रे ऽस्य शब्दस्य प्रतिसम्बन्धिद्रव्यविषयत्वावधारणात् सूक्तहविषोरिति नियतविषयत्वस्मृतेश्च वैश्वदेवशब्दस्य देवतासम्बन्धिद्रव्यवाचित्वावसायाद्यागलक्षितस्य द्रव्यस्य देवतासम्बन्धं कल्पयित्वा तद्द्वारेण यागस्य देवतासम्बन्धात्प्रवृत्तेर्विप्रकर्षसाम्याद्वाक्येनेति भाष्यकृतोक्तमिति परिहरति * नेति * नन्वष्टाकपालादेः प्रकृतस्य देवतासम्बन्धित्वोपपत्तेः किमिति यागेन द्रव्यं लक्षणीयमित्याशङ्कानिरासपूर्वकमेतदेव व्याचष्टे * न तावदिति * द्रव्यसम्बन्धं विना तद्धितशब्दस्यापर्यवसानेन वाक्यान्तरान्वयायोगात् अप्रकृतवत्प्रकृतेनापि द्रव्येण स्ववाक्ये श्रवणं विना सम्बन्धानुपपत्तेरपरिहार्या लक्षणेत्याशयः। ननु वाक्येनैव विश्वेषां देवानां यागसम्बन्धलाभेन प्रकरणादिति सूत्रावयवेन प्रकरणापेक्षत्वाभिधानमयुक्तं स्यादित्याशङ्कानिरासार्थं प्रकरणादिति भाष्यं व्याचष्टे

* वाक्येन चेति * कर्मानुवादिनां धातूनां सामान्यविषयत्वे सर्वसङ्करापत्तेस्तत्परिहारायानुवाद्यकर्मविशेषलाभार्थं प्रकरणापेक्षेत्याशयः। तथा च प्रत्यक्षविधानादित्यनेनाग्न्यादीनामेकपदोपादानाभिधानाद्विश्वेषां देवानां भिन्नपदोपादानां सूचितम्। तथा प्रकरणादित्यनेन विश्वेदेवविधौ प्रकरणापेक्षाभिधानादग्न्यादिविधौ तदनपेक्षा सूचितेति दर्शयितुमाह * न त्विति * भाष्यगतेन वाक्यशब्देन वैश्वदेवशब्दे द्रव्यलक्षणाभिधानात्तत्सदसद्भावकृतमपि वैषम्यं सूचितमिति दर्शयितुं लक्षणाशब्दः। न हीति सूत्रावयवं स्वयं तावन्नन्वाग्नेयादिवाक्ये ऽपि द्रव्यदेवतासम्बन्धान्यथानुपपत्त्या यागे कल्पयितुमारभ्यमाणे वैश्वदेवेन यजेतेति प्रत्यक्षश्रुतेन कल्पनाप्रतिबन्धात् तस्यैव ग्रहणायास्त्येव प्रकरणापेक्षेत्याशङ्कानिरासार्थत्वेन निर्वपतेरतिदेशप्राप्तानुवादत्वेन पुंव्यापारनियोगाभावात् आग्नेयादिवाक्यस्य स्वार्थसमाप्तत्वेन वाक्यान्तरान्वयायोगात् नाष्टाकपालादिद्रव्यस्याग्न्यादिसम्बन्धे प्रकरणापेक्षेत्येवं व्याचष्टे *न हीति* यद्वा वैश्वदेववाक्ये यागेन द्रव्यलक्षणाद्विप्रकर्षे ऽभिहिते ननु प्रकृतस्याष्टाकपालादेर्दैवतान्वयसम्भवान्न यागेन द्रव्यं लक्षणीयमित्याशङ्कानिरासार्थत्वेन द्रव्यसम्बन्धं विना तद्धितस्यापर्यवसानेन वाक्यान्तरान्वयायोगात् यद्द्रव्यस्य प्रकरणे श्रवणं तन्न वैश्वदेववाक्येनाश्रितम् इत्येवं व्याख्येयमित्याह * अथ वेति* भाष्यकृता त्वाग्नेयादिवाक्ये प्राकरणिकयज्यपेक्षायां वैश्वदेववाक्यस्यैव यागविधायित्वापत्तेः पूर्वपक्षहानिप्रसङ्गात्। प्राप्ते च कर्मण्याग्नेयादिवाक्येनानेकगुणविधेर्वाक्यभेदापत्त्या पौर्णमास्यधिकरणे निराकरिष्यमाणत्वात्। आद्यायाः शङ्कायास्तुच्छत्वात् यागेन च द्रव्यलक्षणायाः सूत्रानुक्तत्वेन तद्विषयाशङ्कानिरासार्थतया सूत्रावयवयोजनस्य क्लिष्टत्वात्। प्रत्यक्षविधानप्रकरणशब्दोक्तस्योत्पत्त्युत्पन्नशिष्टत्वलक्षणस्य वैषम्यस्य प्रस्तुतविकल्पनिरासोपयोगित्वप्रतिपादनार्थत्वेनायं सूत्रावयवश्चशब्दार्थे हिशब्दं द्रव्यशब्दं चाग्न्यादिदेवतापरमङ्गीकृत्य प्रकरणापेक्षं विश्वेदेवदेवताख्यं वस्तुश्रुतस्याग्न्यादेः पाक्षिकबाधनेन च समर्थं येन विकल्पः स्यादिति अध्याहारेण व्याख्यातः तत्र कथं द्रव्यशब्देन देवतोच्यते इत्यपेक्षायामाह * भाष्ये त्विति * देवताव्यतिरेकजनितां वा षष्ठीमङ्गीकृत्य श्रुतस्य द्रव्यस्येति षष्ठ्या वैयधिकरण्यनिर्देशेन द्रव्यस्याष्टाकपालादेः सम्बन्धित्वेन श्रुतस्याग्नादेर्दैवतारूपस्येत्येवं भाष्यकृद्व्याख्यानुसर्तव्येत्याह * वैय्यधिकरण्यं वेति* देवतात्वेनादीयते गृह्यते यदग्न्यादीत्येतदर्थप्रतिपादनार्थो ऽयमादि-

शब्दः यागसम्बन्धित्वेन श्रुतेभ्यो विश्वेदेवेभ्यो ऽग्न्यादीनां वैषम्यप्रदर्शनार्थं द्रव्यसम्बन्धाभिधानम्। ननु प्रकृतेषु गुणविध्यसम्भवे ऽप्यविहितदेवताकोपांशुयाजानुवादेन गुणविधिर्गुणविशिष्टापूर्वकर्मविधिर्वा भविष्यतीत्याशङ्क्याह * प्रकृतेति * समस्तानुवादानर्थक्यं ३।१०।२
पूर्वपक्षोक्तं परिहरति * विप्रकीर्णेति * यद्विश्वेदेवा अयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वमित्यर्थवादावगतविश्वेदेवकर्तृकत्वलक्षणैकधर्मयोगनिमित्तमष्टानां यागानां समुदायरूपत्वेनैकीकरणं समुदायानुवादप्रयोजनमित्यर्थः। ननु प्राजापत्यपशुयागादिवत् समुदायानुवादं विनापि प्रकृतत्वयागत्वाभ्यामेकबुद्धिविषयत्वलक्षणसमुदायत्वं सेत्स्यतीत्याशङ्क्य विप्रकीर्णेत्युक्तं सह विधानाभावान्नैषां प्राजापत्यादितुल्यतेत्याशयः। ननु वसन्ताद्येककालादियोगात् समुदायत्वं सेत्स्यतीत्याशङ्क्याह * न हीति * वैश्वदेवशब्दस्य समुदायवाचित्वाभावे भिन्नवाक्यविहितानां यागानां साहित्याप्रतीतेभिन्नेष्वपि च वसन्तकालेषु प्राचीनप्रवणदेशेषु वानुष्ठाने वसन्तादिविध्यर्थसम्पत्तेर्गुणानुरोधेन प्रधानसाहित्यकल्पनायोगात् नैकदेशकपालायोगात्समुदायत्वसिद्धिरित्याशयः। विश्वे देवा न च प्राप्ता इत्यनेन प्रवृत्तिनिमित्ताभावान्नामधेयत्वासम्भवमुक्तं परिहरति *तस्मादिति * यस्मात्समुदायानुवादेन समुदायत्वं सिद्धं तस्माल्लिङ्गसमवायात्सर्वेषां तत्प्रख्यस्य वैश्वदेवशब्दव्यपदेश्यत्वस्योपपत्तेः सर्वेषामेव वैश्वदेवशब्दो नामधेयमित्यर्थः। समुदायत्वसिद्धावपि वैश्वदेवशब्देन समुदाये गुणस्याविधित्सितत्वात्समुदाये गुणप्रापकशास्त्रान्तरस्याभावादेकदेशे प्राप्तस्य गुणस्यैकदेशान्तरे प्रापणवैयर्थ्यायोगात्तत्प्रख्यशब्दस्य च तत्प्रख्यान्यशास्त्रसद्भावप्रतिपादनासामर्थ्यात्तत्प्रख्याधिकरणन्यायसिद्धत्वं नामधेयस्यानेनोक्तमिति न भ्रमितव्यम्।

## मिथश्चानर्थसम्बन्धः ॥ १५ ॥

ननु यथा वाजिभ्यो वाजिनमित्यत्र स्ववाक्यगतेन वाजिशब्देनामिक्षाक्षागं लक्षयित्वा विधीयमानस्य वाजिनस्य प्रकरणापेक्षाभावात्तन्निमित्तदौर्बल्याभावेनोत्पत्तिशिष्टामिक्षावरुद्धस्यापि यागस्य विधीयमानद्रव्यान्तराकाङ्क्षावशेनाकाङ्क्षोत्थापनात्तस्मिन्नेव यागे वाजिनस्य निवेशोपपत्तिरिति गुणाधिकरणे पूर्वपक्षयिष्यते तथेहापि स्ववाक्यगतेन वैश्वदेवशब्देनैवाग्नेयादियागलक्षणोपपत्तेः प्रकरणानपेक्षत्वात् तदपेक्षानिमित्तदौर्बल्याभावेनोत्पत्तिशिष्टाग्न्याद्यवरुद्धे-

ष्वपि यागेषु विधीयमानदेवतान्तराकाङ्क्षावशेनाकाङ्क्षोत्थापनाद्देवतान्तरं निवेक्ष्यते यथा चैतद्यदनुसवनं पुरोडाशा निरूप्यन्ते इति पुरोडाशशब्देन धानाः करम्भः परिवापः पुरोडाशः पयस्येत्येष वै यज्ञो हविष्पङ्क्तिरित्येकस्यैव पुरोडाशस्य प्रकृतत्वाद् बहुवचनान्वयाय हविर्गणो लक्ष्यते तथा वैश्वदेवशब्देनाप्यामिक्षायागो विश्वेषां देवानां प्राप्तत्वेन विधानायोगात् तद्विधानायामिक्षायागलक्षणायामानर्थक्यापत्तेस्तत्सहचरिताग्नेयादियागलक्षणा न विरुद्धेत्याशङ्कानिरासार्थत्वेनैतत्सूत्रव्याख्यानार्थमथोच्येतेति भाष्यं संक्षिप्य व्याचष्टे * वैश्वदेवमिति * उपोधिके चेति चकारेण लक्षणार्थस्यापि उपशब्दस्य कर्मप्रवचनीयसंज्ञान्वाख्यानात्कर्मप्रवचनीययुक्ते द्वितीयेति स्मृतेस्तद्योगनिमित्तद्वितीयाभ्युपगमेन विश्वेदेवयागस्य समीपे विहितानाग्नेयादियागान् वैश्वदेवशब्देनादाय देवतोपदिश्यत इति यदाशङ्कते तन्न युक्तमित्येवं योज्यम् । यदा त्वनन्तरसङ्गतिलोभेन द्रव्यशब्दानुपादाने ऽपि देवताशब्दस्य सम्बन्धिशब्दत्वात् प्रतिसम्बन्धिद्रव्यमपेक्ष्य प्रवृत्तेः सास्य देवतेति अधिकारसूत्रगतस्यास्य शब्दस्य द्रव्यविषयत्वावगतेः सूक्तहविषोरिति च तद्विषयस्मृतेर्विश्वेदेवा अस्य हविषो देवता इति वैश्वदेवशब्दार्थावसायात् यजिसामानाधिकरण्यसिद्ध्यर्थं वैश्वदेवद्रव्यवतायागेनेति मत्वर्थलक्षणाप्रसङ्गात् उद्भिन्न्यायसिद्धं नामधेयत्वमाश्रित्य प्रवृत्तिनिमित्तसिद्ध्यर्थं गुणविधिरप्यस्त्विति समुच्चयेन पूर्वपक्षः क्रियते तदा नामधेयगुणविधिरूपयोरर्थयोः प्रयोजनयोः सकृदुच्चरितेन वैश्वदेवशब्देन सह प्रयोजनप्रयोजनिभावलक्षणः सम्बन्धो न युक्त इत्येवं सूत्रं व्याख्येयमित्याह * अथ वेति * ननु निर्मन्थ्यशब्दे प्रयोजनद्वयदर्शनान्नानयोर्विरोधो ऽस्तीत्याशङ्क्याह * निर्मन्थ्यस्त्विति * अग्निशब्दाश्रवणेन तत्सामानाधिकरण्याभावाश्रवणे ऽपि वा निर्मन्थ्यशब्दस्याग्निपर्यायत्वाभावेनाग्निमात्रनामत्वायोगात् मन्थनजन्यस्य च विशेषस्याक्षेपकाभावेनाप्रतीतेस्तन्नामत्वस्याप्ययोगाद् गुणविधिरेव केवलो ऽसावित्यर्थः ।

## परार्थत्वाद् गुणानाम् ॥ १६ ॥

भाष्यकृता गुणानां हविषां प्रधानार्थत्वेन तदावर्त्तकत्वाशक्तेः सहप्रदानप्रसङ्गात् त्रिंशत्सम्पतिवचनं न युज्येतेत्यध्याहारेणैतत्सूत्रं व्याख्यातम् । तत्र बहुपदाध्याहारदोषेणापरितोषात् पूर्वेण सहैकसूत्रतया व्याचष्टे * पूर्वेणेति * त्रिंशदाहुतया हूयन्तइति वाक्या-

र्थसम्बन्धो न स्यादित्यर्थः। गुणविधावपि हविर्भेदेन प्रधानावृत्तेः कथं सहप्रदानापत्तिरित्याशङ्कानिरासार्थत्वेन परार्थत्वादित्यत्र गुणशब्दं हविःपरमङ्गीकृत्य योजयति * कुत इति * ननु स्वत एव कर्मणां भेदात् नाश्रुतावृत्त्यापत्तिरित्याशङ्क्याह * देवतैक्यादिति * भिन्नानामपि कर्म्मणां प्रयोगवचनेन सहानुष्ठानं विहितमशक्त्या त्यज्यते एकां तु देवतां सकृदुद्दिश्यानेकद्रव्यत्यागशक्तेः साहित्यत्यागो न युक्त इत्यर्थः। ननु गुणानां प्रधानावर्त्तनाशक्तावपि प्रधानानां भेदात् स्वत एवानुष्ठानभेदो भविष्यतीत्याशङ्कानिरासार्थं तत इति भाष्यं व्याचष्टे * तेनेति * कथं भिन्नानां सहानुष्ठानं शक्यम् इत्याशङ्कानिरासार्थं सम्प्रतिपन्नेति भाष्यं व्याचष्टे * सम्प्रतिपन्नेति * सकृदनुष्ठानापादनस्य प्रकृतोपयोगाभिधानार्थं तत्रेतिभाष्यं व्याचष्टे * ततश्चेति * ननु प्रधानानुष्ठानभेदे ऽप्यष्टसंख्या- ३११।१
सम्पत्तेस्त्रिंशत्सम्पत्तिवचनं न युज्येतैवेत्याशङ्क्याह * त्रिंशत्पूरणं चेति * अपरेषां तु त्विष्टकृद्यागवाजिनेज्याग्रहणादाधारौ न गणितौ इति लिङ्गदर्शनसूत्रमुपसंहरति * सर्वथेति *

॥ वैश्वानरेऽष्टत्वाद्यर्थवादताधिकरणम् ॥ ११ ॥

## पर्ववन्तो विधानार्थास्तत्सामर्थ्यं समाम्नाये ॥१७॥

ननु नामधेयाधिकरणे नामधेयानां त्र्यंशवेदबाह्यत्वाद्धर्मप्रमोपयोगाभावेनानर्थक्यमाशङ्क्य गुणफलोपबन्धाद्युपयोगित्वेन विध्युद्देशान्तर्गत्या धर्मप्रमोपयोगं प्रसाध्य क्वास्ति नामधेयत्वं क्व वा नेति कोष्ठशोधनमुद्भिदाद्यधिकरणैः कर्त्तुमारब्धं तस्य चान्नाविचारेण पर्यवसानात्कोष्ठशोधनेन नामधेयप्रामाण्यविचारशेषत्वानुपपत्तेरर्थवादकोष्ठशोधनार्थत्वे वा द्वितीयपाद एवार्थवादप्रकरणे कर्त्तव्यत्वापत्तेः स्वातन्त्र्येण तु गुणविध्यर्थवादविचारे वाक्यार्थव्याख्यानापत्तेः प्रमाणलक्षणसङ्गत्यभावप्रसङ्गादनारभ्यमिदमधिकरणमित्याशङ्क्याह * गुणविधीति * सर्वत्र गुणविध्यसम्भवेनैव नामधेयत्वस्योक्तत्वात् तद्विचारे पर्यवसिते प्रतियोगित्वेन बुद्धिस्थस्य गुणविधित्वस्य विचारः पूर्वाधिकरणव्युत्पादितस्योत्पत्तिशिष्टेनोत्पन्नशिष्टबाधस्याष्टाकपालादिर्विषयो भवति न वेत्येतन्निर्णयार्थत्वेन नामधेयत्वसिद्ध्यर्थोत्पत्तिशिष्टबलीयस्त्वविषयविवेकफलतया नामधेयविचारशेषत्वं प्रतिपद्यमानो नासङ्गत इत्याशयः। यद्वा गुणविधिनामधेयं निर्णीतं सन्दिग्धानामर्थानां वाक्यशेषादर्थाच्चाध्यवसानमुक्तमिति द्वितीयाध्यायोपक्रमभाष्यपर्यालोचनया ऽक्का-

धिकरणं यावन्नामधेयविचारप्रतीतेः साक्षान्नामधेयाविचारसङ्गतिसिद्ध्यर्थम् अष्टाकपालादिशब्दानां नामधेयत्वेनापि पूर्वपक्षः कर्तुं शक्यतइत्याह * अथ वेति * अष्टाकपालादिशब्दानां विशेष्यापेक्षायां द्वितीयान्तस्यापि वैश्वानरपदस्य प्रथमान्तत्वेन परिज्ञातस्यान्वयप्रतीतेः । तस्य च देवतान्वितद्रव्यवाचित्वे ऽपि यागानुमानपर्यवसायित्वात् उत्पत्तिशिष्टद्वादकपालावरुद्धे च यागे ऽष्टाकपालादीनां निवेशायोगात् द्वादशत्वान्तर्गताष्टत्वादियोगस्य च प्रवृत्तिनिमित्तस्य सम्भवाद्वैश्वदेवशब्दवद्यागनामत्वमाशङ्क्य द्वादशकपालस्याष्टाकपालादिव्यपदेश्यत्वलक्षणस्य तत्प्रख्यत्वस्याभावेन प्रवृत्तिनिमित्ताभावान्निराकृत्य वैकल्पिकानेकसंख्याविशिष्टवैश्वानरयागाख्यैकार्थविधानेनानेकगुणविधावपि वाक्यभेदाप्रसक्तेः सर्वेषामुत्पत्तिशिष्टत्वाविशेषाद्वैश्वदेवन्यायवैषम्येण गुणविधिमुपपाद्य सामानाधिकरण्यनिर्दिष्टद्वादशकपालान्वयेन निराकाङ्क्षस्य वैश्वानरस्य विपरिणामेनाष्टाकपालाद्यन्वयकल्पनानुपपत्तेर्गुणविधावेकवाक्यत्वायोगात् वैश्वदेवन्यायसाम्यापादनेन निराकृत्यार्थवादत्वं सिद्धान्त्यतइत्यर्थः । नन्वौदुम्बराधिकरणे एव सर्वेषां विधिवन्निगदानां विधित्वाशङ्कानिरासेनार्थवादाधिकरणव्युत्पादितस्यार्थवादत्वस्यापि स्थापितत्वादनर्थकमेतदधिकरणं स्यादित्याशङ्क्य *पूर्वसिद्धैर्वेत्युक्तम् * भाष्यकारान्तरकृता ऽऽकारप्रश्लेषरहितसूत्रव्याख्यानत्यागेनाकारप्रश्लेषेण भाष्यकृतो व्याख्याने कारणं वक्तुमुपन्यासपूर्वकं तद् दूषयति *तत्रेति* यस्माद्युत्पत्तावपूर्वमित्यनेनाप्रसिद्धानामुद्भिदादिशब्दानां नामधेयत्वावधारणात् लोकप्रसिद्धानां गुणविधानेनार्थवत्त्वमर्थादुक्तं भवति तस्मादेते ऽष्टाकपालादयः शब्दा लोकप्रसिद्धार्थत्वाद् गुणविधय इत्यर्थः । द्वादशकपालं निर्वपेदित्यनेनैव पुरोडाशप्राप्तेः संख्यामात्रपरत्वमष्टाकपालादिशब्दानां सूचयितुमष्टत्वादय इत्युक्तम् । उद्भेदनादेरवयवार्थस्य लोकप्रसिद्धस्यैव नामधेयप्रवृत्तिनिमित्तत्वाल्लोकप्रसिद्धार्थस्यापि चित्रादिशब्दस्य नामधेयत्वप्रसिद्धेर्न लोकप्रसिद्धार्थत्वमात्रेण गुणविधित्वासिद्धिरिति दूषणाशयः । किमर्थं तर्हि यदुत्पत्तावपूर्वमित्युक्तमित्याशङ्क्याह * सतीति * नालौकिकार्थत्वमपूर्वशब्देनोक्तं किं त्वनिरूढार्थत्वमिति सूचयितुम् * सर्वत्रेत्युक्तम् * तदपि नामधेयत्वावधारणे सामानाधिकरण्यसहकारिकारणं न साक्षादिति समभिव्याहारादिभिरित्यनेनोक्तं पूर्ववच्छब्दं प्राप्तार्थाभिप्रायमङ्गीकृत्याकारप्रश्लेषेण भाष्यकारीयव्याख्यानमनुसन्धत्ते * तस्मादिति * पूर्ववन्तो विधाना-

र्थो इति सूत्रावयवो ये हीति भाष्यानुसारात् पूर्वार्द्धेन व्याख्यातः। तदेतदिति भाष्यानुसाराढुत्तरार्द्धेनोत्तरः पूर्वार्द्धं व्याचष्टे * यदि हीति * उत्तरार्द्धं व्याचष्टे *न त्विति* ननु द्वादशत्वे ऽष्टत्वादीनामन्तर्गतेः प्राप्तिर्भविष्यतीत्याशङ्क्याह * तथा हीति * यथा देव- ३।१।१।
दत्त गामानयेति त्रिपदे वाक्ये गामानयेति पदद्वयसमुदायो ऽन्यत्र वाक्यार्थाभिधानलक्षणैकार्थक्रियाकारित्वधर्मयोगाल्लब्धात्मको ऽत्र प्रत्यभिज्ञायमानो ऽपि विवक्षितवाक्यार्थाभिधाने व्यापाराभावान्न समुदायत्वेन व्यपदिश्यते तथा संख्येयपरिच्छेदकत्वेनान्यत्र लब्धात्मिकाप्यष्टत्वादिसंख्या द्वादशसंख्यापरिच्छेद्यानां कपालानामपरिच्छेदकत्वात् परिच्छेदकत्वं च विना निरूपयितुमशक्यत्वात् न संख्यात्वेन व्यपदिश्यतइत्युक्तम्। ननु महासंख्यायामवान्तरसंख्याव्यपदेशाभावे सहस्रदर्शनेन शतानुमानं शतं ब्राह्मणाः सोमान् भक्षयन्तीति चोक्ते द्वादशैकैकमिति विभागकथनं सप्तमान्त्ये च चोदकनामधेययोर्विरोधे नामधेयबलीयस्त्वे सिद्धान्तिते गवामयने तर्हि वैश्वानरो ज्योतिष्टोमं प्रायणीयमहर्भवति इति प्रथमस्याह्नो नामधेयबलीयस्त्वात् ज्योतिष्टोमविकारत्वेन त्र्युपसत्त्वे प्राप्ते तस्य च मुख्यत्वात् तदनुरोधेनान्येषामपि त्र्युपसत्त्वापत्तेर्द्वादशोपसत्त्वदर्शनं न युक्तमित्याशङ्क्य द्वादशसु तिसृणां भावात् सर्वेषामनुग्रहार्थं द्वादशोपसत्त्वस्य तन्न्याय्यत्वात् युक्तं तद्दर्शनमित्यभिधानं न युज्येतेत्याशङ्क्य * अर्थात्मनेत्युक्तं * वस्तुवचनो ऽर्थशब्दः महासंख्यापरिच्छेद्येभ्यः संख्येयेभ्यः कतिषु चिन्निष्कृष्यमाणेष्ववान्तरसंख्या वस्तुरूपेणास्त्येवेत्यर्थः। एवं तर्हि प्राप्तत्वान्नाष्टत्वादीनां विधेयत्वं सिध्येदित्याशङ्क्य * नासावित्युक्तम् * अष्टसु कपालेषु संस्कृतमिति विग्रहवाक्यगतया सप्तम्याष्टत्वस्य संस्काराख्यक्रियाङ्गत्वप्रतीतेस्तस्य च संस्कारसाधनीभूतकपालपरिच्छेदद्वारत्वात्तेषां च द्वादशत्वपरिच्छिन्नानामष्टत्वेन परिच्छेत्तुमशक्यत्वात् निर्द्धारणस्य गुणस्य क्रियासाधनत्वायोगात् नाष्टत्वादेर्द्वादशकपालपुरोडाशसंस्काराङ्गत्वेन प्राप्तिरस्तीत्याशयः। यथा कथं चित्प्राप्तिमभ्युपेत्यापि तद्धितसमासयोः सामर्थ्यापेक्षत्वात् विशेषणत्वं च विना सामर्थ्यायोगात् द्वादशान्तर्गतस्य चाष्टत्वादेः संख्यान्तराव्यावर्त्तकात्वाद्विशेषणत्वाऽसम्भवेनाष्टाकपालादिशब्दानुपपत्तिसूचनायाङ्गमिति वक्तव्ये * विशेषणमित्युक्तम् * श्लोकं व्याचष्टे * न हीति * निष्क्रियत्वेन संख्यायाः संस्कारसाधनीभूतकपालपरिच्छेदनिरपेक्षायाः

संस्कारे व्यापाराभावान्नाङ्गत्वेन प्राप्तिरस्तीत्यर्थः । अप्राप्त्यर्थमेव संख्यापरिच्छेदकत्वं विना संख्यानिरूपणाशक्तेरसत्तुल्यत्वमविद्यमानताशब्देनोक्तं कति चिन्निष्कृष्याष्टावेतानीति परिच्छेदकत्वात् प्राप्तिसम्भवे ऽपि संस्कारसाधनीभूतद्वादशसंख्याकपालपरिच्छेदकत्वाभावान्नाष्टाकपालादिव्यपदेशोपपत्तिरिति * यद्यपि चेत्यनेनोक्तम् * ननु द्वादशकपाले ऽप्यष्टौ कपालानि सन्ति अस्मिन्निति अष्टाकपालशब्दो न शक्यो वक्तुमित्याशङ्क्य * संस्कृतेत्युक्तम् * तत्रेत्यनुवर्त्तमाने संस्कृतं भक्षा इत्यनेनाष्टसु कपालेषु संस्कृतमित्यस्मिन्नर्थे संख्यापूर्वसमासत्वेन द्विगुसञ्ज्ञा दृष्टा कपालप्रातिपदिकाद्विहितस्याण्प्रत्ययस्य द्विगोर्लुगनपत्यइति द्विगुपरतद्धितलुक्स्मरणेन लोपादष्टाकपालशब्दसिद्धिरित्याशयः । नन्वेवमपि समासवेलायां संस्कारकत्वस्योपाधेरभावात् संस्कारकाणामष्टत्वेनापरिच्छेद्यत्वे ऽपि केषां चिन्निष्कृष्टानां तत्परिच्छेद्यत्वेन समासोपपत्तिरधिकानामपि च संस्कारकत्वानपायात्तद्धितोपपत्तेरष्टाकपालशब्दो न विरुध्यतइत्याशङ्क्य * तद्धितार्थेत्युक्तम् * तद्धितार्थोत्तरपदसमाहारे चेति तद्धितार्थे विषयभूते दिक्संख्ययोः सामानाधिकरण्यसमासस्मृतेः संस्कारकत्वस्योपाधित्वावसायात् द्वादशत्वपरिच्छिन्नानां च संस्कारकाणामष्टत्वेन परिच्छेत्तुमशक्यत्वात् अष्टाकपालशब्दानुपपत्तिरित्याशयः । ननु द्वादशत्वपरिच्छेद्यसमुदायैकदेशभूतानि तानि कपालानि निष्कृष्याष्टत्वादिना परिच्छेत्तुं शक्यत एवेत्याशङ्क्याह *तौ चेति* एकदेशभूतानामेकदेशान्तरसापेक्षत्वात्तद्धितसमासयोर्द्वयोरप्यनुपपत्तिः स्यादित्याशयः । द्वादशकपाले ऽष्टत्वाद्यभावाभिधानस्य प्रकृतोपयोगमाह * तेनेति * अष्टाकपालादिशब्देन द्वादशकपालसङ्कीर्त्तनस्यासत्त्वादित्यर्थः । नामधेयत्वपूर्वपक्षस्यानभिमतत्वद्योतनार्थं तदुपेक्षा अनेन चेतरथेति भाष्यमपि व्याख्यातं भवति । नन्वष्टाकपालादिशब्दैर्द्वादशकपालाऽनभिधानात्तत्प्ररोचनाऽसम्भवे ऽप्यष्टत्वादीनां द्वादशत्वान्तर्गतानां प्ररोचनार्था स्तुतिर्भविष्यतीत्याशङ्क्याह* न चेति * द्वादशकपालसाध्ये कर्मण्यष्टत्वादेर्द्वादशत्ववत् कपालपरिच्छेदकत्वाभावात् तद्वैलक्षण्येन च प्रकारान्तरेण संख्यायाः कर्मोपयोगासम्भवात् अनुपयोगिनः स्तुतिर्व्यर्था स्यादित्याशयः । अविभागादिति सूत्रे यदा त्वष्टत्वादिप्ररोचनार्था अनर्थका इत्यवगतमित्यनुभाषणार्थकथनपरभाष्यदर्शनादितरथेति भाष्यस्याप्ययमेवाशयो गम्यते एतच्च तत्सामर्थ्यमिति सूत्रावयवेन विधानएव साम-

१ संस्कारकत्वे तावतामतप्रसिक्तं २ पु० पा० ।

र्थ्यमित्यवधारणादर्थवादत्वे सत्यसामर्थ्यमित्यर्थादुक्तं भाष्यकृता व्याख्यातम्। नन्वष्टत्वादेः कर्मानुपयोगित्वात्स्वतः स्तुत्यनर्हत्वे द्वादशत्वस्तुत्यर्थे चेत्साधकस्तुत्यर्थे चेयं स्तुतिर्भविष्यतीत्याशङ्कानिरासार्थं न चेति भाष्यं व्याचष्टे * यद्यपि चेति * द्वादशकपालाष्टाकपालशब्दयोः पुरोडाशवाचित्वादष्टाकपालपुरोडाशस्तुत्या द्वादशकपालपुरोडाशस्तुतिरिह प्रतीयते न च गायत्र्याद्यक्षरसंख्यासामान्येनाष्टत्वादौ कपालविशेषणे स्तुते तद्द्वारा द्वादशत्वे स्तुते कपालाधारसंस्कारविशेष्यः पुरोडाशः स्तुतो भवतीत्यर्थः । अनेन च प्रत्यक्षा ह्यष्टानां कपालानां स्तुतिः परोक्षा द्वादशानां पुरोडाशस्य तु न कथं चिदित्येवं भाष्यं व्याख्यातम्। ननु संख्यास्तुत्या पुरोडाशस्तुत्यसम्भवे ऽपि द्वादशसंख्यैवाष्टादिसंख्या स्तोष्यतइत्याशङ्कानिरासार्थत्वेन प्रत्यक्षाभावे चेति भाष्यं द्वादशत्वस्यासाक्षात् सम्बन्धिस्तुत्यभावे ऽष्टत्वादिद्वाराङ्गीकार्या स्यात् तत्सद्भावात्तु परोक्षाङ्गीकरणं न युक्तमित्येवं व्याचष्टे * अपि चेति * तस्मादित्युपसंहारभाष्यं व्याचष्टे * तस्मादिति * ननूत्पन्नस्युत्पन्नशिष्टयोर्विकल्पः पूर्वाधिकरणएव निरस्त इत्याशङ्क्याह * सर्वं चेति * वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति यन्नवकपालो भवति त्रिवृतैवास्मिंस्तेजो दधाति यद्दशकपालो भवति विराजैवास्मिन्नन्नाद्यं दधाति यदेकादशकपालो भवति त्रिष्टुभैवास्मिन्निन्द्रियं दधाति यद्द्वादशकपालो भवति जगत्यैवास्मिन् पशून्दधाति यस्मिन् जातएतामिष्टिं निर्वपति पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवतीत्युपक्रमोपसंहारयोरेकजातेष्टिविषयत्वेनैकवाक्यत्वान्नोत्पन्नस्युत्पन्नशिष्टरूपो विशेषो ऽत्रास्तीत्यर्थः । एकवाक्यविहितानामपि संख्यानां समुच्चयायोगात् विकल्पो न विरुद्ध इत्याशयः । अनेन चैकवाक्यत्वाभिधानार्थत्वेन सौत्रं समाम्नाय पदं व्याख्यातं भवति न त्वविधानार्थो इत्यकारप्रश्लेषेण व्याख्याने तत्सामर्थ्यमिति तच्छब्देनाविधानस्यैव परामर्शापत्तेर्विधानसामर्थ्यमिति भाष्यकारीयं व्याख्यानं पूर्वापरविरुद्धमित्याशङ्क्याह * तत्सामर्थ्यमिति चेति * तत्रत्यपूर्वपक्षे विकल्पेन फलेन गुणविधिप्रतिज्ञानात् व्यवहितस्यापि योग्यत्वात्तच्छब्देन परामर्शो भाष्यकृता विधानशब्देन दर्शितो नैतत्सूत्रस्थस्येत्याशयः । योग्यत्वमेव विवृणोति * तदीयं हीति * प्रतिज्ञाध्याहारेण सूत्रं पूरयति * तस्मादिति * ये वैश्वदेवादिशब्दाः पूर्ववन्तो वाक्यान्तरेण गुणविशिष्टे कर्मणि पूर्वमुत्पन्ने तद्विरुद्धगुणान्तराभिधा-

यिनः ते स्ववाक्यस्थेन गुणेन निराकाङ्क्षे कर्मणि तद्विरुद्धगुणान्तराभिधानाशक्तेरविधानार्थाः अष्टाकपालादिशब्दानां तु सामाम्नायत्वात् सहोच्चारणत्वात् एकवाक्यगतत्वात् उत्पत्त्युत्पन्नशिष्टत्वविशेषानवगमाद्यद्वैश्वदेवशब्दस्य पूर्वपक्षे सामर्थ्यं तदेषामस्ति यस्तूत्पत्तिशिष्टेनोत्पन्नशिष्टस्य बाधस्तत्रोक्तः सो ऽत्र नास्तीति सूत्रार्थो ऽनेनोक्तो भवति ।

गुणस्यतु विधानार्थे ऽतद्गुणाः प्रयोगे स्युरनर्थका न हि तं प्रत्यर्थवत्तास्ति ॥ १८ ॥

गुणविधानार्थत्वे ऽष्टाकपालादिशब्दानां बलाद्वाक्यभेदापत्तेरुत्पत्तिशिष्टद्वादशत्वावरुद्धे यागे ऽष्टत्वादीनां निवेशाशक्तेरतद्गुणेनानर्थक्यम् उपपादयितुं गुणस्येत्यादिभाष्यमकृते द्वादशत्वानवरुद्धे गुणविधौ गुणविशिष्टयागान्तरविधौ चानर्थक्याभावादयु-
३।३।१२ क्तमाशङ्क्योपलक्षणार्थत्वेन व्याचष्टे * प्रकृतं इति * तथाशब्देन प्रकृताप्रकृतत्वे परामृष्टे गुणविशिष्टो यागश्चकारेणोक्तः । यागे तावत् त्रेधापि गुणविध्यसम्भवमुपपादयति * प्रकृत इति * द्रव्यदेवतासंयोगाश्रयणेन यागानुमानं निरस्तं द्रव्ये ऽपि प्रकृतयागसम्बन्धिनि दूरस्थयागसम्बन्धिन्यपूर्वयागसम्बन्धिनि वा गुणविधिस्त्रिविधो ऽपि यागे गुणविधिनिरासान्निरस्त इत्याह * एतेनेति * गुणविशिष्टद्रव्यविध्यसम्भवं प्रतिज्ञातमुपपादयितुं स्मारयति * तथेति * त्रेधापि प्रत्युक्तमित्यतिदेशार्थस्तथाशब्दः । प्रकृते तावद्यागे गुणविशिष्टद्रव्यविध्यसम्भवमुपपादयति * न हीति * यदाहवनीये जुहोतीतिवद्यजेतेति स्वशब्देनानुवादाभावाद् दूरस्थे ऽपि द्रव्यविधिर्न सम्भवतीत्याह * नापीति * नन्वेवमपि तर्हि स्वतन्त्रमेव गुणविशिष्टं द्रव्यं विधीयतामत आह * न चेति * न केवलमानर्थक्यापत्तेरविधानं किं त्वशक्यत्वादपीत्याह * नापीति * विध्यशक्तेरेव तदधीनफलकल्पनाशक्तेर्नाश्रुतफलकल्पनयानर्थक्यं परिहर्तुं शक्यमित्याह * अत इति * ननु वैश्वानरो ऽष्टाकपालो भवतीति वैश्वानरपदानुषङ्गेण द्रव्यदेवतासम्बन्धानुमितयागलाभादष्टाकपालादिपुरोडाशविशिष्टापूर्वयागविधिर्भविष्यतीति तृतीयं प्रकारमाशङ्क्याह * वैश्वानरपदमिति * पदोत्तरत्वेन श्लोकं व्याचष्टे * स्यादेतदिति * ननु स्तुतिरपि विधेयवैश्वानरयागविषयत्वान्न वैश्वानरपदानुषङ्गं विना युक्तेत्याशङ्क्याह * तदा चेति *

अनुवादस्य प्रमाणान्तराधीनत्वान्न शब्दव्यापारापेक्षेत्याशयः। अतस्त्रे-धापि पुरोडाशविधानं न सम्भवतीत्युपसंहरति * तस्मादिति * एवं प्रकृताप्रकृतापूर्वयागसम्बन्धितया त्रेधाप्यष्टाकपालादिपुरोडाशविधाने निरस्ते यदि कश्चित् प्रकृते द्वादशकपाले ऽष्टाकपाले ऽष्टाकपालादिविधिमाशङ्कते तं प्रत्याह * न चेति * अयमाशयः। यथैवाष्टाकपालस्य यागाङ्गत्ववादिना वैश्वानरो ऽष्टाकपाल इति विपरिणतवैश्वानरपदानुषङ्गो ऽङ्गीक्रियते तथैव द्वादशकपालो ऽष्टाकपाल इति विपरिणतद्वादशकपालपदानुषङ्गोऽङ्गीकार्यः। स च तद्वदेवाप्रमाणकः। तदभ्युपगमे ऽपि सामानाधिकरण्यनिर्देशेन पुरोडाशभेदानवगमात् द्वादशकपालाङ्गत्वेनाऽष्टाकपालादिशब्दैर्वैकल्पिकसंख्यान्तरविधानापत्तेस्तस्य च यागाङ्गत्ववन्निषिद्धत्वान्नाशङ्का युक्तेति ननूत्पत्तिशिष्टद्वादशत्वावरोधान्नाष्टत्वादेः प्रकृते यागे पुरोडाशे वा विधिः सम्भवतीति त्वयोक्तं तच्च सर्वस्यैकवाक्यत्वात्पूर्वपक्षिणा परिहृतमित्याशङ्क्याह * न चेति * वै- ३।४।१ श्वानरपदस्य द्वितीयान्तेन द्वादशकपालपदेन प्रथमान्तैश्चाष्टाकपालादिपदैर्वैरूप्यापत्तेस्तन्त्रान्वयायोगात् श्रुतद्वितीयान्तद्वादशकपालपदान्वयत्यागेनाष्टाकपालादिपदैरन्वयापत्तेर्द्वितीयान्तत्वेन परिणतैस्तन्त्रान्वयाभ्युपगमस्यात्यन्तायुक्तत्वात् वैश्वानरवाक्ये द्रव्यदेवताविशिष्टो यागो विधेयत्वेन प्रयोजनमितरेषु संख्येति प्रयोजनरूपार्थभेदाद्विभागे च नैराकाङ्क्ष्याद् गुणविधिपक्षे बलाद्वाक्यभेदः प्रसज्येतेत्याशयः। एकवाक्यत्वे चाऽष्टाकपालं नवकपालं दशकपालमेकादशकपालं द्वादशकपालं वैश्वानरं कुर्यादिति समुदाये वाक्यसमाप्त्या सर्वसंख्याविशिष्टैकभावनाविधिप्रतीतेर्वस्तुतः संख्यानां समावेशायोगे ऽपि निरपेक्षसाधनत्वानवसायान्न विकल्पः स्यादित्याह * यदि चेति * आख्यातगुणभावेनाष्टाकपालं वैश्वानरं कुर्यान्नवकपालं कुर्यादित्यादिप्रत्येकं वाक्यसमाप्त्ययोगान्न निरपेक्षसाधनत्वं वक्तुं शक्यमित्याह * अष्टत्वादीनां चेति * ननु समुच्चयेन तर्हि पूर्वपक्षो ऽस्त्वित्याशङ्क्याह * न चेति * तथा सति पञ्चाशत्संख्यापत्तेरष्टत्वादीनां मध्ये न का चित्स्यादित्यर्थः। नन्वष्टत्वादीनां द्वादशत्वान्तर्भूतानामेव समुच्चयोपपत्तेर्न संख्यान्तरोपजननापत्तिरित्याशङ्क्याह * संख्यान्तरेति * अतो वैश्वदेवन्यायेनेहाप्युत्पत्तिशिष्टेनोत्पन्नशिष्टबाधान्न गुणवविधिः सम्भवतीत्युपसंहरति * तेनेति * अपि चेति भाष्येणाष्टत्वादीनां प्रकरणगम्ययागाङ्गत्वबाधेन पुरोडाशैकवाक्यत्वावगमात् न यागाङ्ग-

त्यम् * सम्भवतीत्युक्तम् * तत्पूर्वेण पुनरुक्तमाशङ्क्य विविक्तावि-षयत्वं भाष्यद्वयस्याह * एवमिति * पूर्वेणोत्पत्तिशिष्टद्वादशत्वा-वरोधाद्यागस्याष्टत्वाद्यनाकाङ्क्षोक्ता अनेनाभ्युपगम्य यागाकाङ्क्षां वा-क्येन पुरोडाशाङ्गत्वावसायान्न यागाङ्गतेत्युच्यते इति विवेकः। ननु पुरोडाशस्वरूपचिन्तायामानर्थक्यापत्तेरपूर्वसाधनांशलक्षणार्थं वाक्येन प्रकरणापेक्षणात् न विरोधो ऽस्तीत्याशङ्क्य * ऽष्टत्वादय इत्युक्तम् * द्वादशत्वावरुद्धपुरोडाशद्वाराष्टत्वादेर्यागाङ्गत्वायोगा-त् तन्नैरपेक्ष्येण यागाङ्गत्वं वाच्यम्। न च पुरोडाशमतिक्रम्याष्टत्वाद्यो यागान्वयं सहन्तइत्याशयः। सहेः कर्त्तरि क्तप्रत्यये परभूते होढ इति हकारस्य ढकारादेशे कृते झषस्तथोर्धो ध इति तकारस्य धत्वे ष्टुत्वे कृते ढोढे लोप इति पूर्वढकारे लुप्ते कृते सहिवहोरोदवर्णस्ये-त्यकारस्यौकारादेशात्सोढा इति रूपसिद्धिः। यागप्रकरणशब्दौ वै-श्वानरयागविषयतयैकवाक्यत्वे च यागानङ्गत्वं हेतुतया व्याचष्टे * ते ऽपीति * कस्मिन्नर्थे पुरोडाशैकवाक्यत्वं हेतुरित्यपेक्षायां नै-वेत्युक्तं कस्य प्रकरणमित्यपेक्षायां तच्छब्देन वैश्वानरयागः परा-मृष्टः भाष्यस्थं यागशब्दं वैश्वानरविषयं द्योतयितुं तस्ये-त्युक्तम्। वैश्वानरयागप्रकरणं बाधित्वा पुरोडाशैकवाक्य-त्वान्नाष्टत्वादयः पुरोडाशान्वयानपेक्षाः वैश्वानरयागस्य भविष्य-न्ति येनोत्पत्तिशिष्टेन द्वादशत्वेन भिन्नविषयतया विरोधाभा-वान्न बाधेरन्निति भाष्यार्थः। यागशब्देन च भाष्यकृता परार्थत्वा-द् गुणानामिति पूर्वाधिकरणसूत्रगतेन परशब्देन निर्दिष्टो यागो ऽत-द्गुणा इति तच्छब्देन परामृष्ट इति द्योतितम्, यागानङ्गत्वे को दोष इत्याशङ्क्य प्रयोगे स्युरनर्थका इति सूत्रकृतोक्तं तद्व्याख्यानार्थं या-गासम्बन्धे चेति भाष्यं व्याचष्टे * तथा चेति * पुरोडाशस्य या-गाङ्गत्वात् तद्द्वारा ऽष्टत्वादेः पुरोडाशान्वये ऽपि फलवत्त्वोपपत्तेः फलाभावादित्ययुक्तमाशङ्क्य केवलेत्युक्तम्। यागाङ्गभूतस्य पुरोडाशस्य द्वादशत्वावरोधेनाष्टत्वाद्यन्वयायोगात् पुरोडाशस्वरूपान्वयो ऽष्ट-त्वादेर्वाच्यस्तत्र चानर्थक्यं स्यादित्याशयः। न हि तं प्रत्यर्थवत्तास्तीत्ये-तत्सूत्रावयवव्याख्यानार्थमपि पुरोडाशेति भाष्यमतद्गुणा इति त-च्छब्दपरामृष्टयागान्यवाचिता नञा निर्दिष्टस्य पुरोडाशस्य तं प्रतीति तच्छब्देन परामर्शो ऽनेन भाष्येणोक्त इति सूचयितुं पूर्वेणैकीकृत्य व्याख्यातम्। न हीति सूत्रावयवः पुरोडाशेति भाष्येण कथं व्या-ख्यात इत्यपेक्षायामाह * न हीति * स्वयमन्यथा व्याचष्टे * अथ वेति * तच्छेषो नोपपद्यतइति चेदिति सूत्रापातानिकार्थमर्थ-

वादत्वेन त्विति भाष्यं तत्तु स्तुत्यर्थत्वेनोपपन्नत्वाच्चानर्थकमित्यनेनार्थतो व्याख्यातत्वान्न व्याख्यातम् एतत्सूत्रार्थस्य चेतरथार्थवादाः सन्तो ऽनर्थकाः स्युरिति भाष्येण तत्सामर्थ्यमिति विशेषणाक्षिप्तस्योक्तत्वादिति यदुक्तमितिभाष्येणाभाषान्तमेतत्सूत्रमित्युक्त्वा विभागाद्विधानार्थे स्तुत्यर्थेनोपपद्येरन्निति सूत्रं परिहारार्थत्वेन भाष्यकृता पृथक् पठितमपि यदा त्विति भाष्यावयवेनाभाषासूत्रार्थस्य परिहारसूत्रार्थेन सहैकीकृत्य व्याख्यानात् स्वयमपि तथा व्याख्यातुमेकीकृत्य पठति * तच्छेष इति इति चेदिति * पदद्वयं भाष्यकारेणापठितमपि वृत्त्यन्तरे दृष्टत्वाद्वार्त्तिककृता पठितं यदा त्विति भाष्यावयवेन पूर्वसूत्रगतगुणशब्दनिर्दिष्टाष्टत्वादिपरामर्शितं तच्छब्दमङ्गीकृत्याष्टत्वादिशेषो यदष्टाकपालो भवतीत्याद्यर्थवादो नोपपद्यत इति एवमाभाषासूत्रं व्याख्यातं तदष्टत्वादेर्भवतिपरेणाख्यातेन विहितस्य स्तुत्युपपत्तेरयुक्तमाशङ्क्योपपादयति *अष्टत्वादीति* ३१५।१
उत्पत्तिशिष्टद्वादशत्वावरुद्धे यागे ऽष्टत्वादेर्विधानानर्हत्वात् इयमष्टत्वादेः प्ररोचना सती व्यर्था स्यादित्यर्थः।तदेति भाष्यावयवेन विधानार्थे स्तुत्यर्थे नोपपद्येरन्निति परिहारसूत्रावयवं विधानविषयभूतद्वादशत्वस्तुत्यर्थेन यदष्टाकपालो भवतीत्यादयः शब्दा उपपद्यन्त इति एवं च व्याख्यातुं लक्षणयाष्टाकपालादिशब्दैर्द्वादशकपालस्तुतिरित्युक्तं तत्र लक्षणायां को हेतुः कथं चाष्टत्वादिना द्वादशत्वं लक्ष्यतइत्यपेक्षायामाह * तस्मादिति * अष्टत्वादिप्ररोचनावैयर्थ्यस्य हेतुत्वं तस्माच्छब्देनोक्तम्। अवयवावयविसम्बन्धस्य च लक्षणाबीजत्वमवयवद्वारमित्यनेनोक्तम्। एतदेव व्याचष्टे* यदिति * नन्वष्टाकपालादिशब्दानां द्वादशत्वान्तर्गताष्टत्वादिपरत्वं कथमवसेयमित्याशङ्कानिरासार्थत्वेनाविभागादिति सूत्रावयवव्याख्यानार्थं सन्ति हीति भाष्यं तात्पर्यतो व्याचष्टे * तदिति * सामीप्यवाच्यविभागशब्द इत्याशयः। ननु गायत्र्यादिशब्दैः संख्यासाम्येनाष्टत्वादिषु स्तुतिप्रतीतेः कथं द्वादशकपालस्तुतिरित्युक्तमित्याशङ्क्याष्टत्वाद्येवात्र द्वादशत्वस्तुत्यर्थं स्तूयतइति अत इति भाष्येणोक्त्वा कथमवयवस्तुत्यावयवी स्तुतो भवतीत्याशङ्कानिरासार्थं यथेति भाष्ये दृष्टान्ताभिधानं कृतं तत्तात्पर्यतो व्याचष्टे * एकदेशेति * ननु चक्रावयवत्वान्नेम्यादेस्तत्स्तुत्यावयविनः स्तुतिर्युक्ता संख्यानां त्ववयवावयविभावाभावान्नाष्टत्वादिस्तुत्या द्वादशत्वं स्तुतं भवतीत्याशङ्क्यावयवावयविभावाभावे ऽप्येकदेशैकदेशिभावेन

१ उपपन्नतरत्वादिति २ पु० पा०।

समुदायिहस्त्यादिस्तुत्या समुदायसेनास्तुतिदर्शनात् संख्यानामपि चैकदेशैकदेशिभावप्रसिद्धेरष्टत्वाद्येकदेशस्तुत्यैकदेशिनीद्वादशत्वसङ्ख्या स्तुता भवतीति प्रतिपादनार्थत्वं द्वितीयदृष्टान्ताभिधानस्य सूचयितुमेकदेशैकदेशिशब्दौ तस्मादित्युपसंहारभाष्यं कीदृशी स्तुतिरित्यज्ञानाद्व्याचष्टे * तेनेति * यच्च प्रत्यक्षाभावे त्वपरोक्षः स्यादिति पूर्वपक्षभाष्येण द्वादशत्वस्य प्रत्यक्षरूपात्मीयस्तुतिसद्भावात् परोक्षाष्टत्वादिद्वारा स्तुत्यङ्गीकरणमयुक्तं तत्परिहारार्थत्वेनाप्येतदेव भाष्यं पूर्वोक्तानुभाषणपूर्वकं व्याचष्टे * यत्विति * प्रत्यक्षपरोक्षस्तुतीनां प्रत्येकं ग्रहणे सति प्रत्यक्षयैव नैराकाङ्क्ष्यात् परोक्षाश्रयणमयुक्तं स्यात् तासां तु यस्मिन् जातएतामिष्टिं निर्वपति स पूत एव तेजस्वी अन्नाद इन्द्रियावी पशुमान् भवतीति प्राशस्त्यप्रतिपादनोपपादकतया सर्वासां युगपत् ग्रहणान्नैकया नैराकाङ्क्ष्यमिति वक्तुम् * ऐकरूप्येणेत्युक्तम् * अल्पयैव स्तुत्या प्ररोचनोपपत्तौ महती स्तुतिरनर्थिकेत्याशङ्कानिरासायापरिमाणत्वादित्युक्तम् । अनियतपरिमाणत्वमेवोपपादयति * सर्वत्रेति *

## कारणं स्यादिति चेत् ॥ २० ॥

स्वयं तावत्सूत्रं व्याचष्टे * जनकत्वेनेति * भाष्यकारीयं व्याख्यानमुपपादयति * तेषामिति * फलस्य साधनविषयप्रवृत्तिहेतुत्वात् साधनं प्रति कारयितृतास्तीत्याशयः । किमेवमिति भाष्येण किमर्थं कारणत्वाभिधानमिति पृष्ट्वा पुरोडाशस्येत्यादिनोक्तदोषपरिहाराय गुणफलसम्बन्धिरूपपूर्वपक्षान्तरप्रदर्शनार्थमेतत्सूत्रमित्युक्तम्।तत्प्रपञ्चयितुमाह* यदुक्तमिति*काम्यस्याप्युपन्नशिष्टस्योत्पत्तिशिष्टबाधकत्वं कथमित्याशङ्क्य नैमित्तिके तु प्रकृतौ तद्विकारः सम्प्रयोगविशेषादिति तृतीयाधिकरणवक्ष्यमाणन्यायमाह
३१६।१ * तथा हीति * अविशेषेण यच्छास्त्रमन्याय्यत्वाद्विकल्पस्य तत्र सन्दिग्धमाराद्विशेषशिष्टं स्यादिति दशमाधिकरणन्यायेन नापि काम्यं नित्यस्य बाधकमित्याह * विशेषतश्चेति * जातेष्टिप्रयोगमात्रविषयत्वात् सामान्यरूपे द्वादशत्वे प्राप्ते ब्रह्मवर्चसकामादिप्रयोगविशेषविषयत्वेनाष्टत्वादेः प्रवर्त्तनादित्यर्थः । पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवदिति षष्ठाधिकरणन्यायेनाप्येवमित्याह * पूर्वेति * उत्पत्तिशिष्टत्वात् पूर्वं प्राप्ते द्वादशत्वे ऽष्टत्वादेरुत्पन्नकर्माश्रयत्वेन पश्चात्प्रवर्त्तनादित्यर्थः । तार्त्तीयं न्यायं विवृणोति * पुरुषार्थेति*

काम्यस्य नित्यबाधकत्वे ऽयमेव मुख्यो न्यायः सम्भवमात्रेण तु न्यायान्तरोपन्यासस्तत्रेति सूचयितुमस्यैव विवरणगुणफलसम्बन्धविधानोपपादनफलमानर्थक्यपरिहारमुपसंहरति * तस्मादिति * ननु भवतीति वर्त्तमानापदेशसन्दिग्धस्य पञ्चमलकारतया विधित्वनिर्णयः स्तुत्यन्वयान्यथानुपपत्त्यधीना गायत्र्यैवैनमित्यादेस्तुत्यभावेनास्य विधित्वनिर्णयाशक्तेर्गुणफलसम्बन्धविधिर्न युज्येतेत्याशङ्क्यते * ननु चेति * विध्यभावे ऽपि समभिव्याहारादेव गुणफलसम्बन्धः सेत्स्यतीति केषां चित्परिहारमुपन्यासपूर्वकं दूषयति * तत्रेति * स्वमतेन परिहरति * अतो ऽयमिति * श्लोकं व्याचष्टे * यदिति *

## आनर्थक्यादकारणे कर्त्तुर्हि कारणानि गुणार्थे हि विधीयते ॥ २१ ॥

गुणफलसम्बन्धविधौ स्तुत्यर्थत्वायोगादेकोपक्रमोपसंहाररूपत्वेन एकवाक्यत्वं प्रतीयमानं बाध्येतेत्यानर्थक्यादकारणमिति सूत्रावयवव्याख्यानार्थं यदीति भाष्यं व्याचष्टे * वाक्यानीति * श्लोकं व्याचष्टे * पुत्र इति * तस्येति भाष्यावयवं यद्यष्टत्वादयो न सम्बन्ध्येरंस्ततो वाक्यान्तरत्वं स्यात् स्तुत्यर्थत्वेन सम्बन्धोपपत्तेर्न वाक्यान्तरता युक्तेति व्यवधारणकल्पनया व्याख्यातुमाह * तावतीति चेति * ननूपक्रमोपसंहारपर्यालोचनयैकवाक्यत्वे सति सर्वसंख्यानामुत्पत्तिशिष्टत्वाविशेषेण बलाबलविशेषाभावादाद्यपूर्वपक्षनिरासो न युक्तः स्यादित्याशङ्क्याह * तदिति * तस्मिन्नपि पक्षे न चाष्टत्वादीनां द्वादशकपालेनैकवाक्यता तवोपपद्यतइत्यादिनैकवाक्यस्य निरस्तत्वादिति भावः। अनेन च गुणफलसम्बन्धविधिपक्षे वाक्यभेदापादनेन गुणफलसम्बन्धविधौ गम्यमानैकार्थ्याभावप्रसङ्गादित्येवमानर्थक्यादिति सूत्रावयवो योजितो भवतीत्याह * अर्थान्तरेति * स्तुत्या विनैकवाक्यता कस्मान्नोपपद्यतइत्यपेक्षितस्य ग्रन्थस्य तदुपपादनार्थत्वेमान्वयप्रतीतेरानर्थक्यादित्यस्यार्थैक्याभावप्रसङ्गादित्यर्थावसायादेवं व्याख्यातं यथाश्रुतस्यानन्वयापत्तेः। एवं च गुणफलसम्बन्धविधौ वाक्यभेदापादनस्य सूत्रारूढतोक्ता भवति स्तुत्यर्थत्वानभ्युपगमे ऽर्थान्तरस्यासम्भवादानर्थक्यमेवावशिष्यतइत्यभिधानार्थेनैवानेन सूत्रावयवेनार्थान्तरपरत्वे वाक्यभेदप्रसङ्गाख्यं दूषणान्तरमप्युपलक्षितं भाष्यकृता ३१७।१

विवृतं स्वरूपार्थस्तु यद्यर्थवादा अपीत्यनेन वक्ष्यते अस्मिन्पक्षे ऽर्थान्तरेति ग्रन्थो लिङ्गात् स्वातन्त्र्येणानर्थक्यादिति सूत्रावयवयोजनार्थो यथाश्रुत एव भवति । ननु गुणफलसम्बन्धविधानेनाप्यर्थवत्त्वोपपत्तेः कथमानर्थक्यापत्तिरित्याशङ्कानिरासार्थं कर्तुर्हि कारणानीति सूत्रावयवं व्यवधारणकल्पनया व्याचष्टे * यदि हीति * गोदोहनेन पशुकामस्य प्रणयेदितिवत् पूतत्वकामस्याष्टाकपालो भवतीति श्रवणे सति कामिनः कर्तुः काम्यमानतया सम्बन्धीनि सन्ति पूतत्वादीनि फलत्वात्कर्तुः प्रवृत्तिकारणानि स्युस्तेषां तु यस्मिन् जातएतामिष्टिं निर्वपति पूत एव स इत्यादिसमभिव्याहाराद्वैश्वानरेष्टिमात्रसम्बन्धित्वप्रतीतेः कामिपदनिरपेक्षसमभिव्याहारमात्रप्रमाणकत्वस्य च साध्यत्वस्य पर्णमय्यधिकरणे निराकरिष्यमाणत्वात् फलाभावेन कर्तृप्रवृत्तिकारणत्वं नास्तीति भाष्यानुसारात्सूत्रावयवो ऽनेन योजितः । अष्टत्वादौ कारणशब्देन विवक्षिते यद्यष्टाकपालं कुर्यादिति कर्तुः प्रवृत्तिविषयतयाष्टत्वादीनि सम्बन्धीनि स्युस्तत समीहितसाधनत्वं विना प्रवृत्तिविषयत्वायोगात् उत्पत्तिशिष्टद्वादशावरुद्धवैश्वानरयागोपकारसाधनत्वस्यासम्भवाद्रात्रिसत्रन्यायेनार्थवादावगतानि पूतत्वादीनि प्रवृत्तिंजनकानि स्युः । विध्यश्रवणेन त्वेषां समाहितसाधनत्वाप्रतीतेः समभिव्याहारमात्रकल्पस्य साधनत्वस्यौदुम्बराधिकरणे निरस्तत्वात् न पूतत्वादीनि प्रति कारणतास्तीति योज्यः । ननु पूतत्वादेः फलत्वाभावे किमर्थं कीर्त्तनमित्याशङ्कानिरासार्थं गुणार्थो हीति सूत्रावयवं व्याचष्टे * तस्मादिति * निपातानामनेकार्थत्वात्तस्माच्छब्दार्थे हि शब्दव्याख्यानार्थं तस्मादित्युक्ता तद्व्याख्यानायान्यस्यार्थान्तरस्यासम्भवादित्युक्तम् । स्तुतिविषयत्वेन गुणशब्दं व्याख्यातुं स्तुत्यर्थ इत्युक्तम् । इतिशब्दः पूर्वोक्तस्तुतिप्रकारपरामर्शार्थः । यस्मादन्यो ऽर्थो न सम्भवति तस्मादुक्तप्रकारस्तुतिरूपो ऽर्थः पूत एवेत्यादिभिर्ज्ञाप्यतइत्यर्थः । अनेन च स एष इतिभाष्यगतस्य तच्छब्दस्य स्तुत्यर्थेनोपपद्येरन्निति एतत्सूत्रोक्तस्तुतिरूपार्थपरामर्शकत्वात् सौत्रगुणशब्दव्याख्यानार्थत्वमेतच्छब्दस्य च पूर्वोक्तावयवद्वारत्वरूपस्तुतिप्रकारपरामर्शकत्वं सूचितम् अविधीयते वैश्वानरयाग इति भाष्यावयवेन सौत्रो हिशब्दः प्रसिद्धार्थवाचित्वात् वैश्वानरेष्टेश्च पूर्वविहितत्वेन प्रसिद्धत्वादष्टत्वादेः स्तुतिसम्बन्धे सति विधेयत्वापत्तेस्तन्निरासार्थं पूतत्वादेर्वैश्वानरेष्टिविषयत्वाभिधानार्थतया व्याख्यातस्तदुपपादयितुमाह * पू-

१ प्रतीति २ पु० पा० ।

त इति* यत्तदोरेकविषयत्वाद्यस्मिन् जात एताम् इष्टिं निर्वपेदिति स पूत इति पूतत्वादीनां जातेष्ट्यन्वयप्रतीतिर्नाष्टत्वाद्यन्वयो ऽस्तीत्यर्थः। नन्विष्टेर्नैमित्तिकत्वेन फलानपेक्षतया पूतत्वाद्यन्वयायोगाद् गुणफलसम्बन्धविधानायाष्टत्वाद्यन्वयः कल्पयिष्यते ऽत आह * न चेति*स्तुत्यर्थेनेष्ट्यन्वयोपपत्तेर्नाप्रतीयमानाष्टत्वान्वयकल्पना युक्तेति भावः। पूतत्वादीनां च पूत एव स इति तच्छब्दानिर्दिष्टैकपुत्रविषयत्वेन समुच्चयप्रतीतिर्व्यवस्थितत्वादष्टत्वादिफलत्वं न सम्भवतीत्याह * न चेति * नन्वेवं सत्येकैकस्याष्टत्वादेः फलपञ्चकं भविष्यतीत्याशङ्क्य निरासार्थं ब्रह्मवर्चसादीनामित्युक्तम्। गायत्र्यैवैनं ब्रह्मवर्चसेन पुनातीत्यादिवाक्यवशेनाष्टत्वादीनां व्यवस्थितफलत्वावगमात् समुच्चयो न युक्त इत्याशयः। यो ऽष्टत्वादीनां गुणानां ब्रह्मवर्चसादीनां च स्तवन नाम एभिः पूतत्वादिभिर्विभागेन सम्बन्धो ऽपेक्षितः स न प्रतीयतइत्यर्थः। नन्वेवं तर्हि गायत्र्यैवैनमित्यादिभिरेव विभागेन फलसम्बन्धः करिष्यतइत्याशङ्क्याह * यत्र त्विति * स्तुत्यभावे विध्यभावोपपत्तेरित्याशयः। ननु चतुर्थे फलसंयोगस्त्वचोदितेन स्यादशेषभूतत्वादित्यत्रैतदेव वाक्यमुदाहृत्य किमियं वैश्वानरेष्टिरात्मगामिफलप्रयुक्ता पुत्रगामिफलप्रयुक्ता वेति सन्दिह्याधानगतात्मनेपदपर्यालोचनयात्मगामिफलप्रयुक्तत्वे प्राप्ते यस्मिन् जातएतामिष्टिं निवर्पति पूत एव स इति फलवचनस्य पुत्रशेषत्वावगते पितृशेषत्वाभावात्फलभागित्वेनाचोदिते पितरि फलसंयोगो न स्यादिति पूतत्वादीनां पुत्रगामिफलत्वस्य वक्ष्यमाणत्वात्फलसम्बन्धापन्हवो न युक्त इत्याह *अत इति* रात्रिसत्रन्यायेनार्थवादत्वेनोपयुक्तानां पूतादिफलवचनानां परावर्त्य फलपरत्वकल्पने ऽप्यष्टत्वादीन् प्रति फलं नास्तीत्यर्थः। फलपरत्वे सतीह स्तुतित्वाभिधानं विरुध्येतेत्याशङ्क्याह * प्रथमेति * नन्वेवं पूतादिपदैरेव स्तुतिसिद्धेर्यदष्टाकपाल इत्यादीनां गुणफलसम्बन्धाविधित्वानङ्गीकरणे सत्यानर्थक्यं स्यादित्याशङ्कानिरासार्थं तेन चेत्यादिभाष्यं व्याचष्टे * एतैरेवेति * नन्वेवं सति स्तुत्यर्थवत्त्वोपपत्तेरानर्थक्याभिधानं न युक्तमित्याशङ्क्यार्थवादत्वानभ्युपगमेन गुणफलसम्बन्धविधिपरत्वाभ्युपगमे तदसम्भवादानर्थक्यमापद्येतेत्येवमानर्थक्यपदव्याख्यानार्थं ततः कामायेति भाष्यम्। अर्थान्तरपरतायामित्यनेनैव व्याख्यातत्वात् तस्मादिति चाकारणपदव्याख्यानार्थं पूर्वसूत्रगतकारणपदव्याख्यानार्थभाष्यव्याख्यानेन तेषां कारयितृत्वादेस्त्वनेनैव व्याख्याततत्वान्नेह व्याख्यातम्। तस्मादित्यर्थवादत्वोपसंहा-

रभाष्यमर्थवादविचारस्येहासङ्गतत्वेन गुणविधित्वसम्भवासम्भवमात्रविचारस्याधिकरणार्थत्वात् अयुक्तमित्याशङ्क्य गुणविधित्वासम्भवोपसंहारपरतया व्याचष्टे * तस्मादिति *

॥ अथ यजमानशब्दस्य प्रस्तरादिस्तुत्यर्थताधिकरणम् ॥ १२ ॥

## तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिङ्गसमवाया इति गुणाश्रया ॥ २२ ॥

अत्र भाष्यकृता यजमानः प्रस्तर इत्यादृयुदाहृत्य विध्यर्थवादचिन्ता सा तावत् पूर्ववदेवासङ्गता गुणविधिसम्भवासम्भवचिन्ताप्येवंविधेषु विधिप्रत्ययशून्येषु सम्भवविध्यन्तरैकवाक्यत्वेनौदुम्बराधिकरणएव विधित्वाशङ्काया निरस्तत्वात् । अयुक्ता पूर्वाधिकरणे त्वौदुम्बराधिकरणपूर्वपक्षन्यायेन विधित्वमङ्गीकृत्य वैश्वदेवाधिकरणोक्तस्योत्पत्तिशिष्टेनोत्पन्नशिष्टबाधस्याप्तत्वादेर्विषयो भवति न वेति चिन्तितम् । इह त्वङ्गीकृत्य विधित्वं चिन्तान्तराभावान्न कृत्वाचिन्तान्यायः सम्भवति । न चार्थवादत्वाभिधाने विधित्वनिरासे वैतत्सूत्रं समर्थम् । तत्सिद्ध्यादीनां गुणवादनिमित्तत्वाभिधानमात्रप्रतीतेस्तदभिधानमपि यदि निमित्तासम्भवेन गुणवादासम्भवशङ्कानिरासार्थं ततो रूपात्प्रायादित्यादिना यथासम्भवगुणवादनिमित्तानामुक्तत्वादनर्थकम् । लक्षणासम्भवेन तु गुणवादासम्भवशङ्का गौणमुख्याधिकरणे स्वाभिधेयलक्ष्यमाणगुणयोगनिमित्तलक्षणाया गौण्या वृत्तेः साधयिष्यमाणत्वादयुक्ता । अथ तत्र प्रकृतगौणमुख्यविषयमन्त्रविनियोगविचारसिद्ध्यर्थं गौणवृत्तिसद्भावप्रतिपादनान्न लक्षणविशेषाभिधाने तात्पर्यम् । इह तु प्रसिद्धार्थत्यागेनाप्रसिद्धतद्गुणवृत्तित्वलक्षणे गौणत्वे स्वार्थत्यागेन वेदाप्रामाण्यापत्तेः । समुदायवाचिनो वैकदेशवृत्तित्वलक्षणे समुदायानित्यत्वेन शब्दार्थसम्बन्धस्यानित्यत्वापत्त्या वेदाप्रामाण्यापत्तेरारोपितार्थवृत्तित्वलक्षणस्य च गौणत्वस्यारोपकपुरुषाभावाद्वेदे ऽनुपपत्तेरेतल्लक्षणत्रयनिरासेन गुणयोगनिमित्तवृत्तित्वलक्षणप्रतिपादनार्थं तत्सिद्ध्यादीनां निमित्तत्वाभिधानमित्युच्यते ततो गुणवादसूत्रानन्तरमेवैतत्सूत्रं कार्यं गौणवृत्तित्वलक्षणाभिधानार्थं चास्मिन्सूत्रे सति कथं भाष्यकारीया विध्यर्थवादचिन्ता सम्बध्येतेत्याशङ्कासप्तकं निराकर्तुमाह * अर्थवादेति * विध्यर्थवादचिन्तायाः प्रकरणासङ्गतत्वम् विधित्वशङ्कानिरासस्य चौदुम्बराधिकरणेन गतत्वम् । सूत्रस्य च

तदभिधानात्सामर्थ्यं तादर्थ्यानभ्युपगमेनैव परिहृतम्। गुणवादासम्भवाशङ्कानिरासार्थत्वेनाभ्युपगमो ऽपि लक्षणशब्देनोक्तः। नात्र गुणवादस्तस्य वा निमित्तमभिधीयते येन गौणमुख्याधिकरणेन रूपात् प्रायादित्यादिना वा गतार्थत्वं स्यात् किं तु गुणवादस्य तत्सिद्ध्यादिनिमित्ताभिधानद्वारेण लक्षणमभिधीयते। गुणशब्देन गौणवृत्त्यभिधानादाश्रयशब्देन च निमित्ताभिधानात्तत्सिद्ध्यादयो गौण्या वृत्तेर्निमित्तमित्युक्ते यस्यां वृत्तौ ते निमित्तं सा गौणी वृत्तिरित्यर्थात् प्रतीते च निमित्ते गुणयोगनिमित्तायां च वृत्तौ तेषां निमित्तत्वाद् गुणयोगनिमित्तवृत्तित्वमेव गौण्या वृत्तेर्लक्षणमित्यवसीयतइत्याशयः। गुणवादसूत्रानन्तराभिधेयत्वशङ्कानिवृत्त्यर्थं तत्र नोक्तमित्युक्तम्। अर्थवादवत् श्येनचितं चिन्वीत नेन्द्रसश्वसि दाशुषे मासमग्निहोत्रं जुह्वतीत्यादिषु विधिमन्त्रनामधेयेष्वपि श्येनेन्द्राग्निहोत्रादिशब्दानां गौणत्वदर्शनात् सर्वधारण्यसूचनाय सर्वोपयोगव्युत्पादनानन्तरमेव गौणवृत्तिलक्षणाभिधानं युक्तमित्याशयः। सूत्रस्य गौणवृत्तिलक्षणार्थत्वे विध्यर्थवादविचारासम्बद्धत्वशङ्कानिवृत्त्यर्थं म्*अर्थवादेत्युक्तम् * सूत्रकृतो प्रसक्ताभिधायित्वपरिहाराय लक्षणाभिधानस्य प्रसङ्गसिद्ध्यर्थं विध्यर्थवादचिन्तयोपक्रान्तम् यथाकृतिसद्भावे ऽपि प्रतिपिपादयिषितेयं गौरित्यस्य शब्दस्य को ऽर्थ इति वाच्यत्वमुखेनोपक्रान्तमित्यर्थः। कथमर्थवादत्वोक्त्या गौणवृत्तिलक्षणाभिधानस्य प्रसङ्गो भवतीत्यपेक्षायां तदुपकारीत्युक्तम्। पूर्वाधिकरणस्य गुणविधिसम्भवासम्भवचिन्तार्थत्वेनार्थवादत्वाभिधाने तात्पर्याभावात् पूर्वाधिकरणोक्तार्थवादप्रसङ्गेनानन्तरसङ्गतिरनाशङ्कनीया। ननु निमित्ताभिधानद्वारेण चेदनेन सूत्रेण लक्षणमुच्यते ततो रूपात्प्रायादित्यादिभिरपि सूत्रैर्निमित्ताभिधानद्वारेण लक्षणज्ञानसिद्धेरनर्थकामिदं सूत्रं स्यादित्याशङ्कते * ननु चेति * रूपप्रायेति वक्तव्ये विभक्तिनिर्देशः प्रदेशविशेषज्ञापनार्थः इति गुणाश्रया इति प्रकारवाचिनेतिकरणेन तत्सिद्ध्यादिप्रकाराणि गुणवादनिमित्तानीत्यभिधानात् प्रकारस्य च व्यवच्छेदकत्वेन लक्षणत्वाद्यथा तत्सिद्ध्यादेर्गौणवृत्तिनिमित्तलक्षणत्वेनाभिधानं नैवं रूपादेः किन्तु स्तेनं मन इत्याद्युदाहृतार्थवादगतगुणवादाख्यलक्ष्यविषयस्य किन्निमित्तो ऽयं गुणवाद इत्येवंविधस्य व्यवहारस्य सिद्ध्यर्थमिह सिद्धं सारूप्यशब्देन रूपस्य निमित्तत्वं भूमशब्देन च प्रायभूयस्त्वयोर्निमित्तत्वं प्रशंसाशब्देन च दूरस्थचपराधनिमित्तदुर्ज्ञानत्वादेः सुकरस्य प्रशस्तत्वात् दुष्करस्य तदभावात्मकत्वान्निमित्तत्वं तत्र नीतमिति परिहरति * स

त्यमिति * उदाहृतशब्देन रूपादेः सर्वगुणवादाव्यापकत्वादपि लक्षणत्वं नास्तीति सूचितम् । ननु यदष्टाकपाल इत्यादौ तत्सिद्ध्यादेरभावेनाव्यापकत्वादलक्षणं स्यादिति शङ्कां सर्वशब्देन निरस्यन्नितिकरणेन प्रकारवाचिना तत्सिद्ध्यादीनां निमित्तं लक्षणेनोक्तमिति व्यतिरेकमाह * अत्र त्विति * अष्टत्वादेरपि द्वादशत्वपरिच्छेद्यानां कपालानां मध्ये कति चिन्निष्कृष्याष्टावेतानीत्यादिसंख्येयपरिच्छेदकत्वेन द्वादशत्वकार्यकरत्वोपपत्तेरष्टाकपालादिशब्देन तत्सिद्धिसद्भावादन्यत्रापि च यथासम्भवं तत्सिद्ध्यादिषट्कमध्ये कस्य चिन्निमित्तस्योहितुं शक्यत्वान्नाव्यापकतेत्याशयः । ननु सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गाशाटकान्नपुरुषेष्वतद्भावे ऽपि तद्वदुपचार इति सूत्रेण यष्टीः प्रवेशयेति सहचरणात् ब्राह्मणेषु यष्टिशब्दस्य मञ्चाः क्रोशन्तीति स्थानात्पुरुषेषु मञ्चशब्दस्य कटं च्छिनत्तीति तादर्थ्यद्वारेण कटशब्दस्य यमो ऽयं राजेति वृत्तात् राज्ञि यमशब्दस्य आढकमश्नातीति मानात् सक्तुष्वाढकशब्दस्य तुलयानुलिम्पतीति धारणाच्चन्दने तुलाशब्दस्य गङ्गायां घोष इति सामीप्यात्तीरे गङ्गाशब्दस्य नीलः शाटक इति योगाच्छाटके नीलशब्दसामानाधिकरण्यस्य अन्नं बलमिति साधनाद् बले ऽन्नशब्दसामानाधिकरण्यस्य अयं पुरुषः कुलमित्याधिपत्यात्कुले पुरुषशब्दसामानाधिकरण्यस्य प्रयोग इति वदद्भिर्नैयायिकादिभिरन्येषामपि गौणवृत्तिनिमित्तानामुक्तत्वान्न षट्कस्यापि सर्वगौणवृत्तिव्यापकतेत्याशङ्कते * ननु चेति * न चैतत् तार्किकस्थितिमात्रं लोके ऽपि दर्शनादित्याह*लोके चेति * लक्षणार्थे च निमित्ताभिधाने व्यापकत्वाय सर्वाण्युपसंहार्याणीत्याह * तानीति * परमतेन परिहरति * लिङ्गेति * एवं तु सृष्टिशब्दे ऽपि सृष्टिसञ्ज्ञेष्टकासमवायेनेतरेष्टकाप्रतीत्युपपत्तेर्भूम्नो ऽप्यवाचकत्वापत्तेर्भूयो ऽल्पत्वप्रतीतिवैलक्षण्याद्वा भेदेनोपन्यासे ऽत्रापि साहचर्यादिप्रतीतिवैलक्षण्यात् पृथगुपन्यासापत्तेरपरितोषात् परिहारान्तरमाह * अथ वेति * जहत्स्वार्थाभिधायित्वलक्षणे समुदायवाचिनो वैकदेशवृत्तित्वलक्षणे ऽध्यारोपितार्थवृत्तित्वलक्षणे वा गौणत्वे वेदे तदसम्भवेनाप्रामाण्यापत्तेस्तन्निरासेन लक्ष्यमाणगुणयोगवृत्तित्वलक्षणज्ञापनायैतन्निमित्ताऽभिधानम् । लक्षणावृत्तौ तु वेदाप्रामाण्यापादकस्य लक्षणस्य कैश्चिदनुक्तत्वेन वेदप्रामाण्याविरोधिलक्षणज्ञापनार्थेन निमित्ताभिधानेनोपयोगाभावात्साहचर्यादीनां च लक्षणावृत्तिनिमित्तत्वान्नेहाभिधानमिति भावः । न-

नूभयत्र परशब्दस्य परत्र वृत्तेस्तुल्यत्वान्नानयोः शब्दवृत्त्योर्भेदो ऽस्तीत्याशयेन पृच्छति * किं चेति * लक्षणभेदाशयेनोत्तरमाह * बाढमिति * प्रश्नपूर्वकं लक्षणभेदमाह * कुत इति * अभिधेयसम्बन्धित्वरूपापरित्यागप्रदर्शनार्थो ऽभिधेयाविनाभूतशब्दः गौण्यां तु वृत्तावभिधेयसिंहादिसम्बन्धित्वरूपानादरेण तल्लक्षितप्रसह्यकारित्वादिगुणयोगमात्रादरसूचनायाभिधेयस्य गुणलक्षणायां व्यापारे ऽप्यनुपादानम् । ननु लक्षणायामविनाभावापेक्षणे यष्ट्यादेः पुरुषाविनाभावाभावात् न यष्ट्यादिशब्दे लक्षणा स्यात् इत्याशङ्क्याह * तत्रेति * अयमाशयः नात्र लक्षणाहेतुत्वेनाविनाभावोपादानं तस्याः सम्बन्धमात्रेण शब्दतात्पर्यवशादुपपत्तेः। न चात्र लक्षकस्याभिधेयस्य लक्ष्येणाविनाभावो ऽग्निनेव धूमस्योक्तः विपरीताभिधानात् । किं त्वभिधेयसम्बन्धित्वरूपादरप्रदर्शनार्थं यष्ट्यादिशब्दानामपि चाभिधेययष्ट्यादिसम्बन्धित्वानादरेण पुरुषस्वरूपे प्रवृत्त्यभावेनाभिधेयाविनाभूतप्रवृत्तित्वाविघातात् सम्बन्धमात्रस्य च लक्षणाहेतोर्भावाद् युक्तैव लक्षणया प्रवृत्तिरिति । ननु सम्बन्धमात्रेण लक्षणोपपत्तावग्न्यादिशब्दानामपि अभिधेयाग्न्यादिसम्बद्धपैङ्गल्यादिसम्बन्धेन लक्षितलक्षणाया माणवकादौ प्रवृत्त्युपपत्तेर्गौणत्वाख्यवृत्त्यङ्गीकरणं न युक्तमित्याशङ्क्याह * अग्निरिति* लक्षणाहेतुसम्बन्धसद्भावे ऽप्यविनाभावशब्दोक्ताभिधेयसम्बन्धिस्वरूपादराभावान्न लक्षणात्वप्रसिद्धिरभियुक्तानामित्याशयः । अभिधेयसम्बन्धित्वरूपानादरमेव प्रश्नपूर्वकमुपपादयन्नाह *किं तर्हीति* लक्षणोपायमात्रत्वेनाभिधेयस्यावस्थानं सूचयितुम् * वन्हित्वलक्षितादित्युक्तम् * सादृश्यसामान्यापेक्षत्वादग्निसम्बन्धानपेक्षपैङ्गल्यादिस्वरूपमात्रयोगान्माणवके ऽग्निशब्दप्रवृत्तिरिति सादृश्यशब्देनोक्तम् । नन्वत्र लक्षणानिमित्तानभिधाने भूमलिङ्गसमवाययोरभिधेयसम्बन्धादरेण लक्षणानिमित्तत्वात् उपन्यासो न युक्त इत्याशङ्क्याह * सर्वत्र चेति * वस्तुतस्तयोर्लक्षणानिमित्तत्वे ऽप्यभिधेयसृष्ट्यादिसमुदायिलक्ष्यमाणसमुदायाख्यगुणयोगात् समुदायान्तरे सृष्ट्यादिशब्दवृत्तेर्गौणत्वसम्भवात् जहत्स्वार्थवृत्त्यादिलक्षणशङ्कायां वेदाप्रामाण्यापत्तेस्तन्निरासायाभ्युपगम्य गौणत्वं तन्निमित्तत्वेनेहोपन्यास इत्याशयः। प्रस्तरप्रभृतौ तत्सिद्धिकरादौ यजमानादिशब्दानां क्व चिल्लक्षणावृत्तिसद्भावे ऽपीयं तावद् गौणी वृत्तिरस्त्येवेति योज्यम् । सूत्रकृतो ऽप्रसक्तगौणत्ववृत्तिलक्षणाभिधा-

१ वृत्तिभेदाङ्गीकरणमिति २ पु० पा० ।

यित्वपरिहारार्थं प्रकृतसिद्ध्यर्थवादचिन्तयोपक्रमितुं भाष्यकृता द्वेधोपन्यस्ते ऽपि सन्देहे पूर्ववत् प्रौढ्या नामधेयचिन्तया सह साक्षात् सङ्गतिप्रदर्शनार्थं त्रेधा सन्देहमाह * अत्रापि चेति * पूर्वस्मिन्नधिकरणे त्रयः पक्षा स्त एवात्रापीति योज्यम् । किं तावदित्यादिपूर्वपक्षभाष्यमर्थवादानर्थक्यस्यार्थवादाधिकरणे निरस्तत्वादयुक्तमाशङ्क्योपपादयति * तत्रेति * ननु शब्दसमभिव्याहारमात्रेण स्तुत्यप्रतीतावपि सर्वाभ्यर्हितयजमानत्वोपचारेण प्रस्तरस्तुतिः प्रत्येष्यते इत्याशङ्क्याह * न चेति * ननु गौण्या वृत्त्या परशब्दस्य परत्र वृत्तिर्गुणवादसूत्रे वर्णितेत्याशङ्क्याह * न चेति * एतत्सूत्रसिद्धां वेदे गौणीं वृत्तिमङ्गीकृत्य तत्र गुणवादेन परशब्दस्य परत्र वृत्तिर्वर्ण्यते इह तु सैव वेदप्रामाण्याविरोधिनिमित्ताभावाद्वेदे न सम्भवतीति पूर्वपक्षी मन्यतइति भावः । ननु तत्सिद्धिकरत्वादि तस्या निमित्तं तच्च वेदे ऽपि सम्भवतीत्याशङ्क्याभ्युपगम्य तस्य निमित्तत्वं प्रस्तरे यजमानशब्दप्रवृत्तौ यजमानकार्यकरत्वस्य निमित्तस्य प्रमाणान्तरेणासिद्धे स्तत्कार्ये प्रस्तरविध्यपेक्षत्वात् गुणविधिरेव बलादापद्येतेत्याह * न चेति * तस्माद्विधिरिति पूर्वपक्षोपसंहारभाष्यं व्याचष्टे * तस्मादिति * न च प्रस्तरो याजमानं शक्नोति कर्त्तुमित्युत्तरभाष्यदर्शनात् अन्यतर इत्युपक्रममात्रं कुण्डपायिनामयने यो होता सो ऽध्वर्युः स पोता य उद्गाता स नेष्टा सो ऽच्छावाको यो मैत्रावरुणः स ब्रह्मा स प्रतिहर्त्ता यः प्रस्तोता स ब्राह्मणाच्छंसी स ग्रावस्तुद्यः प्रतिप्रस्थाता सो ऽग्नीत्स उन्नेता गृहपतिर्गृहपतिः सुब्रह्मण्यः सुब्रह्मण्य इत्यृत्विक्समासे समाम्नाते होत्रादिशब्दानां मुख्यार्थत्वमङ्गीकृत्य तत्सामानाधिकरण्यायाध्वर्य्वादिशब्दानां लक्षणार्थत्वं तृतीये विप्रतिषेधे करणः समवायविशेषादिति समवायविशेषव्याचक्षणेन भाष्यकृतोक्तमिह दृष्टान्तितम् । अव्यवस्थितशास्त्रार्थायोगात्कतरो ऽत्र कार्यलक्षणो ऽर्थः पूर्वपक्षिणो ऽभिमत इत्यपेक्षायां मुख्यं वा पूर्वचोदनाल्लोकवदिति द्वादशाधिकरणन्यायेन यजमानशब्दस्य मुख्यार्थत्वमङ्गीकृत्य प्रस्तरशब्दस्य कार्यलक्षणार्थत्वमाह * तत्रापीति * आग्नावैष्णवमेकादशकपालं निर्वपेत्सरस्वतीमाज्यस्य यजेतेत्युदाहृत्य किं विकल्पेनान्यतरस्य तन्त्रं प्रसङ्गेनान्यतरस्योपकारकत्वात् कर्त्तव्यम उतआग्नावैष्णवं चरुं तन्त्रमेवेति सन्दिह्य विशेषादनियमे प्राप्ते भूयसां स्यात् स्वधर्मत्वामिति पूर्वसूत्र-

१ प्रतंप्रतव्यंत २ पु० पा० ।
२ चर्धर्मात्व २ पु० ना० ।

गतं स्वधर्मत्वपदं परित्यक्तभावप्रत्ययमनुषज्य मुख्यमाग्नावैष्णवकर्म पूर्वचोदितत्वेनानुपसञ्जातविरोधित्वात् स्वधर्मकं यथा लोके पूर्वगतानां पूर्वासनेपूपवेशनं जघन्यागतानामितरेष्विति वक्ष्यते। नैतदेवमित्यादिसिद्धान्तभाष्यं यजमानशब्दस्य मुख्यत्वेन कार्यलक्षणार्थत्वायोगात् तत्कार्ये प्रस्तरविधानस्यानाशङ्कितत्वेनायुक्तमाशङ्क्योपपादयति * न तावदिति * प्रस्तरकार्ये यजमानविधौ निरस्ते यदि कश्चिद्यजमानकार्ये प्रस्तरविधिः शङ्केत तन्निरासाय स्वकार्यविरोधाद्यजमानस्यन प्रस्तरकार्ययोगोऽचेतनस्य च प्रस्तरस्य चेतनकार्यविरोधाद्यजमानकार्ययोगो न सम्भवतीति यजमानकार्ये प्रस्तरचोदनोपपत्तिमभ्युपेत्यैतावदुक्तम् वस्तुतस्तु मुख्यत्वेन यजमानशब्दस्य कार्यलक्षणार्थत्वायोगात्सापि नोपपद्यतइत्यर्थः। आदिशब्देनैककपालोपादानम्। यजमानस्यैककपालकार्यार्थत्वे सर्वतन्त्रलोपापत्त्यभिधानं प्रस्तरकार्यार्थत्वे ऽपि तुल्यमित्याह * एकेति * भाष्यकृता तु ३।१९।२
प्रस्तरस्य मान्त्रवर्णिकदेवतान्वयेनानुषङ्गिकयागसाधनत्वे ऽपि प्रहरणस्य प्रतिपत्तित्वेन प्रस्तरकार्यत्वाभावाद्यजमानस्य च पुरोडाशकपालवदन्यार्थस्यैव स्रुग्धारणविनियोगे ऽपि तन्मात्रनिष्पत्त्या कृतार्थत्वाभावेनाप्रतिपाद्यत्वात् प्रहरणानापत्तेस्तदुपेक्ष्येतरत्रैव दूषणमुक्तम् विध्यन्तरं चेत्यादिभाष्येण विध्येकवाक्यत्वं विनार्थवादत्वायोगेनानर्थक्यपरिहाराय कथं चिद्विधित्वमेष्टव्यम् इत्याशङ्कानिरासायैकस्योपरि सादनविधिशेषता इतरस्य च सर्वहोमविधिशेषतेत्यभिधानपूर्वकं विधित्वासम्भवोपसंहारेणानुवादत्वमुक्तं तद्व्याचष्टे * तस्मादिति * कथं पुनरिति भाष्येण प्रस्तरैककपालशब्दयोः कार्यलक्षणार्थत्वाभावे कथं यजमानशब्दसामानाधिकरण्यज्ञानमिति पृष्ठा गौण्या वृत्त्या सामानाधिकरण्यं भविष्यतीत्याशङ्कानिरासार्थं वेदे गौण्यवृत्त्यसम्भवं मनसि कृत्वा कथमिति प्रश्नाभिप्रायो विवृतः। तत्सङ्क्षिप्य व्याचष्टे * कथमिति * किमर्थं चेति प्रश्नान्तरभाष्यं विध्यर्थवादचिन्तोपक्रमेण सम्वादस्य स्तुत्यर्थत्वाज्ञानादयुक्तमाशङ्क्य स्तुतिप्रकारप्रश्नविषयतया व्याचष्टे * किमाकारा वेति * उच्यतइति द्वितीयप्रश्नोत्तरभाष्यं व्याचष्टे * यजमानो हीति * उत्तरशब्दव्याख्यानायोपरिशब्दः कथमित्यादिप्रश्नानुभाषणपूर्वकं गौणवृत्तिलक्षणाभिधानापातनिकार्थं गुणवादस्त्विवतिसूत्रेणोत्तराभिधानार्थं भाष्यं व्याचष्टे * गुणाच्चेति * गौणवृत्त्यसम्भवाभिधानार्थं कथमिति भाष्यं गुणादिति पञ्चम्या परशब्दस्य परत्र प्रवृत्तौ गुणस्य हेतुत्वमात्राभिधानात् लक्ष्यमाणस्यापि च हेतुत्वोपपत्तेर्वाच्यत्वान-

भिधानादयुक्तमाशङ्क्य व्याचष्टे * कथमिति * अयमाशयः न लक्ष्यमाणगुणयोगमात्रेण सिंहादिशब्दस्य देवदत्तादौ वृत्तिर्युक्ता लक्ष्यमाणगुणस्याशाब्दत्वाच्छब्देन देवदत्तादिना धूमोऽयं ज्वलतीतिवदनन्वयापत्तेः । प्रसह्यकारित्ववच्च दंष्ट्रित्वचतुष्पात्त्वादेरपि सिंहगुणस्य देवदत्ते प्रत्ययापत्तेर्लक्षणायां त्वभिधेयसम्बन्धित्वरूपादरेण तत्र शब्दतात्पर्यावगतेर्यत्परः शब्दः स शब्दार्थ इत्यनेन न्यायेनाभिधेयसम्बन्धित्वरूपस्यापि शब्दार्थत्वाच्छाब्दार्थान्तरेणान्वयो युक्तः । तात्पर्यव्यवस्थानादेव च गङ्गादिशब्दानामभिधेयसम्बन्धाविशेषेऽपि सिकतादिलक्षकत्वानापत्तिः । तस्माल्लक्ष्यमाणगुणयोगनिमित्तवृत्तित्वस्य गौणवृत्तिलक्षणस्यायोगात् प्रसिद्धवाच्यत्यागेन तद्गुणवाचित्वं गौणवृत्तित्वलक्षणमभ्युपगन्तव्यम् । सिंहादिशब्दस्य हि स्वार्थवाचित्वे देवदत्तशब्दसामानाधिकरण्यायोगात् तद्गुणप्रसह्यकारित्ववाचित्वाकल्पनायां देवदत्ते ऽपि तत्सद्भावाद्गौरो देवदत्त इतिवत्सामानाधिकरण्यमुपपादयितुं शक्यते । स्वार्थत्यागेन च तद्गुणे वर्त्तमानत्वात्तत्र भव इत्येतस्मिन्नर्थे तद्धितोत्पत्तिः । पौरुषेये च वाक्ये वक्तृभिप्रायानुसारात् स्वार्थत्यागेन तद्गुणे वृत्तिर्युक्ता वेदे तु स्वार्थत्यागेन प्रामाण्यबाधापत्तेस्तत्त्यागेन गुणवाचित्वकल्पना न युक्तेति स्वार्थोभिधानेनेत्युत्तरभाष्याभिप्रायमाह * सिद्धान्तस्त्विति * गुणस्यावाचको ऽपि स्वार्थमभिधाय लक्षणया गुणं ब्रवीतीति वदता लक्ष्यमाणगुणयोगनिमित्तत्वं सिद्धान्त्यभिमतं गौण्या वृत्तेर्लक्षणं सूचितं भवतीत्याशयः । सर्व इति भाष्यं पराभिमतलक्षणनिरासार्थतया व्याचष्टे * अजहत्स्वार्था इति * न जहाति शब्दः स्वमर्थं यासु वृत्तिषु इति विग्रहः । यथा श्रुतिवृत्तौ लक्षणावृत्तौ वा शब्दः स्वार्थं न जहाति तथा गौण्यामपीत्यर्थः । ततश्च स्वार्थत्यागाभावान्न वेदाप्रामाण्यापत्तिरित्याशयः । भाष्यकृता प्रसिद्धार्थहानाप्रसिद्धार्थकल्पनापत्तिः पराभिमतलक्षणनिरासे हेतुत्वेनोक्ता सा गवादिशब्दानामपि सास्नादिमदर्थत्यागेन पृथिव्यादिवाचित्वनिरासापादकत्वादहेतुरित्याशङ्क्य स्वयं हेतुमाह * पूर्वेति * कथं पूर्वक्लृप्तशक्त्यनुसारेण परशब्दस्य परत्र वृत्तिरित्याशङ्क्यार्थसम्बन्धादित्यादिभाष्यं वक्ष्यमाणं प्रकारमाह * सम्भविष्यति चेति * भविष्यन्निर्देशेनान्यस्य प्रकारस्य वक्ष्यमाणत्वं सूचितम् । भाष्योक्तं हेतुमनुसन्धत्ते * इतीति * स्वोक्तहेतूपजीवित्वसूचनायेति करणः प्रसिद्धहानाप्रसिद्धकल्पनस्य दोषत्वोपपादनार्थं व्यवहारोच्छेदकत्वाभिधानम् । न चेति भाष्यं मतान्तरनिरासार्थत्वेन

व्याख्यातुं तत्तावदुपन्यस्यति * अन्येषां त्विति * सिंहादिशब्दोच्चारणे जातिवद् द्रव्यादीनामपि प्रतीतेरवाच्यत्वे वा शब्दत्वेन द्रव्यादिवाचिशब्दान्तरसामानाधिकरण्यायोगात् समुदायवाची सिंहादिशब्दो देवदत्तादौ समुदायाभावेनैकदेशे गुणादौ लक्षणया वर्त्तमानो गुणशब्दस्याङ्गे प्रयोगादङ्गशब्दस्य चावयवापरपर्यायैकदेशे प्रयोगादेकदेशाख्ये गुणे वर्त्तमानत्वात् पूर्ववद् गौण इत्युच्यते तस्मात् समुदायवाचिनस्तदेकदेशवृत्तित्वं गौणवृत्तिलक्षणं तच्च समुदायानित्यत्वेन शब्दार्थसम्बन्धानित्यत्वापत्तेरप्रामाण्यापादकत्वाद्वेदे न सम्भवतीत्याशयः। एतन्मतनिरासार्थतया न चेति भाष्यं व्याचष्टे * तत्रेति * समुदायवाची वेति भाष्यावयवस्य समुदायवाचित्वाङ्गीकरणेन एकदेशवृत्तिनिरासार्थत्वशङ्कानिवृत्तये पूर्वैकवाक्यत्वेन समुदायवाचित्वनिरासार्थत्वसूचनायादौ व्याख्या। नन्वेवं सति वेदमधीत्य स्नायादिति क्त्वाप्रत्ययस्य पूर्वकालतानन्तर्यसमुदायवाचिनो ऽध्ययनविध्यविरोधार्थं तदेकदेशे पूर्वकालत्वमात्रे वृत्त्यभ्युपगमो विरुध्येतेत्याशङ्क्य नावयवे श्रुत्या वर्त्तितुमर्हतीति अध्याहारेण व्याख्यातुं मुख्यरूपेणेत्युक्तं गुणहीने ऽपि इत्यादिपूर्वावयवव्याख्यानार्थं भवतीत्याद्युक्तम्। समुदायवाचित्वनिरासायैव सर्वेति दूषणान्तरभाष्यं सिद्धान्तविरोधाभिधानार्थतया तावद्व्याचष्टे * सामान्येति * एतदेव भाष्यं सामान्यवचनः शब्द इति प्रतिज्ञासिद्ध्यर्थो यदि व्यक्तिः शब्दार्थो भवेदित्यादिभाष्योक्तो व्यक्तिवाचित्वनिरासो न्याय्य इत्येवं व्याख्यातुमाह * क्रियेति * प्रबलारिमर्दनादिक्रियाणां शौर्यादिगुणानामित्यर्थः। किं ३२०।१
च व्यक्तिवाचित्वपक्षे व्यक्त्यन्तरे प्रयोगासम्भवे ऽप्येकस्यां तावद्व्यक्तौ कालान्तरे ऽपि प्रयोगः सम्भवति। गुणादिसमुदायवाचित्वे त्वेकस्यामपि व्यक्ताववस्थाभेदेन तेषां भेदात् सम्बन्धाग्रहणेनाभिधानाशक्तिरित्याह * एकस्यामेवेति * ननु गुणक्रियाणामन्यत्वे ऽप्येकं किं चिद् गुणक्रियावान्तरसामान्यसम्बन्धग्रहणायोपलक्षणं भविष्यतीत्याशङ्क्याह * न चेति * आसां गुणक्रियाणां समुदायशो व्यापकमुपलक्षणभूतं सिंहत्वादन्यत्सामान्यं नास्ति। न च गुणत्वादिसामान्यस्यैव सिंहशब्दवाच्यत्वोपलक्षणत्वं युक्तम्। तस्य समुदायशो व्यापकत्वाभावेन प्रत्येकमुपलक्षणापत्तेस्तथोपलक्षितानां च गुणक्रियाणां व्याघ्रादिजात्यन्तरे ऽपि व्यस्तानां भावात् सिंहशब्दवाच्यत्वं नास्तीत्याशयः। ननु सिंहत्वमेव तर्ह्युपलक्षणं भवति-

१ वदिति २ पु० ना०।

स्याशङ्क्याह * तत्रेति * उत्तरार्द्धं व्याचष्टे * न हीति * समुदा-
वाचित्वनिरासस्य परोक्तगौणवृत्तिलक्षणनिरासोपयोगमाह * इता-
ति * न चासतीति भाष्यमारोपितार्थवृत्तित्वरूपगौ[illegible]
निरासार्थत्वेन व्याख्यातुं तन्मतं तावदुपन्यस्यति * [illegible]
समारोपिते तस्मिन् वाच्ये भावः प्रवृत्तिर्यस्य शब्द[illegible]
वाच्यमारोप्य प्रवर्त्तमानत्वात्तत आगत इत्यस्मिन्नर्थे [illegible]
गौण इति उच्यते समारोपितो वा यस्मिन्नर्थे तस्य वा[illegible]
भावः सो ऽर्थो गुणतो वाच्यारोपेण शब्दात् प्रतीतत्वा[illegible]
त्युच्यते ततश्च समारोपितार्थवृत्तित्वं शब्दस्य गौणत्वल[illegible]
पितार्थाश्रयत्वं चार्थस्य तच्च वेदे समारोपकपुरुषाभाव[illegible]
तीत्याशयः । एतदेव लक्षणमुपपादयितुमाह * तस्येति [illegible]
भिधानं वृत्तिर्व्यापारो न चासावभिधेया ऽभावे सम्भव[illegible]
ननु सिंहशब्दस्य देवदत्ताभिधाने व्यापाराभावे ऽपि [illegible]
क्ष्यमाणगुणयोगेन देवदत्तप्रतिपत्त्यर्थं प्रयोगो भविष्य[illegible]
* न चेति * सिंहशब्दाभिहितेन सिंहत्वेन गम्यमानस्य[illegible]
शाब्दत्वाच्छब्देन देवदत्तेनान्वयायोगादित्याशयः । सिं[illegible]
लक्षणासम्भवमुक्त्वा स्वाभिमतं प्रश्नपूर्वकमुपपादयति [illegible]
ति * ननु सिंहशब्देनैव देवदत्ते स्ववाच्यसिंहत्वरूप[illegible]
विषयीकृत्य शब्दप्रवृत्तावितरेतराश्रयः स्यादित्याशङ्क्य [illegible]
क्त्वाध्यारोप्येत्युक्तम् । आरोपनिमित्तमाह * सिंहा[illegible]
हादिरूपतां प्रतिपद्यन्तइत्यर्थः । ननु देवदत्ते सिंहत्वं [illegible]
मिति कथं ज्ञायतइत्याशङ्क्याह * ततश्चेति * शब्दप्रयोगस्य स्वार्थ-
एवोपपत्तेः सिंहशब्दप्रयोगान्यथानुपपत्त्या सिंहत्वारोपः कल्प्यत-
इत्याशयः । नन्वेवं वाच्ये एव शब्दप्रयोगान्मुख्यत्वं स्यादित्याशङ्क्या-
ह * न चेति * नन्वारोपिते वाच्ये ऽर्थान्तराभिधानानपेक्षत्वात् मु-
ख्यवत्प्रथमप्रवृत्तेर्मुख्यत्वाविरोध इत्याशङ्क्याह * यत्र त्विति *
वस्तुवृत्त्या स एवार्थो यत्र न पुनरारोप्यते तत्र प्रवर्त्तमानः शब्दो
मुख्य इत्युच्यते इतरत्र तु जघनवदारोपात् पश्चात्प्रवृत्तेर्ज्जघन्यो
गुणतश्चारोपात् गौण इत्युच्यतइत्याशयः । न च शुक्तिकादावपि
रजतत्वारोपेण रजतादिशब्दप्रवृत्तेर्गौणत्वापत्तिः । पुरुषोत्प्रेक्षा-
प्रभवत्वाभावेन शुक्तिकादौ रजतादिबुद्धेरारोपितत्वाभावादिति
सूचनायादोष इत्युक्तम् । एतन्मतनिरासार्थत्वेन भाष्यं व्या-
चष्टे * तत्रेति * एतदेवोपपादयति * तथा हीति * सिं-
हदेवदत्तयोरत्यन्तवैलक्षण्येनारोपायोगादसम्भविनश्चार्थापत्त्यापि

कल्पयितुमशक्यत्वात् नाभिधानसिद्ध्यर्थमप्यारोपो युक्त इत्यर्थः। वैलक्षण्ये ऽप्यूषरादौ तोयाध्यारोपदर्शनाद् * भ्रान्तिवर्जितैः * इत्युक्तम्। नचैवं सति योषा वा गौतमाग्निरिति योषायामग्नित्वारोपविधिर्न स्यादितिवाच्यम्। तत्रेतःप्रक्षेपस्य मध्यायत्कर्त्वमभवद्भीक इति द्वाभ्यामृग्भ्यां स्वाहाकारान्ताभ्यां रेतः सिञ्चेदिति स्वाहाकारसाध्यत्वस्मृतेस्तथाविधस्य च होमत्वप्रसिद्धेर्यूपशकला होतव्या इति च देवतोद्देशद्रव्यत्यागानिरपेक्षप्रक्षेपमात्रे ऽपि जुहोतेर्वेदे दर्शनात्तत्कर्मीभूतस्य रेतसो ऽर्चिशुचिहुसृपिछदिछर्दिभ्य इसिरिति जुहोतेरिसिप्रत्ययान्वाख्यानाद्धविःशब्दव्यपदेश्यत्वेन योषाया रेतोरूपहविराधारतयाग्निसादृश्यसम्भवाच्छ्येनचितं चिन्वीतेति च योषायामाग्निसादृश्यारोपस्य विधेयत्वादित्याशयः। ननु भ्रान्तिवर्जितानां विसदृशे वस्तुनि वस्त्वन्तरारोपाशक्तावपि भ्रान्त्यवसितसादृश्ये ऽपि तत्त्वारोपेण शब्दः प्रयोक्ष्यतइत्याशङ्क्याह * यदेति * ३२१।२
रश्मितप्तोषरे भ्रान्त्या शौक्ल्यचञ्चलत्वादितोयगुणदर्शनेन तोयसादृश्याध्यवसानात्तोयमुत्प्रेक्ष्य तोयशब्दप्रयोगे तत्त्वतो भ्रान्तावपि भ्रान्त्यध्यवसितस्यैव कारणत्वोपपत्तेरुत्प्रेक्षामात्रत्वाभावेनारोपाभावाद् दूरमपि गत्वा भ्रान्तित्वस्य परिहर्त्तुमशक्यत्वे प्रथममेव सादृश्यज्ञानानपेक्षस्य भ्रात्यङ्गीकरणस्य च युक्तत्वात् मुख्यतैवावसीयते न गौणतेत्याशयः। परानभिमतमपि वा भ्रान्तेरारोपत्वं लोकप्रसिद्ध्यनुसारेणापाद्यारोप्येत्युक्तम्। तोयस्य तत्राविद्यमानत्वात् मुख्यत्वानुपपत्तिमाशङ्क्य *भ्रान्तीत्युक्तम्*भ्रान्त्यध्यवसितस्यापि प्रथमं शब्दात्प्रतीतेर्मुख्यत्वाविरोध इत्याशयः। भ्रान्त्यध्यवसितो मुख्यो भ्रान्तिमुख्य इति शाकपार्थिववन्मध्यमपदलोपी समासः। ननूभयोर्भ्रान्तावर्थान्तराभिधाननैरपेक्ष्येण प्रथमवृत्तेर्मुख्यत्वाद् गौणत्वासम्भवे ऽपि वक्तुर्भ्रान्त्यभावेऽपि श्रोतृप्रतारणायोषरे तोयशब्दप्रयोगे भ्रान्तिमुख्यत्वस्याप्यसम्भवाद् गौणत्वं भविष्यतीत्याशङ्क्याह*अथापीति*श्रोतृवञ्चनार्थेनैव परशब्दस्य परत्र प्रयोगोपपत्तेर्नासम्भाविनो ऽध्यारोपस्य कल्पना युक्तेत्याशयः। ननु द्वयोः श्रोतुरेव वा भ्रान्त्या वारोपाभावे ऽपि भ्रान्त्या प्रतारणार्थेन वा परशब्दस्य परत्र प्रयोगोपपत्तेर्माभूदारोपकल्पना द्वयोरपि तु भ्रान्त्यभावे सिंहो देवदत्त इत्यादावारोपं विना शब्दप्रयोगानुपपत्तेस्तत्कल्पनैवोचितेत्याशङ्क्याह * यदा त्विति * सादृश्यमादिशब्दोपात्तो वा सादृश्यहेतुर्गुणयोगो निमित्तं यस्य वस्त्वर्थस्य तस्य परत्र परशब्दप्रवृत्तौ निमित्तत्वेनाध्यवसानान्नारोपकल्पना युक्तेत्यर्थः। वत्यप्रयोगात्तदर्थाध्यवसानासम्भवाशङ्कानि-

रासायान्तर्णीतशब्देनाभिप्रेतत्वमुक्तम् । ननु वक्त्रर्थाभिप्रायस्यैव तत्र निमित्तत्वं नारोपस्येति नियमे को हेतुरित्याशङ्क्य पूर्वश्लोकव्याख्यानेन निरस्यति * तथा हीति * ननु सत्यपि विवेके प्रसह्यकारित्वादिसादृश्यादारोपः सम्भवतीत्याशङ्क्याह * यथेति * विवेकज्ञानाम् पुंसाम् आरोपानुपपत्तौ हेतुमाह*न हीति * ज्ञानस्य व्यवहाराङ्गत्वात् अर्थनिरपेक्षेण च ज्ञानरूपेण व्यवहाराभावात् अर्थाध्यवसानात्मकमेव सर्वं ज्ञानं न ततो ऽन्यादृशं न च विवेकेनार्थे ऽध्यवसिते तत्त्वारोपः सम्भवतीत्याशयः । यद्वा विवेकज्ञानाङ्ग तत्त्वभ्रान्त्यसम्भवे ऽप्युत्प्रेक्षामात्रप्रभवा कल्पनारूपा बुद्धिरारोपशब्दवाच्योपपत्स्यतइत्याशङ्क्य * न हीत्युक्तम् * अयमाशयः कल्पनारूपापि बुद्धिरर्थान्तरात्मना यद्यर्थान्तरमवभासयेत्ततो मानान्तरेण भ्रान्तिरेव स्यात् सा च विवेकिनां न सम्भवतीत्यर्थानवभासिकासावभ्युपगन्तव्या न चार्थानवभासिका बुद्धिः सम्भवतीति व्यवहारानङ्गत्वापत्तेस्तावन्निरालम्बना बुद्धिर्न सम्भवतीत्युक्तं बुद्धिस्वाभाव्यादप्येवमित्याह * किं चेति * पुरुषप्रयोज्यत्वात्तदधीनो ऽपि शब्दः प्रवृत्तिनिमित्तं विषयं विना न प्रवर्त्तते घटे वैयात्यात्पटशब्दोच्चारणे ऽपि बुद्ध्यनुपपत्तेः । बुद्धिस्तु स्वच्छन्दत्वाद्विषयं विनोत्पत्तुमेव नार्हतीत्यर्थः । ननु स्वांशएव विषयो भविष्यतीत्याशङ्क्याह * न चेति * आरोपसम्भवात्कल्पना न युक्तेत्युक्त्वा कल्पकाभावादपि तत्कल्पना न युक्तेत्याह * अपि चेति*अयमाशयः । स्वप्रत्ययानुसारेण श्रोत्रा वक्त्रभिप्रायानुसारात् श्रोतुरारोपितार्थप्रत्यये सति वक्त्रर्यारोपकल्पना युज्येत तस्यैव देवदत्तपदसामानाधिकरण्यात्पूर्वं सिंहपदात्सम्बन्धग्रहणकालावगतानारोपितसिंहत्वरूपार्थप्रतीतेस्तत्सामानाधिकरण्योत्तरकालमपि सिंहसादृश्यमात्रप्रतीतेरारोपितार्थप्रत्ययाभावान्न वक्त्रर्यारोपकल्पना युक्तेति पदजन्यस्य पदार्थज्ञानस्य केवलसंस्कारजन्यत्वाभावात् स्मृतित्वाभावे ऽपि अधिकार्थत्वाभावसूचनार्थः स्मृतित्वोपचारः ततश्चानारोपितमुख्यार्थग्रहणान्न श्रोतरि नापि वक्त्रर्यारोप इत्यर्थः । श्लोकं व्याचष्टे * सर्वथेति * यदि द्रुतमध्यादिविभागवदर्थविशेषनिरपेक्षो गौणमुख्यविभागः स्यात् ततः श्रोतृप्रत्ययानपेक्षत्वात् परत्र परशब्दप्रयोगान्यथानुपपत्त्याध्यारोपः कल्प्येतापि स त्वर्थप्रत्ययापेक्षत्वात् तस्य श्रोतृगामित्वात् श्रोतुरारोपितार्थप्रत्ययान्यथानुपपत्त्या कल्पनीयः। न च तस्यारोपितार्थप्रत्ययः सम्भवतीति दर्शयितुम् *श्रोतृणामित्युक्तम् * सादृश्यादीत्यादिशब्देन तद्धेतुगुणयोगोपा-

दानम्। नन्वेवं सति सादृश्यस्यैव वाच्यत्वापत्तेः स्वार्थत्यागः स्यादि-
त्याशङ्क्य * सा चेत्युक्तम् *तमेवन्यायं प्रश्नपूर्वकं वक्तुम्* कथमि ३२२।१
त्युक्तम्* अस्यैव श्लोकस्योत्तरार्द्धं व्याख्यातुम् *यदा चेत्युक्तम् *
कीदृशी तर्हि परत्र परशब्दप्रयोगोपपत्त्यर्थं वक्तरि कल्पनेत्यपेक्षायां प्र-
श्नपूर्वकम् *कथं तर्हीत्युक्तम्* प्रसह्यकारित्वादेः सिंहत्वेनाविना-
भावे देवदत्ते ऽनुपपत्तिप्रसङ्गात् बहुव्रीह्यभ्युपगमे चाविनाभूतशब्द-
स्य विशेषणत्वात्पूर्वनिपातापत्तिः बाधिते च सिंहे व्यभिचारात् प्र-
सह्यकारिता तत्र प्रायेणेति भाष्ये प्रायशब्देनाविनाभावानादरसूच-
नात्सम्बन्धमात्रविवक्षया ऽविनाभूतशब्दः अनेन च कथं तु स्वार्था-
भिधानेन प्रत्यय इत्यादिभाष्यमनागतावेक्षणन्यायेन व्याख्यातं भव-
ति। स्वोत्प्रेक्षितगौणवृत्तिलक्षणाभ्युपगमे ऽनवस्थितवेदप्रामाण्याप-
ह्नवस्यानुचितत्वान्नारोपितार्थवृत्तित्वं गौण्या वृत्तेर्लक्षणमित्याह* किं
चेति * आरोपस्य पुरुषधर्मप्रदर्शनार्थं वक्तृणामित्युक्तम् किं तर्हि
गौणवृत्तिनिमित्तलक्षणमित्याशङ्क्येति गुणाश्रया इतीतिकरणेन प्र-
कारवाचिना तत्सिद्ध्यादिगुणयोगस्य गौणवृत्तिनिमित्तत्वाभिधाना-
त्सूचितम्। गुणयोगवृत्तित्वं गौणवृत्तिलक्षणमाह*तस्मादिति* उ-
पपदाधीनवृत्तित्वादीनां गौणवृत्तिलक्षणानां वेदाप्रामाण्यापादकत्वा-
दिहानिराकरणे ऽपि गौणमुख्याधिकरणे निराकरिष्यमाणत्वात् प-
रिशेषसिद्धिप्रदर्शनार्थम् * तस्मादित्युक्तम् * गुणयोगनिमित्तायाः
शब्दप्रवृत्तेर्गौणत्वेनेष्टत्वाद्वाच्यगुणानां प्रभूतानामर्थान्तरे वृत्तियोगः
प्रयोजनं प्रवृत्तौ निमित्तं यस्य स गौण इत्येवं व्याख्येयम्। गुणानाम-
शब्दत्वाच्छाब्देनार्थान्तरेणान्वयानुपपत्तिः प्रसह्यकारित्वादिवच्च दं-
ष्ट्रित्वादेरपि प्रत्यापत्तिरित्याशङ्कानिरासार्थं यो हि मन्यते प्रसह्य-
कारिणं प्रत्याययेयमिति भाष्यावयवव्याख्यानार्थेन सिंहत्वाविनाभू-
तानेकक्रियागुणसमुदायो ऽनेन विवक्षित इति ग्रन्थेन प्रसह्यकारि-
त्वादीनां तात्पर्यवृत्त्या व्यवस्थितं शाब्दत्वं यत्सूचितं तद्विवरणार्थेन
प्रयोजनशब्देन प्रयुज्यते ऽनेनेति व्युत्पत्त्या निमित्तमुक्तम्। भेदनादे-
र्निमित्तस्य होमादिप्रयोजकत्वाभ्युपगमान्नाशेषिणो ऽपि तावन्निमि-
त्तस्याप्रयोजकत्वासम्भवोपालम्भः। इह तु यथा रामस्य वेतनदाने
निमित्तस्य शेषित्वरूपमपि प्रयोजनत्वं तथा देवदत्ते सिंहगुणयोगस्य
सिंहशब्दप्रवृत्तौ निमित्तत्ववत् प्रतिपाद्यत्वेन प्रयोजनत्वमप्यस्तीति-
सूचयितुं प्रयोजनशब्देनाभिधानं युक्तमेव। आरोपवादस्य लक्षण-
स्याव्यापकत्वमाशङ्कते * नन्वेवमिति * खपुष्पादेरसद्रूपत्वेन गु-

१ व्याधिते इति २ पु॰ पा॰।

णाभावादात्मादौ तद्गुणयोगानुपपत्तेः खपुष्पादीनां शब्दानां खपुष्पमात्मेत्यादिगौणप्रयोगो ऽस्मिन् लक्षणे न युज्येतेत्यर्थः । नन्वसद्रूपस्याध्यारोपयितुमशक्यत्वादारोपितार्थवृत्तित्वमपि खपुष्पमात्मेत्यादिगौणप्रयोगेष्वसम्भवादव्यापकं स्यादित्याशङ्क्याह * सांख्यादीति * असद्रूपस्यारोपासम्भवे प्रधानादेरसद्रूपत्वेनाप्रतीतिप्रसङ्गादप्रसक्तस्य प्रधानं नास्तीत्यादिनिषेधायोगात् प्रसक्त्यर्थं सद्रूपत्वाभ्युपगमे निषेधविरोधापत्तेरारोपस्यैव प्रसक्तिसिद्ध्यर्थं ऽवश्याङ्गीकार्यत्वादसतो ऽप्यारोपापत्तेरात्मनि खपुष्पत्वारोपेण खपुष्पमात्मेति गौणप्रयोगसम्भवान्नास्मत्पक्षे लक्षणस्याव्यापकतेत्याशयः । सिद्धान्ते तु त्वदीयस्यैव लक्षणस्याव्यापकत्वाख्यो दोषो नास्मदीयस्येति प्रतिजानाति तावत् * अत्रेति * परपक्षे तावत्प्रश्नपूर्वकं दोषमुपपादयति * कुत इति * किं चिद्रूपमुपादायातद्रूपे तद्रूपकल्पनारोपः खपुष्पस्य त्वेवं विधमिति निरूपणासम्भवान्न शक्या कल्पना गौणप्रयोगसिद्ध्यर्थं चार्थान्तरे ऽन्वयारोपो वाच्यः अर्थान्तरस्य चात्मनो सद्रूपतयात्मा खपुष्पमात्मेति गौणशब्दप्रयोक्तुर्बौद्धादेरभिप्रेतत्वान्न तस्मिन्नारोपोपपत्तिरित्यर्थः । एतदेव व्यतिरेकमुखेनोत्तरार्द्धेन विवृतं गुणे रूपं सत्ता च प्रज्ञाते यस्येति विग्रहः । एतदेवोपपादयति * यस्तावदिति * असद्रूपस्यारोपाभावे प्रसक्त्यभावात् खपुष्पं नास्तीति प्रयोगानुपपत्तेरसद्रूपस्यापि खपुष्पादेरारोपो ऽङ्गीकार्य इति याशङ्का प्रधानादिनिषेधोपन्यासेन कृता सा येऽपि प्रधानात्मादीनां निषेधा इत्युपन्यासपूर्वकं पश्चात्परिहरिष्यते खपुष्पमात्मेत्यादिगौणप्रयोगे तावत् खपुष्पस्यारोपासम्भवो ऽधुनोच्यतइति तावच्छब्दार्थः । खपुष्पशब्दस्य गौणत्वद्योतनार्थः स्थानीयशब्दः । अनिर्द्धारितरूपस्यारोपासम्भवद्योतनार्थं निर्द्धारणार्थतरप्प्रत्ययप्रयोगः । अन्यस्य चान्यत्रारोपो भवति खपुष्पस्यारोप्यत्वेनाभिमतस्यारोप्याश्रयादात्मनो ऽन्यत्वेनानवधारणान्नात्मन्यारोपः सम्भवतीत्यन्यशब्देनोक्तम् । न-
३२३।१ न्वात्मनः सद्रूपादसद्रूपस्यान्यता प्रसिद्धैवेत्याशङ्क्य * त्वयेत्युक्तम् * नैरात्म्यवादिनो बौद्धादेः खपुष्पमात्मेति प्रयोगः तन्मते चासत्त्वाविशेषान्नान्यत्वं सम्भवतीत्याशयः । यद्यपि खपुष्पशब्दस्य खाधारपुष्पावच्छिन्नाभाववाचित्वं गम्यते तयोश्चाभाववाचित्वं पूर्वेणैवाभावे ऽवगते इत्यादिना वक्ष्यते तेनैव न्यायेनात्मशब्दस्यापि नैरात्म्यपक्षे शरीराद्याधाराहम्प्रत्ययग्राह्यावच्छिन्नाभाववाचित्वं गम्यते तयोश्चाभावयोर्द्धर्मिप्रतियोगिभेदेन भेदादात्मनो ऽन्यत् खपुष्पं नैरा-

त्स्यवादिनापि वक्तुं शक्यते तथापि खपुष्पत्वरूपस्य शरीराद्याधाराहम्प्रत्ययग्राह्यरूपे ऽध्यारोपाभावात् स्वरूपेण चाऽभावयोर्वैलक्षण्यान्नारोप्यरूपस्यान्यत्वावधारणं सम्भवतीति दर्शयितुं *यदध्यारोप्येतेत्युक्तम् * तस्मादात्मनि खपुष्पारोपासम्भवेनारोपितार्थवृत्तित्वस्यास्मिन्प्रयोगे ऽनुपपत्तेस्तवैवाऽव्यापकत्वलक्षणो दोषः सिद्ध इति तात्पर्यार्थः। ननु खस्य पुष्पस्य च कथं चित् संसर्गकल्पनमारोपात्मकं खपुष्पमभ्युपगम्यात्मन्यारोपयिष्यते इत्याशङ्क्याह * तेनेति* एवं खपुष्पशब्दस्य खपुष्पसंसर्गात्मकारोपितार्थत्वेन खपुष्पएव गौणत्वोपपत्तेर्गौणशब्दवृत्तिविषयतया खपुष्पस्यैवारोप्यस्य गौणत्वमापद्येत न चैतस्यारोप्यस्य लोके गौणत्वं प्रसिद्धं सिंहत्वादेरारोप्यस्य गौणत्वप्रसिद्धेः। ततश्चैतद्गौणत्वलक्षणमतिव्यापकं स्यादित्याशयः। येन कारणेन स्वरूपेणानवधारितस्यान्यत्रारोपो न सम्भवति तेन पूर्वं तावत्स्वरूपमेवारोपात्मकमभ्युपगन्तव्यं ततश्च गौणतापि तस्यैवापद्येत सा च लोकाननुसारित्वादयुक्तेत्यर्थः। गौणमुख्यविभागस्यार्थविषयत्वे ऽर्थस्यारोपितार्थवृत्तिशब्दविषयत्वं गौणत्वलक्षणमभिप्रेत्यैतदुक्तम्। शब्दविषयत्वेन चैतस्मिन्नारोप्ये खपुष्पशब्दस्य सिंहादिशब्दस्येव लोके गौणत्वप्रतीतिरिति व्याख्येयम् ननु नारोपितार्थशब्दवृत्तिविषयत्वगौणत्वलक्षणं येन सिंहत्वादेरपि गौणत्वं प्रसज्येत किं त्वारोपितार्थाश्रयत्वं ततश्च सिंहत्वादेस्तावन्न गौणत्वापत्तिः खपुष्पस्य तु गौणत्वं युक्तमेव तथा हि खपुष्पशब्दस्याभावे ऽवृत्तिर्वक्ष्यते न चाभावस्तस्य वाच्यः तथा सति खपुष्पं नास्तीति प्रयोगानुपपत्तिप्रसङ्गादतो स्ववाच्यखपुष्पसंसर्गारोपेणाभावे वर्त्तमानः खपुष्पशब्दो गौणो भविष्यति आरोपितखपुष्पसंसर्गाश्रयत्वाभावाच्चाभावो गौण इत्याशङ्क्याह* मुख्य इति *अयमाशयः समासं विना खपुष्पशब्दात्संसर्गाप्रतीतेः समासवाच्यत्वं खपुष्पसंसर्गस्याभ्युपगन्तव्यं विग्रहवाक्यार्थश्च समासवाच्यः प्रमाणान्तरेण च खस्य पुष्पस्य खसंसर्गाप्रतीतेः खस्य पुष्पमस्तीति विग्रहायोगात्खस्य पुष्पं नास्तीति वाक्यार्थे समासप्रतीतेः खपुष्पाभाव एव खपुष्पशब्दस्य वाच्यत्वान्मुख्यो ऽर्थ इति संसर्गस्यैव वाच्यत्वं पराभिमतमभ्युपेत्य लोके गौणस्य मुख्यपूर्वकत्वप्रसिद्धेर्मुख्यार्थान्तराभावेन गौणतानेन निरस्यते। नन्वारोपितस्य मृगतोयादेर्लोके मुख्यत्वप्रसिद्ध्यभावात्पारिशेष्याद्गौणतैव स्यात् इत्याशङ्क्याह *प्रथमेति* गौणमुख्यव्यवहारे मुखवत् प्रथमं प्रतीय-

१ एवं सतीति २ पु० पा०।

मानं मुख्यत्वेन प्रसिद्धमित्याशयः । ऊहितां शङ्कामुद्घाटयति * कथमिति * आरोपिते मुख्यत्ववत् गौणत्वस्याप्यप्रसिद्धेस्तुल्यत्वमाह * तुल्यमिति * नन्वसतो गुणायोगासम्भवान्माभूत्तन्निमित्तं गौणत्वमारोपनिमित्तं तु भविष्यतीत्याशङ्क्याह * यत्र हीति * आरोप्याश्रयस्य देवदत्तादेर्गौणत्वं प्रसिद्धं नारोप्यस्य सिंहत्वादेरित्यर्थः । नन्विहाप्यारोप्यस्य खपुष्पस्य गौणत्वासम्भवे ऽप्यारोप्याश्रयस्यात्मनो गौणत्वं भविष्यतीत्याशङ्क्याह * खपुष्पं चेति * खपुष्पमात्मेति गौणप्रयोगवादिमते आरोप्यखपुष्पाश्रयत्वेनाभिमतस्यात्मनो ऽप्यसत्त्वाद्भेदाधिष्ठानत्वेन चाश्रयाश्रयिभावस्य खपुष्प एव खपुष्पारोपस्यानाशङ्कनीयत्वात् आश्रयानपेक्षकेवलारोप्यमात्ररूपतया खपुष्पस्यारोपितार्थाश्रयस्वरूपलोकप्रसिद्ध्यनुसारिलक्षणायोगात् आरोपितार्थवृत्तिशब्दविषयत्वमेवारोपवादिना लक्षणं वाच्यं तच्च मुख्ये ऽपि सिंहत्वादावारोपवादिमते ऽस्तीति अतिव्यापकं लक्षणं स्यादारोपितार्थाश्रयत्वं तु खपुष्पमात्मेति प्रयोगे ऽनुपपत्तेरव्यापकमिति तात्पर्यार्थः । एवमविद्यमानमेव खस्य पुष्पस्य च संसर्गमारोप्य खपुष्पाभावे खपुष्पशब्दप्रवृत्तेरारोपितार्थवृत्तित्वं शब्दस्य गौणत्वलक्षणमारोपितार्थवृत्तिशब्दविषयत्वं चार्थारोपवाद्यभिमतमित्यङ्गीकृत्य सिंहत्वे ऽपि सिंहशब्दस्य गौणत्वापत्तेर्दूषणे ऽभिहिते ऽध्यारोपवादी स्वाभिमतमारोपिताश्रयत्वमर्थस्य गौणत्वलक्षणं मनसिकृत्वा खपुष्पस्याप्यारोपितघटादिसत्ताश्रयत्वाद् गौणत्वमस्त्येवेति नाव्यापकत्वं लक्षणस्येति शङ्कते * तत्रैतत्स्यादिति * आत्मन्यारोपितसत्ताकत्वरूपखपुष्पगुणदर्शनेन देवदत्ते सिंहत्ववत् खपुष्पत्वारोपोपपत्तेः । खपुष्पमात्मेति अत्रापि गौणप्रयोगलक्षणसद्भावादव्यापकत्वमनाशङ्क्यमेवेति भावः । विद्यमानस्य घटादेर्यत्सद्रूपं तत्तत्र खपुष्पादावारोप्यते प्रातिपदिकार्थः सत्तेति सर्वप्रातिपदिकानां सत्तावाचित्वस्मृतेः । ततश्चारोपितसत्तारूपार्थाश्रयत्वात् खपुष्पादेर्गौणतास्त्येवेत्यर्थः । सर्वप्रातिपदिकानां सत्तावाचित्वस्याकृत्यधिकरणे निरस्तत्वात् स्मृतेश्च लिङ्गसंख्यान्वययोग्यसिद्धरूपार्थप्रतिपादनमात्रपरत्वात् यदि परं प्रतीतिबलेन खपुष्पशब्दस्य सत्तावाचित्वं वक्तव्यं न च खपुष्पादिशब्दात् सद्रूपप्रतीतिरस्तीति निराकरोति*तदिति*नन्वेवं सति पदात्सदसत्साधारणरूपार्थप्रतीतेरभावस्यापि खपुष्पशब्दवाच्यत्वं न स्यात्। अथ सदसत्साधारणपदार्थस्वरूपमात्रवाचिनो ऽपि पदस्य व्यवहारयोग्यार्थाभिधाने तात्पर्यात् साधारणस्वरूपस्य च व्यवहारायोग्यत्वात् अभाववाचितेष्यते । तथा सति

खपुष्पं नास्तीति असद्रूपस्य खपुष्पस्य निषेधे सद्रूपत्वापत्तेर्निषेधान्वयसिद्ध्यर्थं खपुष्पशब्दस्य सद्रूपताभिधायितैवेष्टेत्याशङ्क्याह *अवश्यं हीति* यदि कश्चिदाकाशस्यानन्तदेशगतत्वान्न क्व चिद्देशे पुष्पमस्तीत्यवधारणाऽशक्तेः। खपुष्पशब्दस्याभावेन सम्बन्धग्रहणाऽयोगाद्भावा ऽभावसन्देहे चाभावज्ञानस्य भावज्ञानसापेक्षत्वात् सद्रूपेणैव खपुष्पस्यानुभवमाशङ्कृत तं प्रत्युदाहरणान्तरं निषेधान्वयस्तु समासार्थकथनार्थो भविष्यतीत्याशयः। ननु घटादेः सद्रूपस्यैव वाच्यत्वदर्शनात् शशविषाणादेरपि वाच्यत्वसिद्ध्यर्थं प्रमाणानवगतमपि सद्रूपत्वं घटादिगतमारोपयिष्यते इत्याशङ्क्याह * न चेति * सम्बन्धिग्रहणपूर्वकसम्बन्धग्रहणापेक्षत्वात् वाच्यत्वस्य यो ऽर्थो येन रूपेण सम्बन्धिग्रहणकाले गृहीतस्तेनैव रूपेण तस्य सम्बन्धग्रहणात्तद्वाच्यत्वं न्याय्यं न चार्थान्तरस्य सद्रूपत्वग्रहणमात्रेण खपुष्पादौ सद्रूपेण सम्बन्धग्रहणं सम्भवतीत्यर्थः। नन्ववयवद्वारा खपुष्पशब्दस्यार्थप्रतिपादकत्वात्तयोश्च सद्रूपेण खेन पुष्पेण च सम्बन्धानुभवात्तद्रूपप्रत्ययोपपत्तिरित्याशङ्क्याह*ययोरिति*सामासार्थो ऽत्र चिन्त्यते न चासौ सद्रूपतया सम्बन्धग्रहणं विना सद्रूपतयाभिधातुं शक्यतइति भावः। ननु सद्रूपत्वेनाप्रतीतस्य शशविषाणादेरप्रसक्तत्वान्निषेधो न युज्यतेत्याशङ्कृते * कथं तर्हीति*सद्रूपप्रतीतावपि निषेधानुपपत्तिसाम्यमाह * सदिति * सद्रूपत्वेनापि प्रतीतस्य घटादेर्देशान्तरादौ निषेधदर्शनादात्यन्तिकेत्युक्तम् एतदेव विवृणोति * पश्येति* शशविषाणादौ देशकालाद्यवच्छेदाप्रतीतेरविशेषेण सर्वत्र भावाभावप्रसङ्गादेकत्रैवेत्युक्तम्। ननु वस्तुवृत्त्यैकत्र सदसद्रूपत्वासम्भवे ऽप्यारोपेण सद्रूपतया प्रतीतस्यैकत्र शुक्तिरजतवदविरुद्धो निषेध इत्याशङ्कृते * तेनेति* येन कारणेनैकत्र वस्तुवृत्त्या सदसत्त्वे विरुध्येते तेनैव कारणेन सद्रूपत्वमारोप्यतइत्युक्तमिति शेषः। खपुष्पे वान्यदारोप्येत खपुष्पं वान्यत्र तस्य त्वसिद्धसद्भावत्वान्नारोप्याश्रयत्वेनारोप्यारोपविषयत्वं युक्तमित्याह * नेति * यथापवरके घटो नास्तीति निषेधो ऽपवरकाख्यस्य निषेधाश्रयस्य निषेध्यघटप्रदेशात् प्रदेशान्तरस्य सद्भावं निषेध्यस्य च घटस्य प्रदेशान्तरे सद्भावमपेक्षते तथारोप्ये ऽप्यारोप्याश्रयस्योषरादेरारोप्य तोयादिप्रदेशान्नद्यादेः प्रदेशान्तरस्य सद्भावमारोप्यस्य च तोयादेः प्रदेशान्तरे नद्यादौ सद्भावमपेक्षते इति प्रदेशान्तरसद्भावशब्दस्यावृत्त्या षष्ठीसमासं सप्तमीसमासं चाङ्गीकृत्य योज्यम्। ननु यद्यपि खपुष्पस्यात्यन्तासत्त्वान्न घटादिसत्तायास्तस्मिन्नारोपस्तस्य वा घटादावारोपः सम्भ-

वति तथापि वृक्षादौ ज्ञातसद्भावस्य पुष्पस्याकाशे ऽध्यारोपो भविष्यतीत्याशङ्क्याह *न चेति* खपुष्पशब्दस्य केसरादिमद्रूपाकाशावयवपरिमाणवाचित्वाद्वृक्षादिपुष्पस्य च ताद्रूप्याभावेन ततो ऽन्यत्वाक्षान्यस्य वृक्षादिपुष्पस्य सद्भावेनान्यस्याकाशावयवसन्निवेशविशेषरूपपरिमाणात्मकस्यात्यन्तासत्ताकस्यारोपः सम्भवतीत्यर्थः। ननु यथा केशों ऽडूकादौ मनुष्यमस्तकादिगतकेशेभ्यो ऽन्यत्वे ऽप्याकाशावयवसंनिवेशविशेषरूपपरिमाणात्मकानामत्यन्तासतां केशानामारोपो दृष्टस्तथेहापि भविष्यतीत्याशङ्क्य * असम्बन्धादित्युक्तम् * तिमिरादिविरलीकृता लोकाविच्छिन्नास्तमो ऽवयवास्तत्रात्यन्तसौक्ष्म्यकार्ष्ण्यादिदैर्घ्यादिगुणसम्बन्धेन सादृश्यात् केशरूपतया ऽऽरोप्यन्ते खपुष्पवृक्षपुष्पयोस्तु सदसद्रूपताया कथं चिदवयवसामान्यसम्बन्धाभावेनासादृश्यान्न केशों ऽडूकादितुल्यतेत्याशयः। यद्वान्यस्यारोपाश्रयभूतस्यावाकाशस्य सद्भावेनान्यस्यात्यन्तासतः खपुष्पस्यारोपो न सिध्यति सदसतोरेकधर्मसम्बन्धाभावेनासादृश्यादित्यर्थः। अथ वा प्रदेशान्तरस्यारोप्याश्रयस्य खपुष्पस्यासत्त्वात् न घटादिसत्तायास्तस्मिन्नारोपः सम्भवतीति पूर्वग्रन्थेनोक्ते खपुष्पस्यैव तर्हि घटादावारोपो ऽस्त्वित्याशङ्क्यान्यस्य प्रदेशान्तरस्य घटादेः सद्भावमात्रेणान्यस्यारोपविषयस्य खपुष्पस्यारोपो न सिध्यति खपुष्पस्य घटादिनैकधर्मसम्बन्धाभावेनासादृश्यादित्यनेनं ग्रन्थेनोच्यते यद्यपि ध्वनिधर्माणामसदृशेष्वपि वर्णेष्वभिव्यङ्ग्याभिव्यञ्जकत्वसम्बन्धनिमित्तारोपदर्शनात् पित्तधर्मस्य च पीतत्वस्य चाक्षुषरश्मीनां शङ्खप्राप्तौ रश्मिसंयुक्तानां पित्तावयवानामपि शङ्खप्राप्तेः शङ्खसंयुक्तसमवायनिमित्तारोपदर्शनात् सादृश्यादिना केन चित्सम्बन्धेनारोपो भवति न सम्बन्धं विनेति दर्शयितुम् *असम्बन्धादित्युक्तम् * तथापि द्रव्यस्य द्रव्यान्तरे सादृश्यं विनारोपादर्शनात् सादृश्याभावार्थत्वेन व्याख्यातम्। ननूषरेण तोयस्य सादृश्यादिना केन चित्सम्बन्धाभावात् कथं तत्र तोयादेरारोप इत्याशङ्क्ते * कथमिति * तोयस्य सद्रूपत्वे सादृश्यादिसम्बन्धसद्भावात् शौक्ल्यचञ्चलत्वादिधर्मकरश्मिसंयुक्तेनोषरेण सह साक्षात् सादृश्याभावे ऽप्यूषरसंयुक्तरश्मिसादृश्यादारोपोपपत्तिरित्याशयेन परिहरति * प्रदेशान्तरेति * खपुष्पस्यासम्भवादारोपासम्भवे ऽभिहिते तोयस्याप्यसम्बन्धादारोपो न स्यादित्याशङ्कार्थप्रतीतेरत्यन्तासत्त्वाभिप्रायस्य च प्रत्यक्षविरोधेनानुपपत्तेस्तन्निरासार्थं तोयस्य सद्भावादूषरसम्बन्धप्रतीतेरिति

१ असंबन्धादिति २ पु० पा०।

व्याख्येयम् । सम्बन्धानपेक्षणे च तत्रासतो ऽत्यन्तासतश्च विशेषाभावात्तत्रासदपि भ्रान्तौ प्रकाशते ऽत्यन्तासत्तु न प्रकाशते इति व्यवस्थाहेत्वभावात्परिभाषामात्रापत्तेरत्यन्तासतो ऽपि शुक्तिरजततादात्म्यस्य प्रकाशनदर्शनात् प्रदेशान्तरसत्ताया न कश्चिदुपयोगः।अत एव च प्रज्ञातगुणसत्ताकमित्यत्र गुणग्रहणं कृतम् । ननु शशविषाणस्य निषेधानुपपत्तौ शशविषाणं नास्तीति नास्तिशब्दप्रयोगः कथं घटतेत्याशङ्कते * कथमिति * नायं नास्तिशब्दो निषेधार्थः किं त्वनुवादमात्रमिति परिहरति * पूर्वेणेति * अप्राप्तस्यानुवादानुपपत्तिमाशङ्क्य * पूर्वेणैवेत्युक्तम् * प्रमाणान्तरेण कदा चिच्छशशृङ्गानुपलब्धेः । शशे विषाणमस्तीति विग्रहवाक्यार्थे समासायोगादभावाख्यप्रमाणावगतस्यात्यन्ताभावस्यैव सम्बन्धग्रहणसम्भवात्समासार्थत्वोपपत्तेः। शशे विषाणं नास्तीति विग्रहवाक्यार्थे ऽन्तर्णीतनिषेधो ऽयं समासश्चन्द्राननमित्यन्तर्णीतवत्यर्थो यथेति अवधारणाच्छशविषाणशब्दस्यात्यन्ताभाववाचित्वप्रतीतेः । शशविषाणशब्देनैव भावावगमान्नास्तिशब्दस्यानुवादत्वोपपत्तिरित्यर्थः।अनुवादमात्रानर्थक्यापत्तेरपरितोषादभावसामान्यस्य नास्तिशब्दोक्तस्य विशेषणार्थो ऽत्यन्ताभावाख्यविशेषवाचिशशविषाणप्रयोग इति परिहारान्तरमाह * अथ वेति * नन्वीदृशएव विशेषणविशेष्यभावो न तु विपरीत इति कथं निश्चेयमत आह * नेति * अर्थद्वारशब्दयोर्विशेषणविशेष्यभावः । न चाभावसामान्येनात्यन्ताभावाख्याविशेषरूपं शशविषाणं विशेष्यते गोत्वादिसामान्यं हि बाहुलेयादिविशेषान्तरे व्यभिचाराच्छावलेयादिविशेषेण विशेष्यमाणं दृष्टं विशेषस्य व्यभिचारात् सामान्येन विशेषणं न युक्तमित्यर्थः । एवमपि शशविषाणादिशब्दादेव कर्कादिवद्व्यभिचाराभावेन विशेषान्तर्गतसामान्यप्रतीतेरपि सिद्धेर्नास्तिशब्दानर्थक्यमपरिहार्यमित्यपरितोषात्प्रमाणान्तरेण शशे शृङ्गाप्रतीतावपि शशविषाणशब्दादेव वस्तुतो ऽत्यन्तभाववचनादपि भ्रान्तस्य संसर्गप्रतीतिं वारयितुम् अयं निषेध इति परिहारान्तरमाह * अथ वेति * नन्ववयवार्थग्रहणे षष्ठ्यर्थ- ३२४।१
स्मृतिप्रसङ्गे ऽपि योग्यानुपलब्ध्या शशस्य शृङ्गराहित्यावगमात् कथं संसर्गभ्रान्तिरित्याशङ्क्य * न चेत्युक्तम् * एवं त्वाभाववाचित्ववादिनं प्रति प्रयोगानुपपत्तेरपरिहारेणापरितोषात् स्वमतेन समासार्थकथनार्थत्वं नास्तिशब्दस्य द्योतयितुमाह * अथ वेति * शशे विषाणं नास्तीति विग्रहवाक्यसूचनार्थम् * विनैवेत्युक्तम् * शृङ्गोत्पत्त्याश्रयत्वे निषेधविवक्षासूचनाय *अधिकरणत्वेनेत्युक्तम्*

विषाणस्याधेयत्वाविवक्षायामपि प्रथमाया एव प्रयोज्यत्वात्तस्याश्च निर्देशार्थत्वेनैव प्राप्तेर्विषाणं च निर्दिश्येतेत्येतावदुक्तम्।नन्वसतो ऽध्यारोपं विनाधेयत्वनिर्देशायोगात् परपक्षापात्तिरित्याशङ्क्य * गवादीत्युक्तम् * शशगतस्य शृङ्गस्य निर्देशो नारोपं विना युज्येत गवादिगतस्य तु प्रमाणसिद्धत्वान्नारोपापेक्षेति भावः । गवादिगतस्य निषेधानुपपात्तिमाशङ्क्य निषेधभूतस्य शशसम्बन्धविषयत्वं वक्तुम् *तयोरित्युक्तम्* शशविषाणयोः सम्बन्धस्याप्रसक्तेर्निषेधानर्थक्यमाशङ्क्य शशविषाणस्यात्यन्ताभावेन सह वाच्यवाचकसम्बन्धकथनार्थत्वसूचनार्थं तेनैवेत्युक्तम्। चन्द्राननेन समासार्थकथनार्थं चन्द्र इवाननमिति विग्रहवाक्यवच्छशविषाणसमासार्थकथनार्थेन शशे विषाणं नास्तीति विग्रहवाक्येनानुभूतस्य सम्बन्धस्य श्रोतुः शशविषाणशब्दः तद्वाक्यप्रतिपाद्यमेवात्यन्ताभावं गमयिष्यतीत्येतदर्थं नास्तिशब्दप्रयोग इति व्यवहितेनान्वयः । क्रियायां च क्रियार्थायामिति लृङः क्रियार्थक्रियोपपदनिमित्तत्वात् गमयिष्यतीत्येतदर्थमित्यर्थो लभ्यते शशविषाणं नाम किमित्यपेक्षायामकदेशेन विग्रहवाक्यसूचनार्थे नास्तीति शब्दप्रयोग इति तात्पर्यार्थः । शशे विषाणं नास्तीति विग्रहवाक्यस्य निषेधपरत्वमभ्युपगम्य समासार्थकथनप्रयोजनं तेनैवानुभूतसम्बन्धस्येत्यनेन सूचितम्।वस्तुतस्तु भावान्तरमभावो ऽन्यो न कश्चिदनिरूपणादित्यनेन न्यायेन भावनिरपेक्षस्याभावस्य वक्तुमशक्यत्वात् शृङ्गाकारेण परिणतः शशमूर्द्धैव भावरूपो विग्रहवाक्यार्थ इति निषेधार्थत्वाभावान्नारोपापेक्षेत्याह * अथ वेति * ततश्च शशविषाणं नास्तीत्यत्राप्येकदेशेन समासार्थकथनार्थविग्रहवाक्यसूचनार्थस्य नास्तिशब्दस्याप्यसावेव विषय इति निषेधार्थत्वाभावादारोपाभावे ऽपि प्रयोगविरोध इति निषेधार्थत्वाभावादारोपाभावे ऽपि प्रयोगाविरोध इति कथं तर्हि शशविषाणं नास्तीति प्रयोग इत्याशङ्कानिरासमुपसंहरति * इतीति * भावस्यापि नास्तिबुद्धिविषयत्वं दृष्टान्तेनोपपादयितुं वृद्धसम्मतिमाह * तथा चेति * तिष्ठतेर्गतिनिवृत्तौ स्मरणे ऽपि पूर्वां सन्ध्यां जपंस्तिष्ठेदित्यादावूद्र्ध्वावस्थाने प्रयोगाद्वस्तुवाचितोक्ता । स्वातन्त्र्यमात्रं चाभावस्य नास्तीति अभिप्रेतं न सर्वात्मना निरूपणाभावः सदसद्विवेकाभावप्रसङ्गादिति । एवं तवैवायं दोष इत्यनेनारोपितार्थवृत्तित्वस्य गौणत्वलक्षणस्याव्यापकत्वं दोषं प्रतिज्ञातम् । खपुष्पस्यात्मन्यारोपायोगात्तदारोपेण खपुष्पस्यात्मनि वृत्त्यनुपपत्तेः खपुष्पमात्मेति गौणप्रयोगे लक्षणासम्भवेनोपपाद्यम् । नन्वेवं सति खपुष्पादीनां स्वार्थाविनाभू-

तगुणाभावात् गौणप्रयोगाभावप्रसङ्ग इत्यनेनाशङ्कितं गुणायोगनिमित्तवृत्तित्वस्य गौणलक्षणस्याव्यापकत्वं परिहरति * तेनेति * आरोपितस्य खपुष्पादेर्गुणायोगाद्वास्तवत्वप्रतिपादनार्थो लब्धशब्दः मुख्यार्थान्तराभावादित्यादिनोपपादितस्य मुख्यत्वस्य गौणप्रयोगोपपादनोपयोगसूचनार्थो मुख्यशब्दः। येन कारणेन लब्धो वास्तवोऽत्यन्ताभावाख्यो वाच्योऽर्थः शशविषाणादिशब्दानां तेनान्यत्राप्यात्मादौ शशविषाणमात्मेति गौणः प्रयोगः सिद्ध इत्यर्थः। तन्निमित्तगुणाभिधानार्थम्। प्रसिद्धीत्युक्तम्। वस्तुतः सद्रूपत्वेन या प्रसिद्धिः ततोऽन्येन प्रकारेणाद्रूपत्वेनावस्थानं नाम खपुष्पादेर्गुण इति भावः। मुख्यशब्दसूचितम् मुख्यत्वस्य गौणत्वोपयोगं प्रकटयितुमाह * तव त्विति * आरोपवादिनो ह्याकाशस्य पुष्पस्य च संसर्गः खपुष्पशब्दस्य मुख्योऽर्थोऽभिमतः। तस्य च वस्तुतोऽसत्त्वात्तत्पूर्वको गौणो न सिध्येदिति भावः। लब्धमुख्यार्थानामिति मुख्यशब्देनैव न चैतस्य लोके गौणत्वप्रतीतेरिति खपुष्पगौणत्वप्रतीतेरिति खपुष्पगौणत्वनिरासस्यार्थाद् गौणप्रयोगोपपादनोपयोगं सूचितं प्रकटयितुमाह * यदि चेति * पुष्पाकाशयोः संसर्गारोपेण स्वार्थेऽत्यन्ताभावे खपुष्पशब्दस्य गौणतारोपवादिनोऽभिमता तथा च सत्यात्मनि गौणत्वं न स्यादित्यर्थः। एतदेवोपपादयति * न हीति * नन्वग्निशब्दस्यापि गौणमाणवकद्वारान्यत्र गौणत्वं कस्मान्न भवतीत्याशङ्क्य षाष्ठं न्यायमाह * तथा चेति * प्रतिनिधावुपात्ते ऽपचरिते प्रतिनिधिसदृशमुपादेयं मुख्यसदृशं वेति सन्देहे प्रतिनिधेरुपात्तत्वेन शास्त्रपरिगृहीतत्वात्तादृशोपादाने प्राप्ते वचनात्त्वन्याय्यमभावे तत्सामान्येन प्रतिनिधेरभावात् इतरस्येति सूत्रोदभावे तत्सामान्येन प्रतिनिधिरिति पदत्रयानुषङ्गेण प्रतिनिधावुपात्ते तदभावेन तत्सामान्येन प्रतिनिधिर्नोपादेयः मुख्यावयवोपादित्सयोपात्तस्यापि प्रतिनिधेरचोदितत्वेनेतरसाम्यादिति षष्ठे वक्ष्यते तेनैव न्यायेन माणवकस्याप्यवाच्यत्वसामान्यान्नाग्निशब्दस्य तद्द्वारा ऽन्यत्र गौणतेत्याशयः। यदप्यसद्रूपस्यारोपाभावे सांख्यादिकल्पितप्रधानादिनिषेधो न * सम्भवतीत्युक्तम् * तदप्यनुभाषणपूर्वकं परिहरति * ये ऽपीति * परमाणुकारणवादिभिर्वैशेषिकैः परमाणुभ्यो ऽन्यदेव प्रधानरूपं शरीरात्मवादिभिश्चार्वाकैः शरीरादन्यादृगात्मरूपं शरीरादीत्यादिशब्दोपात्तज्ञानसन्तानात्मवादिभिर्बौद्धैर्ज्ञानसन्तानादन्यादृगात्मादी-

१ पूर्वपक्षसूत्रादारभ्य २ पु० पा०।

त्यादिशब्दोपात्तपृथिव्यप्तेजोवाय्वाख्यचतुष्टयतत्त्ववाचिभिश्चार्वाकै-स्तेभ्यो ऽन्यादृक्रूपशब्दोपलक्षितमाकाशादितत्त्वं नास्तीति वर्ण्यत इति योज्यम् । श्लोकं व्याचष्टे * प्रधानादीति * एवं स्वार्थाभिधानेनेति भाष्यमुपसंहारार्थत्वेन व्याख्यातुमाह * तस्मादिति * एवमिति गुणाश्रया इति सूत्रावयवसूचितं गौणवृत्तिलक्षणाभिधानार्थं कथमगुणवचनो गुणं ब्रूयादिति भाष्यं व्याख्याय प्रकृतोदाहरणे कीदृशो गुणसम्बन्ध इति प्रश्नोत्तरत्वेन तत्सिद्धिशब्दव्याख्यानार्थं
३२५।२ इह त्विति भाष्यं व्याचष्टे * अतश्चेति * प्राप्नोति परमां सिद्धिमित्यादावीप्सिते कार्ये सिद्धिशब्दप्रयोगात्तस्य मुख्यस्यार्थस्य सिद्धिः कार्यमस्येति व्यधिकरणबहुव्रीहिणा तत्सिद्धिशब्देन तत्कार्यकारिता उक्तेति दर्शयितुं स्वार्थस्य यजमानस्य या सिद्धिः कार्यं * तत्करत्वमित्युक्तम् * भाष्यं तु कीदृशः प्रस्तरादेर्यजमानगुणसम्बन्ध इति पृष्टे यजमानसिद्धिकरः प्रस्तरादिरिति योज्यम् सर्वो हीत्यादिभाष्यं संक्षिप्य व्याचष्टे * प्रस्तरेति * तस्मादित्युपसंहारभाष्योपेक्षया विध्यर्थवादविचारानादरः सूचितः । जात्यादिविषयभूतेष्वप्याग्नेयाद्युदाहरणेषु विध्यर्थवादविचारोपक्रमस्य गुणवादनिमित्ताभिधानावसरकरणार्थत्वान्न विध्यर्थवादविचारे ऽभिनिवेष्टव्यम् । इति सूचयितुमाह * एतेनेति * तत्सिद्धेर्गुणवादनिमित्तत्वाभिधानेन जात्यादीन्यपि तन्निमित्तत्वेन व्याख्यातानीत्यर्थः ।

॥ आग्नेयादिशब्दानां ब्राह्मणस्तुत्यर्थत्वाधिकरणम् ॥ १३ ॥

जातिः ॥ २२ ॥

भाष्योक्तोदाहरणं दूषयति * तत्रेति * अर्थवादान्तरोक्तप्रजापतिमुखाद्येकप्रकृतिप्रभवत्वेन ब्राह्मणादीनामग्न्यादिभिर्भ्रातृवत्[1] सम्बन्धसद्भावादर्थवादोक्तस्यापि च सम्बन्धस्याज्यैः स्तुवतइत्यादिषु मुख्यशब्दप्रवृत्तिनिमित्तत्वदर्शनात् ब्राह्मणादिष्वाग्नेयादिशब्दानां मुख्यतेत्याशयः । ननु देवतातद्धितस्येह मुख्यत्वं न सम्भवतीत्याह * येनेति * सर्वत्राग्निकलिंभ्यां ढगिति सम्बन्धमात्रे ऽग्निशब्दात् ढक्स्मृतेस्तस्येदमिति चाण्प्रत्ययस्यापि तन्मात्रे स्मृतेर्नायं देवतातद्धित इति भावः । त्रैवर्णिकानां वा यागाधिकारित्वाद्यागदेवताभिराग्नेयादिभिर्देवतासम्बन्ध एव वक्तुं शक्यतइत्याह * देवतेति * ननु देवताशब्दस्य सम्बन्धिशब्दत्वात् प्रतिसम्बन्धित्यज्यमानं हविरेवापेक्ष्य प्रवृत्तेः शिष्यस्यैव गुरुसम्बन्धवत्तत् विषयएवं[2] देवतासम्बन्धो

१ भ्रातृवर्तेति २ पु० पा० ।
२ विषयस्थाने हविषएवेति २ पु० पा० ।

नान्यस्येत्याशङ्क्याह * न हीति * त्यक्तारमपेक्ष्य देवताशब्दस्याप्रवृत्तावपि देवतोद्देशपूर्वकद्रव्यत्यागाख्यैकक्रियाविषयानियमलक्षणत्वात् द्रव्यदेवतयोः सम्बन्धस्यैतस्य च त्यक्त्रपेक्षत्वात् येन देवतोद्देशपूर्वकद्रव्यत्यागाख्यैकक्रियासम्बन्धेन द्रव्यस्य सम्बन्धिनी देवता तेनैव त्यक्तुरपीत्यर्थः। त्यक्तुरपि देवतासम्बन्धे भाष्यकृतः संमतिमाह * यथेति * आग्नेयो ब्राह्मणः स सोमेनेष्ट्वा ऽग्नीषोमीयो भवति यद्वेवादः पौर्णमासे हविस्तत्तर्ह्यनुनिर्वपेत्तर्हि स उभयदेवतो भवतीत्यनेन सोमयागादूर्ध्वं ब्राह्मणो ऽग्नीषोमदेवतो भवतीत्यभिधानादग्नीषोमीयहविर्मात्रमुत्कृष्यते न दर्शपौर्णमासौ नापि नापि कृत्स्ना पौर्णमासीत्युक्तेः कथं पुरुषस्य देवतान्वय इत्याशङ्कैतत्पञ्चमे भाष्यकृतोक्तं दूषणमुपसंहरति * तस्मादिति * स्वयमुदाहरणान्तरमाह * अत इति * नन्वग्न्यादिगुणस्य ब्राह्मणादिष्वदर्शनात् कथमत्र गौणप्रयोगोपपत्तिरित्याशङ्क्याह * अग्निरिति * भाष्यकृता गुणवादनिमित्ताभिधानावसरार्थं को गुणवाद इत्यनेन वादशब्दमुद्यतइति कर्मव्युत्पत्त्या ऽभिधेयवाचिनमङ्गीकृत्य कर्मधारये को गुणो विवक्षित इति पृष्ट्वाग्निसम्बन्ध इत्यनेनाग्नेयशब्दवाच्यस्याग्निदेवत्यस्य हविषो ऽग्निसम्बन्धो गुणो ब्राह्मणे विवक्षित इत्युत्तरे दत्ते कथं ब्राह्मणस्याग्निसम्बन्ध इति पृष्ट्वा तदुत्तरत्वेन जातिशब्दव्याख्यानाय * एकजातीयत्वादित्युक्तम् * तत्सामान्यवाचितया जातिशब्दव्याख्यानार्थमिति शङ्कां निवर्त्तयितुमाह * जातिरिति * जातिशब्दस्याद्यभावविकारवाचित्वज्ञापनार्थं जन्मेत्युक्तं जायते ऽस्मादिति व्युत्पत्त्या प्रकृतिवाचित्वज्ञापनायोपादानशब्देनोत्पत्तिहेतुः प्रकृतिरुक्ता। तच्छब्दानुषङ्गेण तस्य मुख्यस्याग्नेर्या जातिः प्रकृतिः सैव यस्य ब्राह्मणस्य जातिरिति पूर्ववद्व्यधिकरणबहुव्रीहिणा तज्जातिशब्देन द्वयोरेकजातीयतोक्ता भवतीति कृत्वैकजातीयत्वं भाष्यकृतोक्तम्। ननु संसारानादित्वेनाग्निब्राह्मणादेः प्रजापतिमुख्यादिप्रकृतिकत्वं नास्तीति किमेकजातीयकत्वमिति भाष्येणाशङ्क्यार्थवादोपन्यासस्याशङ्कानिरासार्थत्वं सूचयितुमाह * यद्यपि चेति * अन्तरशब्देनाग्नेयो ब्राह्मण इत्यस्याग्नेयमष्टाकपालं निर्वपेत् ब्राह्मणो ब्रह्मवर्चसकाम इति विध्यन्तरशेषत्वेनार्थवादत्वसिद्धान्तानुसन्धानं सूचितम्। एकस्मिन्निति भाष्यतात्पर्यं वक्तुमिहेत्युक्तम्। इहोदाहरणे ऽग्न्यादिशब्दस्य ब्राह्मणादौ प्रवृत्तिनिमित्ततां प्रतिपत्स्यतइत्यर्थः। स्वरूपार्थस्त्वग्निर्हीत्यनेनैवानागतावेक्षणेनोक्तः॥

॥ यूपादिशब्दानां यजमानस्तुत्यर्थत्वाधिकरणम्॥ १४॥

सारूप्यात् ॥ २२ ॥

लिङ्गसमवाया इति द्वन्द्वसमासे प्रथमाबहुवचनदर्शनात् तत्सिद्धिश्च जातिश्च सारूप्यं च प्रशंसा च भूमा च लिङ्गसमवायश्चेति प्रथमयैव सर्वत्र विगृहीतव्ये ऽपि प्रस्तरादेर्यजमानादिसारूप्यं तत्कार्यकरत्वादिधर्मसामान्यात् सम्भवदपिशब्दस्य तत्कार्यकरत्वादिमात्रे पर्यवसानेन शाब्दबुद्धिविषयत्वाभावात् अविषयस्य च प्रतिपादनात्मकशब्दप्रवृत्तिनिमित्तत्वायोगात् न शब्दप्रवृत्तिनिमित्तं यूपस्य स्वादित्ययजमानसारूप्यं शब्दप्रतीतिविषयत्वाच्छब्दप्रवृत्तिनिमित्तमिति वैषम्यं दर्शयितुं पञ्चम्यध्याहृता गुणाश्रयशब्देन सर्वेषां गौणत्वनिमित्तत्वे ऽभिहिते पुनः सारूप्यस्य निमित्तत्वाभिधानाच्छाब्दबुद्धिविषयत्वात्मकनिमित्तत्वविशेषप्रतीतमेवाशयं शङ्कापूर्वकं विवृणोति * नन्विति * सारूप्यं विना गौणत्वाभावात्तस्य गौणत्वनिमित्तत्वे ऽपि बोधकत्वातिरिक्तायाः शब्दस्य वृत्तेरभावान्निर्विषयायाश्च बुद्धेरसम्भवाच्छाब्दबुद्धिविषयस्यैव शब्दवृत्तिनिमित्तत्वं वाच्यम् । न शब्दतात्पर्यावधारणं विना शाब्दबुद्धिविषयत्वं युक्तम् । तत्कार्यकरत्वादिनिमित्ते च सारूप्ये तन्मात्रपर्यवसितस्य शब्दस्य तात्पर्यावधारणमशक्यम् । इह तु प्रत्यक्षत्वेन सारूप्यस्य प्रथमं प्रतीतेस्तत्रैव शब्दस्य तात्पर्यावधारणाच्छाब्दबुद्धिविषयत्वेन शब्दप्रवृत्तिनिमित्तत्वं युक्तमित्याशयः । चक्षुर्ग्राह्ये सादृश्ये तात्पर्याख्यविवक्षावधारणसम्भवात् शाब्दबुद्धिविषयत्वरूपशब्दप्रवृत्तिनिमित्तत्वविशेषाभिधानार्थं तत्कार्यकरत्वादिहेतुकेभ्यः सद्भावमात्रेण गौणत्वनिमित्तेभ्यः सादृश्येभ्यो ऽस्य पृथगसाधारण्येनेहोपादानमित्यर्थः । अशक्यत्वादिति सिद्धान्तभाष्यं यजमाने ऽपि पशोर्बन्धुं शक्यत्वात् अयुक्तमाशङ्क्याह * यजमानस्य हीति * खलेवालीवद्यूपस्यैव यूपकार्ये विधानात् यूपनिष्पत्तिमात्रापवर्गिणां धर्माणां निवृत्तावप्युत्तरवेदेः प्राग्देशे पशुधारणस्य निखननस्य च पशुनिरोधार्थत्वेन यूपकार्यान्तःपातात्तत्कार्यापन्ने यजमाने प्राप्ते दक्षिणोपविष्टस्य पदार्थकरणविरोधप्रसङ्गादशक्यतेति भावः । आदित्यस्य यूपकार्यार्थत्वनिरासः कस्मान्न कृत इत्याशङ्क्य स्पष्टत्वादिति सूचयितुमाह * सहस्ररश्मेस्त्विति * ननु दारुमय्यामादित्यप्रतिकृतौ शक्यं पशुबन्धनमित्याशङ्क्याह * यदि चेति * प्रतीयमानयूपोच्छ्रयणविध्येकवाक्यत्वत्यागापत्तिदोषसूचनार्थम् * नास्तिक्यादित्युक्तम् * ननु श्येनचितं चिन्वीतेत्यादौ सादृश्यसम्पत्तेरपि विधिविषयता

इष्टेत्याशङ्क्याह * तदिति * स्तुतौ गौणत्वसम्भवे विधौ तदाश्रयणं न युक्तमित्याशयः ॥ ३२६।१

॥ अपश्वादिशब्दानां गवादिस्तुत्यर्थत्वाधिकरणम् ॥ १५ ॥

प्रशंसा ॥ २२ ॥

गोअश्वान् प्रशंसितुमित्यादिभाष्यात् प्रशंसायाः प्रयोजनत्वेन रामस्येव वेतनदाने निमित्ततोक्तेत्याभाति तस्याश्च सर्वत्र प्रयोजनत्वाविशेषादिहोपादानमनर्थकमित्याशङ्कते * नन्विति * नात्र प्रयोजनत्वेन निमित्तत्वं विवक्षितं किं तु प्रसह्यकारित्वादिवदभिधेयलक्ष्यमाणगुणत्वेनेत्याशयेन परिहरति * फलमिति * ननु गवाश्वव्यतिरेकेष्वजादिष्वपि पशुशब्दप्रवृत्तौ प्रशंसाया निमित्तत्वं न सम्भवति गवाश्वावुपादेयत्वेन विहितौ प्रशंसितुमन्यान्येषां निन्दाया विवक्षितत्वात् इत्याशयेन कथं प्रशंसाप्रवृत्तिनिमित्तत्वमिति पृच्छति * कथमिति * नञ्समासावयवभूतस्य पशुशब्दस्य समासान्तर्गत्या ऽजादिषु प्रवृत्तौ प्रशंसानिमित्तमित्याशयेनोत्तरमाह * गवेति * नञ्समासावयवभूतेन पशुशब्देन प्रशस्ततां लक्षयित्वा नञ्समासेनान्यपशुषु तदभावः कथ्यतइत्यर्थः । ननु पशुशब्दस्य नञ्समासे कृते निषेधपर्यवसायित्वादकृते च परशब्दत्वाभावान्न प्राशस्त्यलक्षणार्थता युक्तेत्याशङ्क्य * पूर्वमित्युक्तम् * समासविध्यर्थं तद्योग्यार्थलक्षणा गङ्गावास्यादिशब्दवदविरुद्धेत्याशयः । नन्वजादेरपि पयोदानाद्युपकारित्वेन प्राशस्त्यसद्भावान्निषेधानुपपत्तिरित्याशङ्क्य * गवेत्युक्तम् * गवाश्वान्यत्वोक्त्या तद्गतप्राशस्त्यातिशयलक्षणार्थतावसीयतइत्याशयः । उदाहरणान्तरविषयावादिशब्दौ। ननु पशुत्वाभाव एव नञ्समासेन कस्मान्न कथ्यतइत्याशङ्क्याह * नेति * पशुत्वस्यायं निषेधस्तल्लक्षितस्य वा यागादिकार्यस्य पुत्रकार्यमकुर्वतीव पुत्रे न ममैष पुत्र इति । तत्राद्ये प्रत्यक्षविरोधो द्वितीये ऽग्नीषोमीय इत्यादिवचनविरोध इत्यर्थः । अनेन चोत्पत्तिरनर्थिकास्यादिति भाष्यावयवगतेनोत्पत्तिशब्देन प्राथम्यगुणायोगात्पशुयज्ञसत्रग्राहिप्रत्यक्षमुक्तम् तस्य च निर्विषयत्वापत्तिः स्वरूपनिषेधे ऽनर्थिकेत्यनेनोक्ताम् कार्यनिषेधे वचनविरोधो विध्यन्तरं चेत्यनेनोक्त इति व्याख्यातम् । ननु विकल्पाङ्गीकरणेन विरोधः परिहरिष्यते ऽत आह * न चेति * नन्वगत्या वैषम्ये ऽपि विकल्पः स्यादित्याह * स्तुत्या चेति * न च मुख्यार्थत्यागापत्तेस्तुत्यर्थत्वासम्भवः । कार्यलक्षणायामपि तुल्यत्वादित्याह * तुल्य-

श्चेति * गवाश्वव्यतिरिक्तस्य च पशुकार्यकरत्वनिषेधे पारिशेष्यात् गवाश्वस्य पशुकार्यकरत्वसिद्धेस्तदुपादानानर्थक्यम् । प्राशस्त्यनिषेधे तु गवाश्वगतं प्राशस्त्याविषयत्वं निषेधस्य ज्ञापयितुं पशुशब्दस्य गवाश्वशब्दसामानाधिकरण्योपादानमनर्थकमित्याशयेनाह * पशव इति * ननु पशुस्वरूपस्य तत्कार्यस्य वा निषेधासम्भवे ऽपि पशुगता क्रिया गुणो वा अजादौ निषेत्स्यतइत्याशङ्क्याह * न चेति * पशुमात्रवर्तिक्रिया गुणसामान्यं वा निषिध्येत गवाश्वगताः क्रिया गुणविशेषा वा आद्ये पूर्ववत्प्रत्यक्षविरोधः द्वितीये योग्यानुपलब्धितो ऽपि ज्ञातुं शक्यत्वान्मन्दफलत्वम् अन्यगतस्य विशेषस्यान्यत्रासम्भवादन्यशब्देनैव सिद्धेरत्यन्तानर्थक्यमित्यर्थः । ननूक्तेन प्रकारेण नञ्समासस्य निषेध्यान्तरासम्भवात्प्राशस्त्यस्य निषेधकत्वे प्रशंसालक्षणार्थत्वाभावान्न प्रशंसोदाहरणत्वं युक्तमित्याशङ्कानिरासाय श्लोकगतपूर्वशब्दोक्तम् निषेधान्वयात् प्राक् समासावयवभूतेन पशुशब्देन प्राशस्त्योपादानमुपपादयति * अवश्यं चेति * नन्वेवं सति केवलस्य पशुशब्दस्य मुख्यार्थत्वसम्भवात्प्राशस्त्यलक्षणा न युक्तेत्याशङ्क्याह * न चेति * निषेधान्वयायोग्यत्वान्न मुख्यो ऽर्थः सम्भवतीत्याशयः । ननु प्राशस्त्यस्यापि क्रियागुणवत् पशुमात्रवर्त्तिनो निषेधाशक्तेर्गवाश्वगतस्य च प्राशस्त्यस्याप्रतीतेर्निषेधो न सम्भवतीत्याशङ्क्याह * शक्नुवन्ति चेति * गवाश्वशब्दसमभिव्याहारात् गवाश्वगतप्राशस्त्यातिशयप्रतीतिरित्यर्थः । ननु पशुशब्दोदाहरणे पशवो गो अश्वा इति गवाश्वपदसामानाधिकरण्येन पशुशब्दोपादानात्तद्गतप्राशस्त्यातिशयप्रतीतिसम्भवे ऽप्ययज्ञाऽसत्रशब्दोदाहरणयोः सामवच्छन्दोमवच्छब्दसामानाधिकरण्येन यज्ञसत्रशब्दानुपादानात्कथं तद्गतप्राशस्त्यातिशयप्रतीतिरित्याशङ्कानिराससूचनयादिशब्दः सामरहितस्य वा यज्ञत्वे ऽभिहिते छन्दोमरहितस्य वा सत्रत्वे ऽभिहिते ऽर्थात् सामवान् यज्ञः छन्दोमवत्सत्रमिति सामानाधिकरण्यप्रतीतेः । सामवच्छन्दोमवत्तद्गतप्राशस्त्यातिशयावगतिः सम्भवतीत्याशयः । ननु पशुषु हिताहितविवेकराहित्यादिदोषदुष्टत्वेनाप्राशस्त्यस्यापि भावात्तस्यापि च निषेध्यत्वोपपत्तेरेकान्ततः पशुत्वेन प्राशस्त्यस्य लक्षयितुमशक्यत्वात् नेहँ प्रशंसाया गुणवादनिमित्तत्वाभिधानं युक्तमित्याशङ्क्याह * यद्यपीति * पुरस्तात्प्रतीचीनमश्वस्योपदधाति पश्चात्प्राचीनमृषभस्येति गवाश्वविधिप्रक्रमेण तदप्राशस्त्यानपेक्षितत्वात् तदपेक्षितगवाश्वप्राशस्त्यसिद्ध्यर्थं पश्वन्तरप्राशस्त्यस्यैव निषे-

धार्हतेत्यर्थः। ननु पश्वन्तरप्राशस्त्यनिषेधस्य तन्निन्दार्थत्वात् निन्दा-
याश्च विधिनानपेक्षणात् न गवाश्वविधिना ऽन्वयः सम्भवतीत्याश-
ङ्क्याह*तदिति * गवाश्वप्राशस्त्यख्यापनार्था पश्वन्तरानिन्देत्याशयः।
पश्वन्तरप्राशस्त्यनिषेधेन गवाश्वप्राशस्त्यख्यापनात्तेषामपि च प्राश-
स्त्यसद्भावेन तन्निषेधायोगात् कथं तद्द्वारेण गवाश्वप्राशस्त्यख्या-
पनामित्याशङ्क्य गवाश्वगतप्राशस्त्यातिशयः पश्वन्तरे निषिध्यतइति
सूचनार्थस्तरप्प्रत्ययः पश्वन्तरस्य हि प्राशस्त्यातिशये निषिद्धे तत्स-
द्भाव एव गवाश्वस्य ख्यापितो भवति अनेन च गोअश्वान् प्रशंसि-
तुमित्यादिभाष्यं पश्वन्तरे प्राशस्त्यनिषेधस्य गवाश्वप्राशस्त्यख्या-
पनपर्यवसानाभिधानार्थत्वेन व्याख्यातं तरपा सूचितमर्थं विवृणो-
ति * एतदिति * पश्वन्तरेष्वपशुशब्दप्रवृत्तेः प्रशंसाया निमि-
त्तत्वमुपसंहरति * एवमिति * गवाश्वादिगता प्रशंसा यस्या प्रति- ३२७।२
षेधस्यापशुशब्दस्य पश्वन्तरेष्वपशुशब्दप्रवृत्तौ निमित्तं स तथोक्तः।
ननु पश्वन्तरप्राशस्त्यानिषेधस्य गवाश्वप्रशंसार्थत्वात्कथं प्रशंसा-
या निषेधं प्रति निमित्ततेत्याशङ्क्याह *सा चेति * शब्देनार्थप्रति-
पादने कृते तस्य कैमर्थ्याकाङ्क्षायां विध्येकवाक्यत्वेन प्रशंसार्थत्वं
कल्पनीयम् परशब्दस्य परत्र प्रवृत्तेर्निमित्तमन्तरेणासम्भवात् प्रथ-
ममेव गवाश्वगता प्रशंसा प्रवृत्तिनिमित्तत्वेनाश्रितेति कृ-
त्वा प्रशंसानिमित्तः प्रतिषेध इत्यन्तेनान्वयः । प्रयो-
जनत्वाभिधानं तर्हि विरुध्येतेत्याशङ्क्याह * अनन्येति * प्रशंसां
निमित्तीकृत्य पश्वन्तरेष्वपशुशब्दे प्रवृत्ते पश्वन्तरप्राशस्त्यनिषेधस्य
कैमर्थ्यापेक्षायां प्रयोजनान्तरासम्भवान्निमित्तभूतैव प्रशंसाप्रयोज-
नतया शब्दप्रवृत्तेः पश्चादवगम्यतइत्यर्थः । ननु यजमानादिशब्दाना-
मपि प्रस्तरादिषु प्रवृत्तौ प्रशंसानिमित्तं कस्मान्नेत्याशङ्क्याह *
अन्यत्र पुनरिति * शब्दप्रवृत्तेः प्रथममप्रतीतत्वात् प्रशंसाया नि-
मित्तत्वं न सम्भवतीत्याशयः ।

॥ अथ बाहुल्येन सृष्टिव्यपदेशाधिकरणम् ॥ १६ ॥

भूमा ॥ २२ ॥

सृष्टिमन्त्रका उपदधातीति भाष्यावयवात् पदद्वयस्यापि विधित्वाशङ्कानिरासः प्रतिभाति तच्च समस्तवाक्यार्थानर्थक्यापत्तेरयुक्तमित्याशङ्क्योपधानानुवादेन शब्दविधिः पूर्वपक्षिणो ऽपि मतो

---

१ तरप्प्रतिषेधेति २ पु० पा० ।
२ इत्यतीतेनेति २ पु० पा० ।

निरस्यते । स्वयमातृण्णायास्तु सबीजत्वायाख्यातोपन्यास इति सूचयन् यदीति भाष्यं व्याचष्टे * यदीति * तत्रेत्याशङ्काभाष्यं व्याचष्टे * तत्रेति * तद्वानासामुपधानो मन्त्रइतीष्टकासु लुक् च मतोरिति स्मृतेः । स्वयमातृण्णाभिधायिमन्त्रैरुपधेयानामिष्टकानां स्वयमातृण्णाशब्दवाच्यत्वावगमे ऽपि कासामिष्टकानां स्वयमातृण्णामन्त्रैरुपधानमिति विशेषानवगमात् वाक्यान्तराद्वा विशेषावगमे सत्येतद्वाक्यानर्थक्यापत्तेर्नोपधानानुवादेन स्वयमातृण्णासंज्ञकेष्टकाविधिर्विशिष्टविधिर्वा सम्भवतीत्याशयः । ननूपधानानुवादेनेष्टकाविधेरिष्टकाविशिष्टोपधानविधेर्वानुपपत्तावप्युपधानानुवादेन स्वयमातृण्णालिङ्गमन्त्रविधिर्भविष्यतीत्याशङ्कानिरासार्थं तत्र सर्वासामितिभाष्यं व्याचष्टे * तत्रेति * पूर्वपक्षनिरासभाष्यं व्याख्याय तस्मादिति सिद्धान्तभाष्यं व्याचष्टे * तस्मादिति * भाष्योक्तं सिद्धान्तमाक्षिपति * अत्रेति * उपधानस्याविधेयत्वान्मन्त्रविधेश्च मन्त्राम्नानानुमेयत्वेन प्रदेशान्तरस्थत्वाद्विध्येकवाक्यकल्पत्वाच्चार्थवादत्वस्य तदभावान्नायमर्थवाद इत्यर्थः । विध्येकवाक्यत्वं च विनार्थवादत्वानुपपत्तिर्येन विधीयते तस्य शेषो ऽर्थवाद इति प्रथनार्थवादे ऽभिधानाद्भाष्यकृतो ऽप्यभिमतेत्याह * तथा चेति * भाष्योक्ते ऽर्थवादत्वे निरस्ते यदि कश्चित्प्रकरणप्राप्तमन्त्रेषु पुनः श्रुतेरभ्यादानमन्त्रवद् गुणार्थत्वं शङ्केत तदपि मन्त्रव्यतिरिक्तगुणाश्रवणादयुक्तमित्याह * न चेति*मन्त्रान्तरपरिसंख्यार्थता तु मन्त्रान्तरानर्थक्यापत्त्यैव निरस्तेत्याह * तत्रेति * तस्माद् ग्रहणादिकार्यान्तरपरिसंख्यार्थो ऽयमुपधाने मन्त्रविधिरिति पूर्वपक्ष एव ज्यायानित्युपसंहरति * तत्रेति * नन्वनुपधीयमानाभिरिष्टकाभिश्चयनस्य कर्त्तुमशक्यत्वादिष्टकाभिरग्निं चिनुतइति इष्टकासाध्यतया विहितेन चयनेनेष्टकोपधानस्यार्थादाक्षेपाद्विधानानर्थक्यमिति शङ्कामनुभाषणपूर्वकं निराकरोति * चयनेनेति * व्यूहविशेषेण च स्थापनमुपधानं तद्विधानाभावे यथाकथं चित्स्थापने ऽपि चयनं सम्भवति समुदितानामपि च स्थापनोपपत्तेर्न प्रत्येकं स्थापनसिद्धिरित्यर्थः । ननु समुदितोपधानस्यापि सम्भवात्तदपि कथं प्रत्येकं सिध्येदिति शङ्कते * नन्विति * विहितत्वेन तस्याङ्गत्वात् प्रतिप्रधानमावृत्तिर्न्यायात्सेत्स्यतीति परिहरति * नेति * उपादेयत्वेनाङ्गत्वं लक्षितम् अर्थाक्षेपस्य श्रुत्यनुमानेन विलम्बितत्वादप्राप्तावस्थस्योपधानस्य शीघ्रप्रवृत्तिना प्रत्यक्षविधिना विधानोपपत्तेर्निष्प्रयोजनत्वमात्रेणाविधानं वक्तव्यम् । अस्तित्वे काध्वर्युकर्तृकत्वसिद्धिर्विधेः प्रयोजनमित्याह * अपि चेति * आध्वर्यवसमाख्यातचयनविधिनापि कल्पितस्योपधा-

नविधेरसमानत्वात्तादृशे चाभियुक्तैराध्वर्यवादिशब्दाप्रयोगेणाध्वर्यवसमाख्यानालाभादध्वर्युकर्तृकत्वं न लभ्यतइत्युक्तम्। ननु चयनस्य समाख्ययाध्वर्युकर्तृकत्वात्तस्य चोपधानादृते ऽध्वर्युणा कर्त्तुमशक्यत्वात् उपधानस्याध्वर्युकर्तृकत्वं लभ्यतइत्याशङ्क्यैककर्तृकत्वं चेत्युक्तम्।अन्यसहायेनापि सन्धुक्षणादाववान्तरव्यापारे कृते देवदत्तेन पाकः कृत इति लोके व्यपदेशादुपधाने ऽन्यसहायेनापि कृते चयनस्याध्वर्युकर्तृकत्वप्रसिद्धेर्नैकाध्वर्युकर्तृकत्वं सेत्स्यतीत्याशयः। एवं तु सर्ववाक्येपूपधानमात्रविधानात् अभ्यासन्यायेनोपधानभेदापत्तेः सकृद्विहितस्यापि चेष्टकाः प्रत्यङ्गत्वात्प्रतीष्टकमावृत्तिसिद्धेरसकृद्विधिप्रयोजनाभावेनापरितोषात्स्वमतेनार्थाक्षिप्तोपधानानुवादेन मन्त्रविधिरिति पूर्वपक्षमेव न्याय्यं मत्वा प्रकरणप्राप्तमन्त्रेषु पुनः श्रुतेर्मन्त्रान्तरपरिसंख्यार्थत्वासम्भवे ऽपि ग्रहणादिकार्यान्तरपरिसंख्याप्रयोजनत्वं दर्शयितुमाह * न चेति * ग्रहणादीना- ३२८।२
मपि चयनचोदनाक्षिप्तत्वाविशेषेणोपधानतुल्यत्वात् लिङ्गविशेषरहितानां मन्त्राणां प्रकरणादुपधाने ग्रहणादिषु च प्राप्नुवतामुपधानसम्बन्धः पुनःश्रवणमश्वाभिधान्यादानसम्बन्धपुनःश्रवणवत् कार्यान्तरपरिसङ्ख्यार्थं न त्वाज्यभागपुनःश्रवणवदङ्गान्तरपरिसङ्ख्यार्थं येन मन्त्रान्तरानर्थक्यमापद्यतेत्याशयः। पञ्चमे तु मध्यमायां तु वचनात् ब्राह्मणवतीत्यत्र यां वै काञ्चन ब्राह्मणवतीमिष्टकामभिजानीयात्तां मध्यमायां चितावुपदध्यादिति वचनवशेनाभिपूर्वस्य जानातेः प्रत्यक्षज्ञानवाचित्वात् प्रत्यक्षब्राह्मणविहितानाम् इष्टकानामध्यमचित्याश्रयत्वस्य वक्ष्यमाणत्वादिष्टकानां चोपधानकरणभूतमन्त्रान्वयं विना निरूपणाशक्तेस्तद्द्वारेणैव विधेयत्वान्मध्यमाचित्याश्रयत्वसिद्धिरप्युपधानसम्बन्धितया मन्त्रविधेः प्रयोजनं भविष्यत्याह * अपि चेति * मन्त्राणामुपधानसम्बन्धो विधेय इत्यर्थः। अनारभ्याधीतानां च मन्त्राणां प्राकरणिकसामान्यसम्बन्धासम्भवातदपेक्षलैङ्गिकविनियोगानुपपत्तेरप्राप्तविधिरेव भविष्यति इत्याह * ये त्विति * ननु सृष्टिमन्त्राणां विधानाभ्युपगमे ऽर्थवादत्वसिद्धान्तो भज्येतेत्याशङ्क्याह * न चेति * गुणाश्रया इति सूत्रान्ते गुणवादनिमित्तत्वाभिधानदर्शनात्तादर्थ्यनिश्चयसूचनार्थः सूत्रावयवे सूत्रशब्दः सकलसूत्रविषयत्वे वा तल्लिङ्गे तत्सिद्ध्यादेरप्युपलक्षणार्थम्। ननु भूमेत्येतावदेव सूक्तं तत्सिद्ध्यादेरेकसूत्रत्वेनादौ पठितत्वाद् देवतावतश्चावाचकत्वात् तिसृभिरस्तुवत ब्रह्मासृज्यत ब्रह्मणस्पतिरधिपतिरासीदित्यादिष्वाद्यचतुर्दशान्त्यव्य-

तिरिक्तेषु चतुर्दशसु सृजधातुयोगात् सृष्टिलिङ्गेष्वेकया स्तुवतप्रजाधीयन्त प्रजापतिरधिपतिरासीत्सप्तविंशत्या स्तुवत द्यावापृथिव्यौ तां वसवो रुद्रा आदित्या अनुव्यायंस्तेषामाधिपत्यमासीत् त्रयस्त्रिंशता स्तुवत भूतान्यशाम्यन् प्रजापतिः परमेष्ठ्यधिपतिरासीदित्याद्यचतुर्दशान्त्येषु त्रिष्वसृष्टिलिङ्गेषु भूयस्त्वनिमित्ता सृष्टिशब्दस्य प्रवृत्तिरित्येतावन्मात्रस्यानेन सूत्रेण कथनात् नार्थवादत्वं प्रतिपाद्यतइत्यर्थः । ननु भाष्यकृतार्थवादत्वस्योक्तत्वात् सूत्रस्यापि तात्पर्यमवसीयतइत्याशङ्क्याह * अत इति * युक्त्यागमानुपेतत्वादुपेक्ष्यं तद्भाष्यमित्याशयः । किमर्थं तर्हि भाष्यकृतार्थवादतोक्तेत्यपेक्षायामाह * भाष्यकारेण त्विति * एतमेव भाष्यकाराभिप्रायं प्रकटयितुमपि चेतिभाष्यं व्याचष्टे * एकयेति * प्रतीकेन सप्तदशमन्त्रसमुदायात्मकसर्वो ऽनुवाको गृहीत इति सूचनार्थो ऽनुवाकशब्दः । मुख्यलक्षणायाः क्व चिददृष्टत्वादत्यन्तानौचित्यसूचनायाद्यशब्दः आत्मत्यागान्यद्वारस्वीकारयोरिव स्वार्थस्यापि त्यागान्यद्वारस्वीकारयोरत्यन्तानौचित्यसूचनार्थं शब्दार्थयोरभेदोपचारेण स्वार्थविषयावात्मशब्दौ सृष्टीरुपदधातीत्युपक्रम्यैकया स्तुवतेत्यादिसप्तदशमन्त्रोपधानसाधनिकानामिष्टकानां प्रत्येकं स्तुतिं कृत्वा यत्सप्तदशेष्टका उपदधातीत्युपसंहारात् सृष्टिशब्दस्य सप्तदशमन्त्रविषयत्वावगते स्ववाच्यसृष्टिलिङ्गमन्त्रमात्रपरत्वे तद्बाधप्रसङ्गात्स्वार्थपर्यवसायित्वत्यागेनेतरा सृष्टिलिङ्गमन्त्रलक्षणार्थता वाच्यलक्षितसमुदायद्वारा स्यात् समुदायस्य चैकार्थ्याभावेनोपधानप्रकाशकत्वानुपपत्तेस्तत्रापि पर्यवसानासम्भवात् तदितरमसृष्टिमन्त्रवाच्यसृष्टिमन्त्रलक्षितसमुदायद्वारेण लक्षयित्वा सृष्ट्यसृष्टिमन्त्रलिङ्गमन्त्रसमुदायसम्बन्धित्वाविशेषादसृष्टिमन्त्रवत् स्वार्थसृष्टिमन्त्रो ऽपि तात्पर्यतः सृष्टिशब्देन प्रतिपादनीय इति षष्ठ्यन्तं तृतीयान्तं सृष्टिशब्दमध्याहृत्य योज्यम् । स्वरूपाभिधानस्य शून्यवादवार्त्तिकेन निरस्तत्वादजहत्स्वार्थत्वस्य चात्रैवोक्ते वक्ष्यमाणत्वात्[१] वाच्येन च समुदायलक्षणया मन्त्रगणं लक्षयेदिति भाष्ये वक्ष्यमाणत्वादेवं व्याख्यातम् । अनेन चैकया स्तुवतेत्यत्रानुवाके याः सृष्टयस्तन्मात्रपर्यवसानरूपेण त्यक्त्वा तत्र[२] तत्सृष्ट्यसृष्टिसमुदायं लक्षयित्वा पश्चादितराभिः सहितास्तात्पर्यतः सृष्टिशब्दो लक्षयेत्प्रतिपादयेदित्येवं भाष्यं व्याख्यातम् । नन्वित्याशङ्कानिरासार्थं नानुवादेति भाष्यं व्याचष्टे

१ वक्ष्यमाणत्वादिति २ पु० ना० ।
२ ताभिरिति २ पु० ना० ।

* उपधानेति * कथं त्विति भाष्यं तल्लिङ्गेति सूत्रावयवेनैव व्याख्यातत्वान्न व्याख्यातम् ।

॥ अथ प्राणभृदादिशब्दानां स्तुत्यर्थताधिकरणम् ॥ १७ ॥

[1]लिङ्गसमवायात् ॥ २२ ॥

ननु सृष्टिशब्दस्योपधानविधिशेषतयार्थवादत्वं युक्तं प्राणभृदादिवाक्येषु तु सृष्टिवाक्यविहितत्वेनोपधानस्य विधातुमशक्यत्वान् विध्येकवाक्यत्वं च विनार्थवादत्वायोगाद् गुणाश्रवणाच्च प्रकरणप्राप्तमन्त्रपुनःश्रुतेस्तादर्थ्यस्यापि कल्पयितुमशक्यत्वात् परिसंख्यार्थत्वे च मन्त्रान्तरानर्थक्यापत्तेः प्राणभृदादिशब्दस्य न किञ्चित्प्रयोजनमित्याशङ्क्याह * सृष्टिवदिति * सृष्टौ यथास्माभिर्ग्रहणादिकार्यान्तरपरिसंख्यामध्यमचित्याश्रयत्वसिद्धिश्चोपधानसम्बन्धितया मन्त्रपुनःश्रुतेः परिहारो ऽस्य चोद्यस्योक्तस्तथात्रापि वक्तव्यः । भाष्यपक्षे त्विदं चोद्यं यथा प्राणभृदादिष्वपरिहार्यं तथा सृष्टावपि विशेषाभावेन प्राणभृद्वाक्यविहितत्वात् सृष्टिवाक्यमुपधानस्याविधायकम् इत्यपि वक्तुं शक्यत्वादिति द्वन्द्वनिर्देशेन सूचितम् । ननु वाच्यैकसमुदायिलक्षितसमुदायद्वारा समुदाय्यन्तरे शब्दवृत्तेरुभयत्र तुल्यत्वान्नोदाहरणभेदो युक्त इत्याशङ्क्याह * अल्पैरिति * अयमाशयः शब्दस्य प्रवृत्तिर्नाम बोधकत्वमेव निर्विषयायाश्च बुद्धेरसम्भवात् बुद्धिविषयस्यैव प्रवृत्तिनिमित्तत्वं वाच्यम् । अत एवाभिधेयगुणयोगेन सारूप्यं सर्वत्र सम्भवदपि आदित्यो यूप इत्यत्रैव बुद्धिविषयत्वादुक्तं नान्यत्र न हि यजमानः प्रस्तर इत्यत्र यजमानसदृशः प्रस्तर इति बुद्धिरुदेति तत्कार्यकारित्वमात्रबुद्धेर्ब्राह्मणस्याप्यर्थवादवशात् प्रजापतिमुखजातत्वमात्रबुद्धिरजादौ गवाश्वगतप्राशस्त्याभावमात्रबुद्धिः यूपे त्वादित्यसारूप्यमात्रबुद्धेः सारूप्यं प्रवृत्तिनिमित्तमुक्तम् तेनेहापि सृष्टिशब्दात् सृष्टिबाहुल्यबुद्धेस्तस्यैव प्रवृत्तिनिमित्तत्वं प्राणभृच्छब्दात्तु प्राणभृल्लिङ्गसमवायमात्रबुद्धेस्तस्यैव प्रवृत्तिनिमित्तत्वाद्भेदेनोपादानं युक्तमेवेति भूयस्त्वाप्रतीतिप्रदर्शनार्थो ऽल्पशब्दः भूयस्त्वानपेक्षस्य लिङ्गसमवायमात्रस्य निमित्तत्वसूचनायैव लिङ्गसमवायादिति पञ्चम्युदाहृता एकेनेति भाष्येण लिङ्गशब्दं चिन्हार्थत्वेन व्याख्याय ननु सम्बन्धं विना लिङ्गत्वायोगात् लिङ्गशब्देनैव समवायशब्दोक्तसम्बन्धसिद्धेः समवायशब्दो ऽनर्थक इत्याशङ्क्य न चायमित्यादिभाष्येण लिङ्गस्यापि स्वलक्षिते गणे ऽन्त-

१ द्वादशाधिकरणमारभ्य सप्तदशाधिकरणपर्यन्तमेकवर्णकमेव वार्तिके नाधिकरणभेदः ।

भावप्रतिपादनार्थत्वं समवायशब्दस्योक्तं तद्व्याचष्टे * स्वार्थेति * उभयत्रेत्यनेन भूम्न्यपि समवायशब्दानुषङ्गः सूचितः। मन्त्रगणलक्षणायां व्यापृतः प्राणभृदादिशब्दः किमिति स्वार्थं न जहाति इत्याशङ्कानिरासार्थत्वेन समवायशब्दव्याख्यानार्थं तद्गुण इतिभाष्यावयवं व्याख्यातुम् * उपादीयमानत्वादित्युक्तम् * सर्वसमुदायिव्यासक्तेन समुदायेन स्वसमवायितयेतरसमुदायिवल्लक्षकस्यापि समुदायिन उपादीयमानत्वात् स्वार्थापरित्याग इत्यर्थः। ननु सृष्टिशब्दस्याप्यभिधेयसृष्टिलक्षितसृष्टयसृष्टिसमुदायलक्षणगुणयोगेनासृष्टिषु प्रवृत्तेर्गौणत्वाद्गौण्यां च वृत्तावभिधेयसम्बन्धित्वरूपानादरात् सृष्टिलक्षितस्य समुदायस्य सृष्टिसमुदाय्यनादरेणासृष्टिष्वेव व्यासज्यवृत्त्युपपत्तेः कथं तेनाभिधेयानां सृष्टीनां लक्षणभूतानामुपादानमित्याशङ्कानिरासार्थं वृद्धवाक्यं पठति * आह चेति * लक्ष्यमाणगुणयोगनिमित्तवृत्तिस्वरूपगौणत्वलक्षणसद्भावात्सृष्टयादिशब्दानां गौणत्वे ऽपि स्वार्थासम्बद्धस्य समुदायाख्यस्य गुणस्य लक्षयितुमशक्यत्वात्। तस्य च व्यासज्यवृत्तित्वेनैकसमुदायित्यागे समुदायस्याप्यभावोपपत्तेः सर्वेषामपि समुदायिनामविशेषेणैवोपादानम् पैङ्गल्यादेस्तु सामान्यरूपेणाग्नित्वादिना लक्षितस्य प्रत्येकं पैङ्गल्यादिगुणव्यक्तिषु वृत्तेरग्न्यादिगतायाश्च पैङ्गल्यादिगुणव्यक्तेर्माणवकादावभावाद्युक्तो ऽग्न्यादिसम्बन्धानादर इत्याशयः। अभिधेयसम्बन्धादरानादरलक्षणे तु गौणी लक्षणा वृत्तिविवेके सृष्टयादिशब्दानामपि लक्षणावृत्तिरेवास्तु गौणत्वाभ्युपगमे न तु जहत्स्वार्थवृत्तित्वादिलक्षणान्तरनिरासार्थमिहोदाहरणम् श्लोकस्त्वेवं योज्यः। यत्र यजमानादिशब्दे लक्षणं यजमानाद्युपलक्षणमात्रीकृत्य तल्लक्ष्ये यजमानकार्ययागापूर्वनिष्पत्त्यादौ प्रस्तरादेर्यजमानादिसम्बन्धिसाङ्गप्रधानानुष्ठानसाध्यापूर्वनिष्पत्त्याख्यकार्यकरत्वाभावाद्यजमानादिसम्बन्धिरूपनिरपेक्षशब्दकार्यमर्थप्रत्यायनं नियुज्यते वाच्यसम्बन्धित्वानादरेण वाच्यगुणस्वरूपमात्रलक्षणे यत्र शब्दस्य तात्पर्यमित्यर्थः। तस्मिन् शब्दे लक्ष्यस्वरूपमात्रस्य शाब्दप्रतीतिविषयत्वेन ग्रहणं न तूपायमात्रतयावस्थितस्य लक्षणस्यापि यत्र सृष्टयादिशब्दे लक्षणभूतसृष्टयादिलक्षितेन सृष्टयादिसम्बन्धिना समुदायेन सृष्टयादित्यागे व्यासज्यवृत्तित्वाभावादात्मानमलभमानेन सृष्टयादेर्लक्षणस्यापि स्वाश्रयत्वेनोपादानं तत्र लक्ष्यलक्षणयोः शाब्दप्रतीतिविषयत्वेन ग्रहणमिति।

---

१ स्वार्थसमुदायिन इति २ पु० पा०।

॥ अथ वाक्यशेषेण सन्दिग्धार्थनिरूपणाधिकरणम् ॥ १८ ॥

## सन्दिग्धेषु वाक्यशेषात् ॥ २३ ॥

विध्युद्देशान्तर्गतानामप्युद्भिदादिपदानां विधानातिरेकेण नामधेयतयोपयोगे प्रतिपादिते ऽर्थवादानामपि स्तावकत्वातिरेकेण सन्दिग्धार्थनिर्णायकत्वेनोपयोगप्रतिपादनार्थं कल्पनैकदेशत्वादिति उत्तरसूत्रगतपदद्वयानुषङ्गेणैतत्सूत्रं प्रकरणान्तरत्वाच्चानन्तरसङ्गत्यभावे ऽपि न दोषः प्राणभृदादिशब्दानां वा लिङ्गसमवायात्तल्लिङ्गातल्लिङ्गेषु प्रवृत्तावुक्तायां घृतशब्दस्यापि घृताघृतोक्तेषु लिङ्गसमवायात् प्रवृत्तिः प्राप्तात्रापोद्यतइत्यनन्तरसङ्गतिरपि सम्भवति प्रतिपादितप्रामाण्योपयोगिद्वाराणामपि तद्विशेषोपयोगिद्वारान्तरप्रतिपादनात्पादाध्यायसङ्गतिरिति सूचयितुमाह * विधीति * निर्णयार्थत्वेन कल्पनाशब्दव्याख्यानाय *अवधार्यतइत्युक्तम् * अर्थवादस्य विधिगतसन्देहापनायकत्वेन साध्ये यद्वचा स्तुवते तदसुरा अन्वायन् इत्याद्यर्थवादगतस्तुतिनिन्दार्थत्वसन्देहापनायकत्वं य एवं विद्वान् साम्ना स्तुवीतेत्यादिविधेरर्थवादाधिकरणोक्तं दृष्टान्तयितुमेकत्रेतरेणेत्युक्तम् । ननूपक्रमानुरोधेनोपसंहारव्याख्यानस्य तृतीये वेदो वा प्रायदर्शनादित्यत्र वक्ष्यमाणत्वात्रोपसंहारस्थेनार्थवादेनोपक्रमस्थविध्यर्थनिर्णयो युक्त इत्याशङ्क्य * सन्दिग्धमित्युक्तम् * तत्रोपक्रमस्य वेदविषयत्वेन निश्चितत्वादुपसंहारगतानामृगादिशब्दानां तदनुरोधवृत्तिता युक्तेत्याशयः । ३२९।१
ननूपक्रमोपसंहारविप्रतिपत्त्यालोचनया सन्देहस्तत्राप्यस्तीत्याशङ्क्य * एकत्रेत्युक्तम् * सन्दिग्धशब्देनाव्यवस्थितार्थप्रतीतिरभिमता सा विध्युद्देशमात्रपरामर्शाद्भवन्ती ति वाक्यशेषावधारितया व्यवस्थया वार्यतइत्याशयः । निर्णीयतइति वक्तव्ये ऽवधार्यते पदं प्रयुञ्जानेनैतदेव सूचितम् । सन्दिग्धावधारणरूपप्रामाण्यविशेषोपयोगिद्वारान्तरप्रतिपादनाच्च पादलक्षणसङ्गतिः सूचिता । अनन्तरसङ्गतेस्त्वभावो यथा सृष्टिष्वसृष्टिषु चेति भाष्यसूचितत्वाद्वा स्पष्टत्वमनभिधानेन सूचितम् । एकदेशशब्दमेको ऽर्थो दिश्यते प्रतिपाद्यते याभ्यां विध्यर्थवादाभ्यां तावेकदेशौ तयोर्भावस्तत्त्वमिति व्युत्पत्त्यैकविषयत्वाभिधानार्थत्वेन व्याख्यातुं पूर्वार्द्धसंम्भवाय सदा शब्देन च स्तुतिनिरपेक्षस्य विधेरपर्यवसानमुक्तम् । प्ररोचनानपेक्षस्य विधेः पर्यवसानसम्भवे ऽर्थवादान्वयासम्भवात्प्रागेवार्थाक्षिप्तविशेषकल्पनया निर्णये कृते पश्चादर्थवादानर्थक्यपरिहाराय वैकृताङ्गवदन्यतराकाङ्क्षयार्थवादान्वये सत्यपि निर्णीता-

र्थत्यागायोगात्तदर्थवादस्यैवासामञ्जस्यमङ्गीकार्यमपर्यवसाने त्वर्थ-घादावगतस्यैव विशेषस्य ग्रहणमिति न्यायावताराङ्गभूतोपन्यस्तस-न्देहकारणप्रश्नार्थं कथमिति भाष्यं वृत्त्यन्तरोक्तसन्देहकारणनिरा-सार्थमिति दर्शयितुं स्वरूपतस्तावद् व्याचष्टे * किमिति * तत्र वि-ध्यर्थवादयोर्भिन्नवाक्यत्वेनार्थवादिकस्य विशेषस्य विधिवाक्यार्थाव-धारणवेलायामप्रतीतेः। सामान्यमात्रप्रत्ययाद्विशेषं प्रतिसन्देह इ-त्येकेषां मतमुपन्यासपूर्वकं दूषयति * विधाविति * विधिसामा-न्याक्षिप्ताञ्जनसमर्थद्रव्यमात्रनिर्णयान्नैतत्सन्देहकारणं युक्तमित्यर्थः। सामान्यमात्रनिर्णयादिति याचच्छ्रुतं मत्वा तेषामाशयं विवृणोति * स्यादिति * दूषयित्वा दृष्टान्ताभिधानेनोत्तरं विवृणोति * घृत-वदिति * यथा घृतत्वसामान्यं स्वोपलक्षितयत्किंचिद्विशेषावधार-णेनाङ्गमेवमञ्जनक्रियाक्षिप्तं स्नेहद्रव्यसामान्यमपीत्यर्थः। एतदेव घृते ऽपि सन्देहोपपादनपूर्वकं विवृणोति * तत्रेति * ( विधौ सामान्यश्रवणादर्थवादे च विशेषश्रवणात् वाक्यद्वयविप्रतिपत्तिः। सन्देहकारणमित्यन्येषां मतमुपन्यस्यति ) *तस्मादिति* विधिगत-सामान्यश्रवणमात्रस्य सन्देहकारणतोक्तेति भ्रान्त्या विधिनिरपेक्ष-स्य घृतप्रापकत्वायोगाद्विध्यर्थवादयोरेकवाक्यत्वमभिप्रत्यैतदुक्तमि-ति भ्रान्त्या दूषयति * तथापीति * एकवाक्यगतसामान्यविशेष-श्रवणं न सन्देहकारणमिति दृष्टान्तेनोपपादयितुं * न हीत्युक्तम् * दृष्टान्तवैषम्याभिधानेनापरेषामाशयं विवृणोति * विषम इति * गौः शुक्ल इत्येकवाक्यगतयोः सामान्यविशेषयोः श्रवणादिह तु भिन्नवाक्यगताविति वैषम्यम् एतदेव प्रश्नपूर्वकं विवृणोति * कथमिति * सामान्यविषयविधिवाक्यगत एव यदि विशेषः स्या-त्ततो ऽत्रापि न सन्देहः शुक्लः प्रशस्त इति वाक्यान्तरगते तु विशेषे-तत्रापि सन्देह इत्यर्थः। श्लोकं व्याचष्टे * यदि हीति * अन्वयमु-खेनैतमेवाशयं विवृणोति * अत इति * चकारेण सामान्यश्रवणस-हितस्य विशेषश्रवणस्य सहकारित्वाभिधानादाद्या भ्रान्तिर्निरस्ता विध्यर्थवादयोर्भिन्नवाक्यत्वाभ्युपगमेनैतन्मतद्वयं तच्चैकवाक्यत्वा-वगतेरयुक्तमिति दर्शयिष्यन्सन्देहदर्शनमेवोभयेषां भिन्नवाक्य-त्वभ्रान्तौ कारणमित्याह * केचिदिति * केचित्सामान्य-मात्रश्रवणसन्देहकारणवादिनश्चकारादपरे ऽपि भिन्नवाक्यगतसा-मान्यविशेषश्रवणसन्देहकारणवादिन इत्यर्थः। एतदेवोपपाद-यति * यदि हीति * नन्वेवं सति सूत्रविरोधः स्यादित्याशङ्क्याह

१ अयं पा० २ पु० ना०।

* यत्त्विति * नन्वाकाङ्क्षानिबन्धनत्वात्सम्बन्धस्यावान्तरवाक्यार्थ-
प्रतिपादनमात्रेणाकाङ्क्षापर्यवसाने वाक्यान्तरान्वयायोगात्कथं भि-
न्नयोः पश्चादेकवाक्यतेत्याशङ्क्याह * तथा हीति * पदा-
र्थानां परस्परान्वयाकाङ्क्षापर्यवसाने ऽपि वाक्यार्थानां परस्प-
रापेक्षया ऽन्वयो न विरुद्ध इत्याशयः । भावप्रत्ययेन सम्बन्धाभि-
धानादङ्गस्याङ्गिसम्बन्धापेक्षयाङ्गिनश्चाङ्गसम्बन्धापेक्षयादिशब्देनाग्ने-
यादिप्रधानानामेकफलसम्बन्धापेक्षयाङ्गानां चैककरणोपकारसम्ब-
न्धापेक्षया स्वार्थपर्यवसितानामपि वाक्यानां संहत्यैकमहावाक्या-
र्थापादनेनैकवाक्यत्वं भवतीत्यर्थः । अङ्गप्रधानवाक्यैः सहार्थवा-
दानां वैषम्याभिधानेनैतद् दूषयति * न त्विति * सिद्धार्थप्रतिपाद- ३३०।२
कानामप्युपनिषद्वाक्यानां चतुस्त्रिंशदाश्वीनानि सरस्वत्याविशनात्
प्लक्षप्रश्रवणमित्यादीनां च पुरुषार्थौपयिकस्य कर्मौपयिकस्य वा प्रयो-
जनस्य लाभात्स्वार्थपर्यवसानं युक्तम् अर्थवादार्थस्य तु निष्प्रयोजन-
त्वान्न तत्रार्थवादानां पर्यवसानमिति प्रयोजनशब्देनोक्तम् भिन्नवा-
क्यत्वे च व्रीहियववाक्यवत्सामान्यविशेषवाक्ययोरप्यन्योन्यानिर-
पेक्षवैकल्पिकसाधननिश्चायकत्वात्सन्देहो नतरां युज्येतेत्याह * दु-
र्लभेति * सामान्यविशेषयोर्मध्ये इतरत्र सामान्ये सामान्यवाक्य-
स्येतरत्रविशेषे विशेषवाक्यस्य पर्यवसानादित्यर्थः । ननु वाक्यद्व-
यस्यान्योन्यानिरपेक्षस्यार्थपर्यवसाने ऽपि विप्रतिपत्तेः सन्देहः स्या-
दित्याशङ्क्याह * यदिति * वैकल्पिकानुष्ठानेन विरोधपरिहार
इत्याशयः । नन्वङ्गाङ्गिवत्सामान्यविशेषयोरप्यन्योन्यापेक्षितत्वात्सा-
र्थपर्यवसितयोरपि तद्वाक्ययोरङ्गाङ्गिवाक्यवत्पश्चादेकवाक्यत्वक-
ल्पनायामेकविषयत्वायैकानुरोधेनेतरवृत्तेरवश्यम्भाविनीत्वात्कस्या-
नुरोधेन किं वर्त्ततइति जिज्ञासायां विशेषानिर्द्धारणात्सन्देहः स्या-
दित्याशङ्क्याह * सामान्येति * एवं सति सामान्यमात्रे पर्यवसि-
तस्य विधेरर्थवादविरोधाद्विषयसङ्कोचात्मकबाधाभ्युपगमेन सिद्धा-
न्तः स्यान्न चार्थवादानुरोधेन विधिबाधो युक्त इत्याशयः । न वि-
द्यते विशेषो ऽस्येत्यविशेषो विशेषरहितः स्यात् इत्यर्थः । ननु
यथा पशुमालभेतेति सामान्यपर्यवसितस्यापि विधेः छागस्य वपाया
मेदसो ऽनुब्रूहीति मन्त्रवर्णानुरोधेन सङ्कोचो विधिमन्त्रयोरेकविष-
यत्वात् सामान्यस्य च कृत्स्नस्य छागे ऽपि विभावेनाविरोधान्निय-
मसम्भवे चानियमानुपपत्तेः षष्ठान्त्ये वक्ष्यते तथात्रापि भविष्यतीति
शङ्कते * मन्त्रेति * पौनरुक्त्यापत्त्या तं दूषयति * एवमिति *
एकवाक्यत्वे उपक्रमबलीयस्त्वेनात्र पूर्वपक्षसम्भवादपौनरुक्त्यमि-

तिभावः । स्वाभिमतन्यायावताराङ्गभूतसन्देहकारणाभिधानार्थम-ज्ञनसामान्येनेत्यादिभाष्यं व्याचष्टे * तस्मादिति * ननूपक्रमचलीयस्त्वस्य वेदो वा प्रायदर्शनादित्यत्र वक्ष्यमाणत्वात्सिद्धान्तवचनव्यक्त्यसम्भवेनैकवाक्ये सन्देहो न युक्त इत्याशङ्क्य * किमधीनेत्युक्तम् * अर्थवादप्रवृत्तेर्विध्यधीनत्वे विप्रतिपत्त्यभावात्प्ररोचनां विना विध्यपर्यवसानेनार्थवादाधीना किं विधेः प्रवृत्तिः पर्यवसानेन वा तदधीनार्थवादस्येति सन्देहार्थः । अतो ऽनेन प्ररोचनापेक्षविधिपर्यवसानसम्भवासम्भवसन्देहः * सन्देहकारणमित्युक्तम् * भवति पर्यवसाने विध्युद्देशेन सामान्याक्षिप्तविशेषमात्रनिर्णयादर्थवादानर्थक्यपरिहारायान्यतराकाङ्क्षया वैकृताङ्गवदर्थवादः पश्चादन्वीयमानो ऽपि विध्यनुरोधेनैव व्याख्येयः । अपर्यवसाने त्वर्थवादोक्तविशेषसद्भावे विशेषाक्षेपकत्वायोगादर्थवादोक्तस्यैव ग्रहणमिति किं समञ्जसमिति भाष्यावयवमर्थतः पठित्वा व्याचष्टे * कस्येति * एवमिति पूर्वपक्षभाष्यं व्याचष्टे * तत्रेति * विध्यधीनत्वे ऽप्युपक्रमस्थायाः स्तुतेः श्रौतत्वदर्शनादुपसंहारस्थत्वाभिधानायानुपश्चाद्‌ * वादादित्युक्तम् * अनेन च विनिगमने त्विति भाष्यावयवो विधिना त्वेकवाक्यत्वादित्येतत्सूत्रसिद्धविध्यधीनत्वाङ्गीकरणेन विधेरपि प्ररोचनं विना प्रवृत्त्यशक्तत्वेन स्तुत्यधीनत्वान्नानेन हेतुनार्थवादे लक्षणावृत्तिर्निश्चेतुं शक्येत्याशङ्कानिरासार्थत्वेन व्याख्यातः । चकारेण च लक्षणार्थं घृतवचनमिति भाष्यावयवो विशेषस्याव्यभिचारेण सामान्यलक्षणे सामर्थ्यात् घृताख्यविशेष्यवचनं स्नेहद्रव्यसामान्यलक्षणार्थमित्येव व्याख्यातः।मुख्यत्वादित्यनेनाविरोधाच्चेति चकारसहितेनोपक्रमस्थत्वेन विरोधात्सामान्येन च व्यभिचारिणा विशेषस्य लक्षयितुमशक्यत्वात् उपक्रमस्थेन सामान्यवचनेनं न विशेषः परिकल्पयितुं लक्षयितुं युक्तमित्येवमुपक्रमे सामान्यवचने सति न विशेषः कल्प्यतइति भाष्यावयवं व्याख्यायाविरोधाच्चेत्यनेन ननु सामान्यमात्रस्याननुष्ठेयत्वाद्विशेषस्य चानिश्चयादुपक्रमो ऽपि सन्दिग्धार्थत्वादुपसंहारेण निर्णेतव्य इत्याशङ्कानिरासार्थत्वेन सन्दिग्धेष्वविरोधादिति भाष्यावयवो ऽप्यापातप्रतिभानात्सन्देहे ऽपि सामान्याक्षिप्तस्नेहद्रव्यमात्रनिर्णयोपपत्तेरर्थवादाभावे ऽप्यननुष्ठेयसामान्यमात्ररूपार्थाविधायकत्वलक्षणविरोधाभावादित्येवं व्याख्यातः । प्ररोचनानपेक्षस्य विधेः प्रवृत्तावसामर्थ्यादर्थवादसन्निधाने च स्वयमप्ररोचकत्वादर्थवादसहितस्यैव विधायकत्वावगतेस्तत्समर्पितविशेषलाभे विशेषान्तरकल्पनायोगेनोपक्रमस्थस्यापि विधेर्निर्णय-

कत्वाशक्तेरुपसंहारस्थेनापि अर्थवादेन निर्णयो युक्त इत्याशङ्कानिरासार्थत्वेन प्ररोचनानपेक्षस्यैव विधेः स्वविषयेष्टसाधनत्वज्ञापनमात्रेण प्रवर्त्तकत्वोपपत्तेरर्थवादाभावे ऽपि विधायकत्वाविरोधादिति भाष्यावयवो व्याख्यातः । श्लोकं व्याचष्टे * विधीयमानं हीति * स्तुतेर्विध्यधीनत्वोक्त्यार्थाद्विधेस्तुत्यनधीनता ऽनुवादत्वोक्त्या च प्राप्तार्थतोक्तेति सूचनार्थम् *नन्वित्याद्युक्तम् * ननु विधेः स्तुत्यनधीनत्वे कथमुच्चैर्ऋचा क्रियतइत्यादि विध्युद्देशस्थानामृगादिशब्दानामर्थवादानुरोधेन वेदलक्षणार्थं तृतीये वक्ष्यतइत्याशङ्कानिरासार्थत्वेन मुख्यत्वादित्यवयवं व्याख्यातुम् * यद्यपि तावदित्युक्तम् * अविरोधाच्चेत्यवयवं व्याख्यातुं विनापिचेत्युक्तम् विधेः स्तुत्यनधीनत्वं च पूर्वोक्तमनेनोपपादितम् । स्तुतिपदान्यनर्थकान्यभविष्यन् साकाङ्क्षाणीत्यादेर्यो ऽसौ विध्युद्देशः स शक्नोति निरपेक्षार्थं विधातुमित्यर्थवादाधिकरणभाष्यादर्थवादनिरपेक्षस्य विधिमात्रस्य प्रवृत्तिशक्तावप्यर्थवादानर्थक्यपरिहारमात्रार्थमर्थवादान्वयप्रतीतेरेतत्पूर्वपक्षिणोक्तम् । स्तुतेर्विध्यधीनत्वोपपादनायार्थ* वादस्त्वित्युक्तम् * आद्यचकारसूचितं द्वितीयभाष्यावयवार्थं व्याचष्टे * विशेषश्चेति * द्वितीयचकारसूचितमाद्यभाष्यावयवार्थं व्याख्यातुमाह *न सामान्यामिति * वाक्यशेषस्यैव सन्दिग्धार्थनिर्णायकतास्ति न वेति चिन्ताविषयत्वेनोदाहरणत्वे विध्युद्देशोपन्यासस्तु तद्विषयत्वमात्रेणेति सूचनार्थं व्युत्क्रमेण व्याख्यातमुपसंहरति * तस्मादिति * एवं प्ररोचनानपेक्षस्यापि विधेः प्रवृत्तिसामर्थ्येनार्थवादान्वयात्प्रागेव विध्युद्देशार्थनिर्णयान्नार्थवादोक्तविशेषग्रहणमित्युक्त्वा प्ररोचनानपेक्षस्यासामर्थ्ये ऽप्यर्थवादाभावे विधेरेव प्ररोचनाशक्त्याविर्भावात्सामान्यविधेयस्य विशेषाकाङ्क्षायां घृते सार्थवादकस्याभिधायकत्वमितरयोः केवलस्य भविष्यतीति घृतशब्दस्य स्नेहमात्रलक्षणार्थतापि नास्तीत्याह * कामं वेति * ननु यथाग्निविद्यासाध्यस्याग्निहोत्रादेस्तदनुरोधेन त्रैवर्णिकविषयतया सङ्कोचो वक्ष्यते तथा विधानस्याप्यर्थवादसाध्यत्वात्तदनुरोधेन विषयसङ्कोचः कस्मान्न स्यादित्याशङ्क्याह * यथेति * अयमाशयः ३३।१२
येनाङ्गेन विना प्रधानं न सिध्यति स्वयं च नाक्षिप्यते तदनुरोधेन प्रधानस्यापि सङ्कोचो भवति विनापि त्वर्थवादेन विधेरेव तु प्ररोचनाशक्तिकल्पनेन विधायकत्वोपपत्तेः यथेन्द्राय त्वा वसुमते गृह्णामीत्यैन्द्रमन्त्रसाध्यस्यापि सोमग्रहणस्य मन्त्राभावे ध्यानादिनापि स्मृतस्यानुष्ठानोपपत्तेर्नाङ्गभूतमन्त्रानुरोधेन प्रधानस्य सोमग्रहण-

स्यैन्द्रप्रदानमात्रसङ्कोचो युक्त इति तृतीये लिङ्गविशेषनिर्देशा-त्समानविधाने ऽप्यैन्द्राग्णाममन्त्रत्वामित्यत्र वक्ष्यते तथाङ्ग-भूतार्थवादानुरोधेन प्रधानभूतस्य विधेः सङ्कोचो न युक्त इति। नन्वत्राप्यर्थवादसद्भावेन विधेः प्ररोचनाशक्त्यभ्यु-पगमात्तैलादावर्थवादाभावेन विधायकत्वायोगात्तदनुरोधेन स-ङ्कोचो युक्त एवत्याशङ्क्याह * यत्रेति * अर्थवादसद्भावकृतत्वा-त्प्ररोचनाशक्त्यपगमस्य घृतमात्रे तत्सद्भावादपगमो युक्तो नेतरत्रे-त्याशयः। पूर्वपक्षमुपसंहरति * इतीति * सन्दिग्धेष्वित्यादिसि-द्धान्तभाष्यमक्तशर्करोपधानस्य अर्थवादसद्भावे वर्त्तमानापदेशानु-पपत्तेराख्यातस्य पञ्चमलकारत्वेन विधायकत्वावगमाद्विध्यभावे च विध्येकवाक्यत्वकल्पस्यार्थवादत्वस्याप्ययोगादिमां स्पृष्ट्वोद्गायेदित्ये-तदुदाहरणाव्यापकत्वाच्चायुक्तमाशङ्क्यार्थवादानपेक्षत्वेविधिपर्यवसा-नाभावाभिप्रायेण व्याचष्टे *उच्यतइति* प्रवृत्तिप्रतिबन्धकालस्या-दिभङ्गं विना चेतनस्य प्रवर्त्तयितुमशक्यत्वादालस्यादिभङ्गाख्यप्ररो-चनासापेक्षस्यैव विधेः प्रवर्त्तकत्वनिर्वाहादर्थवादसद्भावे च विधेः प्ररोचनशक्त्यभावादर्थवादस्य च घृतमात्रविषयत्वाद्विधेरपि तन्मा-त्रविषयतैव युक्तेत्याशयः। श्लोकं व्याचष्टे * यद्यपीति * प्रक्रमश-ब्देनापर्यवसानं सूचितम्। यद्यप्यञ्जनाक्रियासाधनत्वाविशेषात्तैल-वसयोरप्यर्थाक्षेपेणोपादानं तथाप्यनुष्ठानस्य विध्यधीनत्वाद्विधेश्च प्ररोचनापेक्षत्वे घृतमात्रविषयत्वात्तैलवसे नानुष्ठेये इत्यर्थः। वस्तुत-स्तु प्रत्यक्षश्रुतेर्घृते ऽर्थाक्षेपायोगान्नार्थाक्षेपात्मकमुपादानमपि तैल-वसयोरस्तीति क्रियामात्रमिचोदितमित्यादिना वक्ष्यतइति तावच्छ-ब्देन सूचितम्। यत्तु तैलवसयोरर्थवादाभावाद्विधेरेव प्ररोचनाशक्ति-कल्पनया पर्यवसानं कामं वेति श्लोकेनोक्तं तदाग्नेयाधिकरणव्यु-त्पादयिष्यमाणगौरवलक्षणवाक्यभेदापादनेन निराकरोति * क-ल्पयितव्येति * घृतप्ररोचनोपादानेन वा समाप्ते वाक्ये काल्पनि-कतैलादिप्ररोचनया वाक्यान्तरारम्भापत्तेर्वाक्यभेदो ऽभिप्रेतः। वै-रूप्यलक्षणो ऽपि वाक्यभेदो ऽस्मिन् पक्षे स्यादित्याह * घृतइति* अतो ऽर्थवादस्य घृतमात्रविषयत्वात्तत्सद्भावे च विधेः प्ररोचना-कल्पनायोगात्तस्यापि तन्मात्रविषयतेति। श्लोकार्थमुपसंहरति * त-स्मादिति * एवं तात्पर्यतो भाष्यं व्याख्याय स्वरूपतो व्याचिख्या-सुः सामान्यवचनेनेति भाष्यावयवमञ्जनसमर्थद्रव्यसामान्यस्याश्र-वणादयुक्तमाशङ्क्याभ्युपेत्यवादत्वेन व्याचष्टे * यद्यपि चेति * अभ्युपेत्यवादस्य च वासः परिधत्तइत्यादौ निरासतुल्यत्वसिद्धिः

प्रयोजनम् कथं न तद्विशेष इत्याशङ्क्य भाष्यशेषव्याख्यानेन परिहरति * तत्रेति * अनेन च यो वाक्यस्य सामान्यवचनेनोपक्रमः स निगमनवशेन श्रुत एव विशेषे व्यवस्थाप्यते तस्योपक्रमापेक्षितविशेषसमर्पणेन तदानुकूल्यादिति व्यवस्थाप्यतइत्यध्याहारेण योजितम्। ननूपक्रमस्थसामान्याक्षिप्तस्य तैलादेर्नोपसंहारानुरोधेन त्यागो युक्त इतिभाष्येणाशङ्क्य श्रुतविशेषसद्भावे ऽर्थाक्षेपायोगान्न स्नेह सामान्यमर्थाद्विहितं येन निगमनस्योपक्रमविरोधः स्यादिति न हीत्यनेन परिहृतम् तद्व्याचष्टे * घृते चेति * ननु विध्युद्देशमात्रपरामर्शात्स्नेहमात्रप्रतीतिर्भवत्येवेति कथमुच्यते न सामान्यं विहितमित्याशङ्कानिरासार्थत्वेन सन्दिग्धेष्विति भाष्यावयवं व्याचष्टे * सन्देहमात्रं हीति * पूर्वमनिर्द्धारितविशेषाभिप्रायेण सामान्यशब्दं व्याख्याय द्रव्यसामान्यमपि न विहितमिति यथाश्रुतं व्याख्यातुमाह * क्रियामात्रमिति * विधानेत्यादि भाष्यस्यापर्यवसानाभिप्रायेण श्लोकेनैव व्याख्यातत्वान्नापीत्यस्य च घृतेः प्रत्यक्षस्तुतिसद्भावात्सामान्यस्नेहमात्रस्य तैलादेः साक्षात्स्वयमेव विधितः स्तुतिः कल्पयितुं न युक्तेत्येव विधेः प्ररोचनेकल्पनाशङ्कानिरासार्थत्वेन कल्पयितव्या चेत्यादिनैव व्याख्यातत्वाल्लक्षणयेति भाष्यं लक्षणात्रयोपलक्षणार्थत्वेन व्याख्यातुमाह * तैलादीति * तस्मादित्युपसंहारभाष्यं व्याचष्टे * तस्मादिति * वृत्त्यन्तरोदाहृतमन्त्रवर्णापेक्षणे भाष्यकृतो ३।२।२
ऽभिप्रायमाह * वृत्त्यन्तरेष्विति * विध्यर्थवादयोर्भिन्नवाक्यत्वाभ्युपगमेनास्मिन्विचारे तुल्यन्यायत्वान्मन्त्रवर्णो ऽप्युदाहरणं स्यात् भिन्नवाक्यगतस्य विशेषशब्दस्यान्नैव नियामकत्वे ऽभिहिते षष्ठान्त्यमनर्थकं स्यादित्यर्थः।

॥ अथ सामर्थ्यानुसारेण अव्यवस्थितानां व्यवस्थाधिकरणम् ॥ १९ ॥

## अर्थाद्वा कल्पनैकदेशत्वात् ॥ २४ ॥

वाक्यशेषस्य सन्दिग्धार्थनिर्णायकत्वे स्तावकत्वातिरिक्तधर्मप्रमोपयोगद्वाराभिधानार्थं व्युत्पादिते प्रसङ्गात्सामर्थ्यस्यापि सन्दिग्धार्थनिर्णायकत्वव्युत्पादनेनानन्तराधिकरणसङ्गतिं सूचयन् पूर्वसूत्रगतसन्दिग्धपदानुषङ्गेण सूत्रं व्याचष्टे * अर्थेति * नन्वर्थशब्दोक्तसामर्थ्यकल्प्यद्रवादिविषयविशेषस्याशाब्दत्वाच्छाब्देन विधिना ऽन्वयो न सम्भवतीत्याशङ्कानिरासार्थत्वेनैकदेशत्वादिति सूत्रावयवं व्याख्यातुं सामर्थ्यकल्पितेन शब्देन * विध्यंशेनेत्युक्तम् * व्यवस्था-

१ प्ररोचकलेति २ पु० पा०।

र्थत्वेन कल्पनाशब्दं व्याख्यातुं निर्णयशब्दः । ननु सामर्थ्यस्य लिङ्गत्वात्तत्प्रामाण्यं व्युत्पादनस्य च तृतीयविषयत्वान्नास्मिंल्लक्षणे सङ्गतिरित्याशङ्क्य प्रासङ्गिकसङ्गतिसूचनाय * अथेत्युक्तम् * प्रसङ्गकारणं वक्तुं सन्दिग्धशब्दः इतिकरणोभ्रान्त्युत्पन्नतैलाद्याकाङ्क्षेति वार्त्तिकसूचितविध्युद्देशमात्रपर्यालोचनोत्थविषयोपलक्षणभूता व्यवस्थितार्थप्रतीतिरूपसन्देहप्रकारपरामर्शार्थः । न्यायावताराङ्गभूतस्तु सन्देहः किमव्यवस्थितविषयतया भासमानस्य विधेरव्यवस्थितविषयतैवोचिता सामर्थ्याद्वा विषयव्यवस्थाकल्पनायेत्येवं रूपो यथा भाष्यमेव स्पष्टत्वान्नोक्तः । विधेर्वस्तुसामर्थ्यापेक्षासदसद्भावसन्देहश्च तत्कारणमाख्यातशब्दानामर्थं ब्रुवतां शक्तिः सहकारिणीति सिद्धान्तभाष्यपर्यालोचनयावगन्तुं शक्यत्वान्नोक्तम् । पूर्वपक्षो ऽपि प्रमाणान्तरगम्यवस्तुसामर्थ्यापेक्षणे वेदस्य सापेक्षत्वेनाप्रामाण्यापत्तेर्वस्तुसामर्थ्यानपेक्षत्वात्तीक्ष्णपुष्करधारस्य च स्रुवस्य संहतशब्दोक्तकठिनद्रव्यावदाने पि सामर्थ्यसम्भवादायसावष्टम्भेन स्रुवहस्तयोर्मांसावदाने ऽपि शक्तिसम्भवात्कोटरवतश्च स्वधितेर्द्रवावदाने ऽपि सामर्थ्योपपत्तेरनुग्राहकापेक्षायामपि निरपेक्षसाधनत्वाविघातादव्यवस्थैव युक्तेत्येवंरूपो भाष्योक्तविशेषानभिधानेनैव स्पष्टत्वान्नोक्तः वाक्यशेषप्रत्युदाहरणरूपेणात्र पूर्वपक्षिणः प्रत्यवस्थानादनन्तरसङ्गतिं वक्तुम् * यत्र वाक्यशेषो न विधीयतइत्युक्तम् * सापेक्षत्वेन वेदाप्रामाण्यापत्तेः प्रमाणान्तरगम्यवस्तुसामर्थ्यापेक्षा विधेर्न युक्तेत्याशङ्कानिरासायैवकारः । अशक्यार्थानुष्ठानायोगात्प्रवर्त्तकत्वव्याघातापत्तेः सर्वविधिभिः सामर्थ्यस्यावश्यापेक्षणीयत्वात्सामर्थ्यस्य च प्रमाणान्तरगम्यत्वे ऽपि विषयस्यान्यतो ऽनवगतेर्वेदस्य नैरपेक्ष्याविघातात्तीक्ष्णपुष्करधारिणापि स्रुवेण मांसावदानाशक्तेर्निरपेक्षसाधनत्वविरोधाच्चायसावष्टम्भनकल्पनानुपपत्तेः । केवलेनापि च स्रुवेण द्रवावदानोपपत्तेरायसस्यानुग्राहकत्वकल्पनायोगात्स्वधितेश्च रूपं वा शेषभूतत्वादित्यनेन न्यायेन वासोवल्लोकसिद्धस्य चोपादेयत्वात्कोटरकरणेन सामर्थ्याधीनकल्पनानुपपत्तेः सामर्थ्याद् व्यवस्थितविषयत्वकल्पना युक्तेत्याशयः । स्रुवाद्युदाहरणेषु सामर्थ्येनानुवाद्यगतसन्देहनिरासदर्शनाद्विधेयगतसन्देहनिराससामर्थ्यशङ्कानिरासायोदाहरणान्तरस्य सिद्धान्तभाष्ये दत्तस्याक्रोशे ऽप्यञ्जलिशब्दवाच्याद्विहस्तसंयोगाविरोधात्सन्देहविषयत्वानुपपत्तिमाशङ्क्याक्रोशाख्यविशेषविवक्षासदसद्भावविे-

१ प्रकारर्मात २ पु० पा० ।

षयत्वेन सन्देहमुपपादयञ्छ्लोकं व्याचष्टे * देवतेति * एकदेशसंयोगे ऽपि संयोगप्रसिद्धेः सर्वावयवसंयोगप्रदर्शनार्थं संहतयोर्हस्तयोः * संयोगइत्युक्तम् * आकोशशब्दवाच्यपत्रकोशाकारव्यावृत्त्यर्थो मात्रशब्दः। आकोशे तर्हि सर्वावयवसंयोगाभावान्नाञ्जलित्वं स्यादित्याशङ्क्य नाञ्जलिनेति प्रयोगो दर्शितः संहतत्वाकोशत्वयोर्विशेषयोः सामान्यवाचिनो ऽञ्जलिशब्दात्सन्देहः सक्तुहोमे ऽञ्जलिचोदनायां भवतीत्यर्थः। चोदनाशब्देन विधेयगतत्वं दर्शितम्। असति चेत्यनेन घृतवत्सन्देहव्यावर्त्तकाकोशविषयवाक्यशेषाश्रवणे ऽपि होमान्यथानुपपत्तिकल्पितेन वाक्यशेषेणाकोशनिर्णयाभिधानाच्छ्लोको व्याख्यातः। ननु सामान्यतः प्रवृत्तस्य विधेः सामर्थ्यकल्पितवाक्यशेषानुरोधेन विषयसङ्कोचाभ्युपगमे दर्शपूर्णमासविधेरपि सामान्यतः सर्वाङ्गविशिष्टकर्मविषयप्रवृत्तस्य सामर्थ्यकल्पितवाक्यशेषानुरोधेन शक्यमात्राङ्गविषयतया सङ्कोचापत्तेरन्धादीनामपि कर्मण्यधिकारप्रसङ्गात्तिर्यगधिकरणविरोधः स्यादित्याशङ्कते * नन्विति * येन प्रकारेण कर्तुं शक्नुयात्तेन प्रकारेण कुर्यादिति वाक्यशेषेणान्धादीनामाज्यावेक्षणादिप्रकारव्यावृत्तेस्तद्रहितो ऽधिकारः स्यादित्यर्थः। विधिस्त्वेकश्रुतित्वादित्येकादशाधिकरणन्यायेन सर्वाङ्गोपसंहारनिश्चयात्किमङ्ग प्रयोक्तव्यमिति सन्देहानुपपत्तेर्नात्र सामर्थ्यानुरोधेन सङ्कोचापादको वाक्यशेष इति परिहरति *नेति* एतदेव विवृणोति * सन्दिग्धेति * ननु प्रयोगविधिपर्यालोचनया सर्वाङ्गोपसंहारावगमे ऽप्यधिकारस्य सामर्थ्यानपेक्षत्वादन्धादेश्चाज्यावेक्षणादौ सामर्थ्याभावात्किं प्रयोगशास्त्रानुरोधेनाधिकारशास्त्रं समस्ताङ्गोपसंहारसमर्थपुरुषविषयतया सङ्कोचनीयमधिकारशास्त्रानुरोधेन वा प्रयोगशास्त्रं शक्यमात्राङ्गविषयतयेति सन्देहे ऽधिकारस्य फलपर्यवसायित्वेन प्राधान्यात्तदनुरोधेन यथा शक्नुयात्तथा कुर्यादिति वाक्यशेषकल्पनया प्रयोगविधेः शक्यमात्राङ्गविषयतया सङ्कोचोपपत्तेरन्धाद्यधिकारो दुर्वार इत्याह * न चेति * कार्ये ज्ञाते ऽधिकारः स्यादित्यनेन न्यायेन प्रयोगविधिप्रयोज्यसमस्ताङ्गावधारणपूर्वकत्वेनाधिकारविधेरेव प्रयोगविध्यनुरोधवृत्तित्वस्य न्याय्यत्वात् समस्तधर्मोपेतं यः शक्नुयादिति वाक्यशेषकल्पनेन सर्वाङ्गोपसंहारसमर्थस्यैवाधिकारनिश्चयान्नाधिकारे ऽपि सन्देह इत्यपिशब्दार्थे चशब्दमङ्गीकृत्य योज्यम्। यः शक्नुयात्स कुर्यादिति वक्तव्ये प्रतिसमाधेयाङ्गवैकल्ये सति तिमिराद्यपनयनेनापादितस्याप्यधिकारसद्भावमङ्गहीनस्य तद्धर्मेत्यत्र षष्ठाद्याधिकरणएव वक्ष्यमाणं सूच-

यितुं यथा शक्नुयात् * तथा कुर्यादित्युक्तम् * द्रव्येन्द्रियवैकल्यादिना स्वतो ऽशक्तो ऽपि द्रव्यार्जनादिना यथा शक्तो भवति तथा शक्तिमापाद्य सर्वधर्मोपेतं कुर्यादित्यर्थः । यदि तु न कश्चित्सर्वाङ्गोपसंहारसमर्थः स्यात्ततः कतिपयाङ्गोपसंहारेणाप्यधिकारः कल्प्यते नन्वेतदस्तीत्याह * सन्ति चेति * अतः प्रयोगविधेः सङ्कोचं विना ऽनुपपत्त्यभावान्न शक्यमात्राङ्गविषयतया सङ्कोचकल्पना युक्तेत्युपसंहरति * इतीति * नन्वेवं सति नित्याधिकारे ऽपि यः समस्तधर्मोपेतं कर्त्तुं शक्नुयात्सो ऽवश्यं कुर्यादिति वाक्यशेषकल्पनया सर्वाङ्गोपसंहारसमर्थस्यैवाधिकारोपपत्तेः सर्वशक्त्यधिकरणविरोधः स्यादित्याशङ्क्याह * यत्र त्विति * जीवने सत्यप्यकरणे जीवितस्य निमित्तत्वव्याघातापत्तेः पौर्णमास्यादिकालवच्चाज्यात्रेक्षणादेरुपादेयत्वेनानुपादेयनिमित्ततावच्छेदकत्वायोगान्निमित्तपरतन्त्रत्वाच्च प्रयोगविधेस्तदनुरोधेन निमितश्रुतिबाधायोगान्निमित्तश्रुत्यवगतावश्यकर्त्तव्यतानुरोधेन यावज्जीवादिप्रयोगविधेः शक्यमात्राङ्गविषयतया सङ्कोचकल्पना युक्तेत्याशयः । प्रयोगचोदनान्यथानुपपत्तिरेव शब्देन परामृष्टा । अनुष्ठानमात्रादविषयश्चात्र सङ्कोचः कल्प्यते प्रयोगविधिस्तु नित्याधिकारे ऽपि सर्वाङ्गविशिष्टमेव प्रधानमनुष्ठापयतीति तत्रापि सामर्थ्यापादने यतितव्यमिति त्यागशब्देन सूचितम्। अशक्याङ्गत्यागस्य च विधिनानुज्ञातत्वान्न वैगुण्यापादकतेति विशेषेणोक्तम् चोदनयानुज्ञातत्वं चोदनाशब्देनोक्तम् अतः कामाधिकारे ऽन्धादीनामधिकारस्यानिर्दिष्टस्यानापत्तेर्नित्याधिकारे चापाद्यमानस्येष्टत्वात्सामान्यतः प्रवृत्तस्य विधेः सामर्थ्यानुरोधेन सङ्कोचकल्पने ऽपि नानिष्टापत्तिरित्युपसंहरति * इतीति * अन्धादीनामधिकारमिति विपरिणतेर्व्यवहितान्वयेन योज्यम् । ननु यदि सामर्थ्येनाश्रुतो ऽपि वाक्यशेषः कल्प्यते ततः कामाधिकारे सन्देहाभावे ऽपि यथा शक्नुयात्तथा कुर्यादिति वाक्यशेषस्य कल्पयितुं शक्यत्वादन्धाद्यधिकारो ऽनिर्वार एव स्यादित्याशङ्क्याह*तस्मादिति* अयमाशयः वैदिकस्यार्थस्य प्रमाणान्तरगोचरत्वाद्वैदिक एव वाक्यशेषः सामर्थ्येन कल्पनीयः कल्प्यस्य वाक्यशेषस्य वेदानुगतत्वेन व्यतिरिक्तं वैदिकत्वं न सम्भवति न च निर्णीतार्थो वेदो वाक्यशेषमनुमन्यतइति तस्माच्छब्दस्य योग्यतया चोदितशब्दोक्तचोदनानुमितत्वपरामर्शित्वात् चोदनयानुमतत्वादित्यर्थः । अलब्धात्मकशब्देन सन्दिग्धार्थत्वाद् * अपर्यवसितत्वमित्युक्तम्* सिद्धशब्देन पर्यवसितत्वं पौरुषेयत्वशब्देन पुरुषोत्प्रेक्षाप्रभवत्वम् । ननु

वैदिकशब्दसामर्थ्यस्यैव वेदानुमतत्वात् वैदिकत्वोपपत्तेः किं वाक्यशेषकल्पनयेत्याशङ्क्याह * सामर्थ्येति * वाक्यशेषसिद्धमात्रं सामर्थ्याधीनं न वैदिकार्थनिर्णयः शब्दैकसमधिगम्यत्वात्तस्य सामर्थ्यस्य चाशाब्दत्वात्कल्पितस्य चार्थस्याशाब्दवैदिकार्थान्वयानुपपत्तेर्वेदानुमतत्वासम्भवादित्याशयः । ननु व्यवस्थितविषयस्य सामर्थ्यस्य व्यवस्थितविषयमङ्गत्वं विनानुपपत्तेः सामर्थ्यव्यवस्थयाङ्गत्वं व्यवस्थामात्रं कल्पयितुं युक्तम् । शब्देन तु विनानुपपत्त्यभावाच्छब्दकल्पना न युक्तेत्याशङ्क्य सामर्थ्यस्य शब्दकल्पकत्वे वृद्धसम्मतिमाह * आह चेति * विभज्यमानसाकाङ्क्षसंहत्यार्थविशिष्टैकार्थप्रतिपादकपदसमुदायस्य वाक्यत्वात्तस्य च वाक्यार्थप्रतिपत्त्युपायभूतकल्पपदार्थवाचिपदाभावे सकाङ्क्षत्वेनापरिपूर्णस्य विशिष्टार्थप्रतिपादकत्वायोगाद्विशिष्टाश्रुतिपादनार्थं[1] च विना व्यवहारासाधनत्वेनानर्थक्यापत्तेः परिपूर्णत्वाय श्रुतपदैकवाक्यभूतपदान्तरकल्पना युक्तेति भावः । प्रतिपत्तेर्नित्यं प्रतिपाद्यसापेक्षत्वात्प्रतिपत्तिशब्दस्य श्रुतिशब्दसापेक्षत्वे ऽपि उपायशब्देन सह समासाविघातः सामर्थ्यक्लृप्तायाः श्रुतेः स्मृतिकल्प्यश्रुतिवत् पृथक्वाक्यत्वाभावाच्छ्रुतवाक्यशेषभूतपदविषयः श्रुतिशब्दः । ननु कल्प्यानां श्रुतीनां कस्य चिच्छाखायामनाम्नानादभावावगतेः शशशृङ्गवत्कल्पना न युक्तेत्याशङ्क्य * तेनैव चेत्युक्तम् * सामर्थ्यलभ्यत्वेनाम्नानोपपत्तेर्नाभावकल्पना युक्तेति भावः । ननु सामर्थ्यलभ्यानामपि प्रतिपत्तिसौकर्यादाम्नानं युक्तमित्याशङ्क्य * सहस्रेत्युक्तम् * सहस्रशब्दो ऽयमनन्तवाची । सामर्थ्यलभ्यानामाम्नाने ऽनन्तावयववेनाम्नानापत्तिरिति क्लेशः स्यादित्यर्थः । श्रोतृप्रोत्साहनाय सूत्रकृतः शत्रूत्थभयशङ्कानिरासाय यत्नपूर्वकमर्थचिन्तां कुर्वता राज्ञा सह रूपकालंकारद्वारेण श्लेषं दर्शयन् प्रमाणलक्षणसमाप्तिं तस्याश्च प्रमेयचिन्तार्थोत्तरैकादशलक्षणीं प्रति हेतुत्वात्तदारम्भसम्भवं सूचयति * इतीति* बहुमार्गं विस्तीर्णं च दुर्गं तद्रक्षिणां प्रवेशनिर्गमनाविरोधाशक्तेः परिखाप्राकारोपेतं चतुरस्रं प्रवेष्टुमशक्तेः परैराभिभवितुमशक्यं प्रविश्यार्थस्य हिरण्यादेः कियानर्थः कश्च किमर्थः किमर्थं वोपादीयते केन च क्रमेण कश्च कस्मिन्स्वामीत्यादिविभागेन चिन्ता क्रियते तथा धर्मस्यापि दुरधिगमत्वात् दुर्गत्वेनोपचरितस्य मन्त्रादिभिः कृताः कर्मस्मृत्यादयः प्रकारभेदेन प्राप्तिहेतुत्वात् बहवो मार्गाः नामधेयसामर्थ्ययोर्विध्यन्तर्भावाद्वाक्यशेषस्य चार्थवादान्तर्भा-

१ विशिष्टार्थप्रतिपादनमिति २ पु० पा० ।

घात्पृथगुपन्यासः । स्मृतिशब्दोपलक्षितानि, वेदातिरिक्तधर्मप्रमाणानि शिष्टाचारसहितानि विद्यास्थानानि प्रकारतयोपचरितवेदव्यवधानेन धर्मदुर्गरक्षाहेतुत्वात् वेदाच्चापकृष्टत्वात्परिखात्वेनोपचरितानि साक्षाद्धर्मदुर्गरक्षाहेतुत्वात् वेदानां प्रकारस्थानीयशालाशब्देन गृहवाचिना परिवेष्टनाभित्तिरूपत्वगुणवशेन प्राकारत्वोपचारः । गूहतेः सम्वरणार्थत्वात् सम्वरणेन च सम्वेष्टनापरपर्यायेण शत्रुकृतपराभवात् दुर्गस्य रक्षणात् वेदाख्यशालया प्राकारेण गूढं रक्षितमित्यर्थः । साक्षाद्रक्षाहेतुत्वसूचनायोपशब्देन सामीप्यमाधिक्यं चोक्तम् प्रमाणस्य प्रमेयतद्भावपरिच्छेदकत्वाद्रक्षितत्वोपचारः । बहुदातर्युदारशब्दप्रसिद्धेर्विस्तीर्णवह्नूनामवकाशदानादुदारशब्देन विवक्षितम् पराक्रान्तेदुर्गे तान्सम्प्रविश्येत्यनेन साधितम् । दुर्गमिति व्यवहारात्साधने प्रवेशत्वेनोपचारः । वेदार्थस्याप्यर्थशब्दवाच्यत्वसामान्येन हिरण्यादिना श्लेशस्तस्यापि हिरण्यादिवत्परिमाणविनियोगप्रयुक्तिक्रमाधिकार्यादिप्रविभागेन द्वितीयादौ चिन्तां करोतीत्यर्थः । प्रथमपादे प्रमाणचिन्तापर्यवसानादर्थचिन्तैव त्रिपाद्यामपि कृतेत्याशङ्कानिरासाय * इदानीमित्युक्तम् * अर्थवादपादगतस्य विचारस्यार्थपरत्वाभावे ऽपि नामधेयपादगतस्यार्थपरत्वशङ्कानिवृत्त्यर्थं समस्तशब्दः ।

इतिकरणः समस्तोक्तप्रकारपरामर्शार्थः ।

इति श्रीमत्त्रिकाण्डमीमांसामण्डनप्रतिवसन्तसोमयाजिभट्टमाधवात्मजभट्टसोमेश्वरविरचितायां तन्त्रवार्त्तिकटीकायां सर्वानवद्यकारिण्यां न्यायसुधाख्यायां प्रथमाध्यायस्य चतुर्थः पादः अध्यायश्च समाप्तः ।



# ॥ न्यायसुधायाम् ॥

## ॥ द्वितीयाध्यायस्य प्रथमः पादः ॥

॥ अथापूर्वस्याख्यातप्रतिपाद्यत्वाधिकरणम् ॥ १ ॥

भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते ॥ १ ॥ ३३४।४

प्रथमे ऽध्याये इत्यादिना प्रसक्तानुप्रसक्तं चेत्यनेन कृतस्य वृत्तवर्त्तिष्यमाणार्थकीर्त्तनस्य प्रयोजनमाह * सम्बन्धं तावदिति * पाठक्रमेणोपक्रमभाष्यविषयत्वज्ञानात् भाष्याननुभाषणं तावच्छब्दाद्धापूर्वं तावत् सम्बन्धं करोति पश्चात् व्याख्यामिति प्रतीतेरुपक्रमभाष्यविषयत्वज्ञानं सर्वेषां वा वृत्तवर्त्तिष्यमाणाध्यायार्थकीर्त्तनानां लिङ्गेन क्रमं बाधित्वा साधारणप्रयोजनाभिधानायेदमिति न भाष्यविशेषो ऽनुभाषणीयः। एकादशानामप्यध्यायानां प्रथमाध्यायोक्तप्रामाण्यापेक्षत्वान्न द्वितीयाध्यायार्थमात्रकीर्त्तनमसाधारणसम्बन्धार्थमुक्तमित्याशङ्का लक्षणद्वयस्येत्यनेन निराकृता। भेदादिसापेक्षस्य प्रामाण्यस्य शेषादिहेतुत्वे ऽप्यन्यानिरपेक्षस्य भेदमेव प्रति हेतुत्वादसाधारण्यमन्यथा भेदादीनामप्युत्तराध्यायार्थान् प्रति आसाधारण्यानुपपत्तेरित्याशयः। यद्वा कर्मोत्पत्तिप्रतिपादनेनोत्पन्नस्योत्पत्तिविध्यानर्थक्यप्रसङ्गात्तत्परिहाराय शब्दान्तरादिभिर्भेदः प्रतिपाद्यते सिद्धप्रामाण्यस्य ह्यानर्थक्यं परिहरणीयमिति प्रामाण्यापेक्षो भेदः अवघातादीनां त्वाज्याद्यर्थत्वे ऽप्यदृष्टार्थत्वेनार्थवत्त्वोपपत्तेः। सर्वत्रापि चैवमेव वक्तुं शक्यत्वान्न प्रामाण्यबलेन शेषादिसिद्धिरिति असाधारण्यं स्पष्टम्। किं च को धर्मः कथं लक्षणः कान्यस्य साधनानि कान्यस्य साधनाभासानि किं परश्चेति चतुर्विधा धर्मजिज्ञासा प्रथमसूत्रेणोपक्षिप्ता तत्राध्यायद्वयप्रतिपाद्यप्रमाणस्वरूपविषयं प्रतिज्ञाद्वयं श्रुत्यर्थाभ्यां द्वितीयसूत्रेण कृत्वा तस्य निमित्तपरीष्टिरित्यादिना प्रथमाध्यायेन वेदप्रामाण्ये साधिते तद्बलेन चैत्यवन्दनादीनां धर्मत्वव्युदासेन ज्योतिष्टोमादीनामेव धर्मत्वमिति धर्म-

स्वरूपे ज्ञाते ऽपि इयन्त्येव धर्मस्वरूपाणीति कार्त्स्न्येन धर्मस्वरूपं भेदनिरूपणाधीनज्ञानमित्यध्यायद्वयस्य चोदनासूत्रपरिकरत्वात्स्पष्टतरासाधारणेह सङ्गतिरिति । यथोक्तम् ।

अथ वा द्वयमेवेदं सर्वशास्त्रमुखं मतम् ।
द्व्यध्याय्याश्चोदनासूत्रं शेषाणां शेषलक्षणम् ॥
चोदनासूत्रनिर्दिष्टो यः प्रामाण्यपरिग्रहः ।
सप्रकारः स आद्येन लक्षणेन प्रपञ्चितः ॥

इति सम्प्रत्येतदेवभाष्यमवयवशो व्याख्यास्यन् वृत्तानुकीर्त्तनभाष्यावयवद्वयं प्रतीकेनानुभाष्याक्षिपति * तत्रेति* धर्मप्रमाणस्य विध्यात्मकस्य वेदस्य तत्र प्रामाण्यव्युत्पादनात्कथमयुक्तमिति मत्वा पृच्छति * कुत इति * अभिप्रायमाह * नैव हीति * सजातीयविजातीयार्थान्तरव्यावृत्तासाधारणधर्मप्रतिपादको रूढ्या लक्षणशब्दस्तार्किकाणां प्रसिद्धस्तदभ्युपगमेनाप्येतत्समर्थयितुं शक्यमित्येतत्प्रतिपादनार्थो ऽयमारम्भः परमार्थतस्तु नानाकर्मलक्षणमित्यादिवत् व्युत्पादनमात्रार्थः प्रमाणलक्षणशब्दो ऽपीति न चोद्यावकाशः विध्यादावपि परिहारदर्शनादादिशब्देन तद्ग्रहणं प्रत्यक्षाद्यभिप्राये प्रमाणशब्दे तल्लक्षणमुपसंह्रियेत तस्य त्वसौत्रत्वेनाध्यायार्थत्वाभावादनुपसंहार्यत्वे वक्तुम् सूत्रकारेणेत्युक्तम् * अभिप्रायं स्पष्टयति * तन्नामेति * नामशब्देन रूढ्यर्थत्वं दर्शितं सूत्रकारेणेत्येतद्व्याचष्टे * अनुमानादीनीति * प्रत्यक्षलक्षणमपि न सूत्रितं प्रत्यक्षसूत्रस्याप्यनिमित्तपरत्वादित्याह * प्रत्यक्षमपीति * ननु चोदनासूत्रेण चोदनाया धर्मप्रामाण्याभिधानाद्धर्मप्रमाणस्य चोदनात्वं लक्षणमुक्तं भवत्यत आह * न चेति * धर्मानुवादेन प्रमाणविशेषविधिपरं तन्न प्रमाणस्य चोदनात्वलक्षणविधिपरं न चार्थात्तत्परत्वमन्यतः सिद्धत्वादित्याह * अस्मिन्नेवेति * साध्यसाधनसम्बन्धरूपधर्मप्रमाणमूलस्याख्यातशब्दस्य येषां तूत्पत्ताविल्यत्र वक्ष्यमाणत्वादित्यर्थः । नन्वसूत्रितस्यापि प्रत्यक्षादिलक्षणस्य वृत्तिकारोक्तत्वादुपसंहारो भविष्यत्यत आह * यदपीति * हेतुमाह * सूत्रेति * अध्यायार्थो ह्युपसंहार्य्यः सूत्राश्रितत्वाच्चाध्यायव्यवस्थायाः सूत्रारूढस्यैवाध्यायार्थत्वमिति भावः । सूत्रारूढो ऽध्यायार्थ इति शाकपार्थिवादित्वान्मध्यमपदलोपेन समासः । न च तद्व्याख्यातपदार्थे सूत्रतात्पर्यं कल्प्यं प्रतिज्ञातचोदनाप्रामाण्यतत्सिद्ध्यर्थेतराप्रामाण्यतदुभयोपपत्तिप्रतिपादनरूपसमस्तलक्षणार्थव्यतिरिक्तरूपत्वादित्याह * कथं चेति * प्र-

त्यक्षसूत्रावयवमात्रस्य लक्षणपरत्वोक्तावपि औचित्यकथनार्थम् *सूत्राणीत्युक्तम् * न च तेनापि लक्षणपरत्वमुक्तम् उपक्रमोपसंहारपर्यालोचनेनापरीक्षापरत्वावसायादित्याह * अपि चेति * तद्विवृणोति * लोकेति * विध्याद्याक्षेपस्य विधेरिदं रूपमित्यादिना परिहारे विवरिष्यमाणत्वादिहाप्रपञ्चः समाधातुमुपक्रमते * तस्मा- ३३५।२
दिति * आद्यावयवस्य तावत्समाधानप्रकारमाह * तत्रेति * प्रमाणलक्षणमिति यदुक्तं तच्चोदनालक्षणसूत्रोक्तार्थानुवादार्थमित्यर्थः । द्वितीयावयवसमाधानप्रकारमाह *विध्यादीति* विध्यादीनां प्रामाण्येन या निर्णीतिः स्थिता सैव तत्त्वनिर्णीतिरभिप्रेतेत्यर्थः । नन्वध्यायसङ्गत्यै समस्ताध्यायार्थानुवादो युक्तो नैकसूत्रार्थानुवादः। अथ सर्वेण वृत्तानुकीर्त्तनभाष्येणावयवशः समस्तानुवादो नैतावतेत्युच्यते तथापि विध्यर्थवादेत्यादिना द्विपाद्यर्थानुवादात्समस्तप्रथमपादार्थः पूर्वावयवत्वेनानुवाद्यो ऽत आह * समस्तो हीति * अध्यायद्वयस्यापि तत्परिकरत्वे त्रिपाद्यर्थस्योत्तरावयवैरनुवादात्प्रथमपादार्थमात्रानुभाषणार्थत्वमस्य दर्शयितुं तस्य तावत्परिकरत्वमस्तीत्यभिप्रेत्य प्रमाणान्तरनिरासेन वा सम्मुग्धवेदप्रामाण्यं तन्मात्रेण पर्यवस्यतीत्याभिप्रेत्य प्रथमपादोक्तिः कथं चोदनासूत्रेण प्रमाणलक्षणाभिधानमित्यभिप्रेत्य स्वरूपवचनव्यक्तिपक्षे तावदुपपादयति *तत्र चेति * यश्चोदनाप्रमाणकः स धर्म इत्युक्ते चोदितत्वं धर्मस्य लक्षणमुक्तं भवतीति भावः। चोदनाप्रमाणकत्वं वा धर्मस्य लक्षणत्वेनोक्तमित्यध्याहार्यं भाष्ये धर्मशब्दानुपादानात्कथमेतदर्थलाभ इत्याशङ्क्याह * अत इति * कर्मव्युत्पत्तावपि कथं विशेषलाभो ऽत आह * सत्यपि चेति * इदानीं प्रमाणवचनव्यक्तिपक्षे ऽप्युपपादयत्यथ वेति प्रत्यक्षादिविषयत्वाशङ्कां निराकर्त्तुमाह * यद्यपि चेति * प्रमाणविधिपरत्वात्तस्य कथं तदनुवादेन लक्षणविधिपरत्वमित्याशङ्क्यार्थादुक्तं भवतीति दर्शयितुम् * एतावतैवेत्युक्तम् * चोदनात्वस्य लोकवेदसाधारण्येनातिव्यापकत्वादलक्षणत्वमाशङ्क्याह * न चेति * विजातीयव्यावृत्त्या क्रियात्वस्येवाद्रव्यव्यावृत्त्या कथं चिल्लक्षणत्वं सम्भवतीति भावः । औत्पत्तिकसूत्रेण वा नित्यत्वाद्यभिधाने वैदिकत्वलाभान्नातिव्याप्तिरित्याह * अपि चेति * एवं तार्किकाभिमतं लक्षणशब्दार्थमुपपाद्य स्वतन्त्रप्रक्रियया न्यायव्युत्पादनार्थत्वात्समञ्जसमेवानुभाषणमित्याह *अथ वेति * एवं त्रिप्रकाराद्यावयवव्याख्यानेन पूर्वार्द्धं प्रपञ्च्योत्तरार्द्धं व्याचष्टे * तथेति * विध्यादीनां प्रामाण्योपयोगिद्वारविशेषः प्रवर्त्तकत्वस्तावकत्वस्मार-

क्रत्वरूपस्तत्त्वशब्दार्थो ऽभिमतः । किमित्यसौ द्वारविशेषो न स्पष्ट-मनुक्रान्तो ऽत आह * अवसराभावादिति * भेदलक्षणासङ्गत्यै-तद्धेतुमात्रानुभाषणस्योपयोगादिति भावः । स्मृतिप्रामाण्योपयो-गिनं द्वारविशेषमाह * श्रुतिमूलत्वमिति * स्मृतिमूलस्येत्यध्याहा-रः एवमवयवद्वयमाक्षेपपूर्वकं व्याख्यायेदानीं तृतीयावयवे वाक्या-र्थविचाराभावाद् गुणविधिग्रहणानुपपत्तिमाशङ्क्याह * नामधेयस्ये-ति * सत्यं नामधेयप्रामाण्यमेव सप्रपञ्चमुक्तं तस्य तु चोदनान्तर्ग-तत्वादाग्नेयादौ तदसम्भवे ऽर्थवादत्वानुपपत्तेः परिशेषाद् गुणवि-धित्वमेव भवतीति दर्शयितुं तद्ग्रहणमित्यर्थः । चतुर्थावयवे सन्दि-ग्धे विशेषणस्य प्रयोजनमाह * सन्दिग्धार्थेति * प्रथमपादमात्रे चेत्प्रमाणलक्षणोक्तिः कथमध्यायस्य प्रमाणलक्षणाख्येत्याशङ्क्याह * एवमिति * उक्तेन प्रकारेण सामान्यविशेषाभ्यां समस्तस्य प्रामा-ण्यव्युत्पादनार्थत्वादिति भावः । तत्र प्रस्मर्त्तव्यमिति भाष्यमध्या-ययोर्हेतुहेतुमद्भावप्रतिपादनार्थतया व्याचष्टे * तत्रेति * वर्त्ति-ष्यमाणार्थकीर्त्तनभाष्यमनन्तरमित्यादि तत्र प्रधानाप्रधानानीत्यव-यवं भेदलक्षणासङ्गतत्वेनाक्षिपति * ननु प्रधानेति * प्रधानाप्र-धानचिन्ताविशेषशेषिरूपत्वात्साक्षात्तृतीये सङ्गच्छते । चतुर्थे ऽपि फलक्रतुप्रयुक्तत्वविवेकार्थं यथोक्तं पुनः श्रुत्यादिषट्केन क्रत्वर्थपुरु-षार्थयोः प्रयोज्यत्वाप्रयोज्यत्वशेषधर्मविचारणा । फलविध्यर्थ-वादत्वकालार्थाङ्गप्रधानता फलक्रतुप्रयुक्तत्वविवेकार्थं विचारिता इति अत्र तु कथं सङ्गतिरिति भावः । अत्राज्ञाताक्षेपाभिप्रायास्तानि द्वैधमित्यादिगुणप्रधानविचारदर्शनेनोत्पन्नभ्रमाभेदस्यैव लक्षणार्थत्वं निर्द्धारयितुमशक्नुवन्तः शेषशेषिविचाररूपेण सामान्येन पौनरुक्त्य-मनेनाशङ्कितमिति मन्यमानाः परिहारमाहुरित्याह * केचिदिति *

३३६।१ दूषयति * तदयुक्तमिति * यद्यवघातसम्मार्गादीनां गुणकर्मत्वं स्तोत्रशस्त्रयोश्च प्रधानकर्मत्वमधिकरणान्तरसिद्धं स्यात् ततः पौनरु-क्त्यशङ्कासम्भवात् तत्परिहाराभिधानं युज्येत शेषशेषिरूपतासामा-न्येन तु पौनरुक्त्यमनेनाशङ्क्य परिहारं द्रव्यगुणसंस्कारेष्वित्यत्र सं-स्कारशब्देनावघातादेर्द्रव्यशेषत्वाभिधानात् द्रव्यशब्देन द्रव्यस्य शेष-त्वाभिधानेन तत्प्रति कर्मणः प्राधान्याभिधानादित्यर्थः । तस्मादेवं समाधेयमित्याह * तेनेति * सत्यन्तत्वेन लक्षणार्थत्वेन लक्षणं प्रति प्राधान्येन भेद एव लक्षणप्रतिपाद्यो ऽपूर्वभेदो ऽपि तु प्रतिपाद्य एव । न चैवं लक्षणभेदापत्तिरनुनिष्पादित्वात्तस्येत्युक्तम् * तमन्वि-ति * अतस्तत्प्रसिद्ध्या प्राधान्यं विचार्यमाणं नासङ्गतमिति भावः ।

तदयं भाष्यार्थः । अनन्तरं भिन्नान्यभिन्नानि च कर्माणि परीक्षिष्यन्ते तदनुनिष्पाद्यपूर्वभेदाभेदसिद्ध्यर्थं च द्रव्यं प्रति प्रधानान्यप्रधानानीति। ननु अभेदस्यापि परीक्षणे लक्षणभेदः स्यादत आह *कर्मभेदस्तावदिति * उत्सर्गापवादाभ्यां तस्यैव परीक्षेत्यर्थः। उत्तरार्द्धं व्याचष्टे * तदनुनिष्पादिना त्विति * एतदेव प्रपञ्चयत्समस्ताध्यायाधिकरणान्यनुक्रामति * तत्रेति * तत्र शब्देनापूर्वनिष्पादनपर्यन्तेन भावार्थाधिकरणेन कर्मशब्देभ्यो ऽपूर्वं प्रतीयत इति व्युत्पादयता कर्मभेदानुनिष्पादित्वे ऽपूर्वस्य सिद्धे * सतीत्युक्तम् * तृतीयविषयत्वेन प्रसिद्ध इत्यर्थः । यत्पुनः तृतीयविषयः सन्नत्रारप्स्यते तदपवादत्वेनेत्यसङ्गतिनिरासार्थम् * पुनरित्युक्तम् * अपवादं दर्शयति * सत्यपीति * ननु चतुर्थे संस्कारे च तत्प्रधानत्वादित्यत्रावहन्त्यादीनां दृष्टार्थत्वेन प्राप्तत्वादविधेयत्वमाशङ्क्य नियमादृष्टार्थत्वेन देशादिवद्विधानं भविष्यतीति वक्ष्यमाणत्वात् कथमपूर्वाभावाभिधानमत आह * यत्त्विति * पुरोडाशनिष्पत्त्यर्थस्य तण्डुलीभावस्यानेकानि स्वनिष्पत्तिसमर्थानि साधनान्यालोचयतो यो ऽवघातविधिना साधनविशेषसमर्पणेन तत्रोपसंहारः क्रियते स एव नियमनिबन्धादिशब्देनोच्यते अर्थाक्षेपेण हि प्राप्स्यन्नप्यवघातस्तण्डुलीभावजनकत्वेन नियम्यमानो जन्यजनकनियमस्यादृष्टं प्रयोजनमपेक्षते ततश्चावघातेन तण्डुलीभावे कृते तज्जन्यत्वात्तण्डुलेष्वतिशयो निष्पाद्यमानो नावघातक्रियाजन्यो वक्तुं शक्यते तण्डुलोत्पादननिरपेक्षावघातस्वरूपजन्यत्वाभ्युपगमे कृष्णलेष्वप्यातिदेशप्राप्तो ऽवघातो न वारयितुं शक्यते तस्मान्नियमादृष्टस्य चतुर्थाधिकरणे क्रियाजन्यत्वानभ्युपगमान्न तद्विरोध इत्यर्थः । अन्ये त्वर्थाक्षेपस्य विधिकल्पननिरपेक्षस्याप्रापकत्वेन मन्थरत्वादप्राप्तावस्थस्य क्रियास्वरूपस्यैव विधेयत्वात्प्रयोजनकल्पनोचिता न फलमात्रत्वेनावस्थितस्य नियमस्येति मन्वाना नियमादृष्टस्यापि क्रियाजन्यत्वमिच्छन्तस्तादर्थ्यमात्रनिराकरणपरतयेदं वार्त्तिकमेवं व्याचक्षते क्रियाजन्यक्रियाकृतशब्दाभ्यामीप्सिततमुद्देश्यत्वाद्यपरनामधेयमभिप्रेतं नोत्पाद्यत्वमात्रं न तथा व्यपदिश्यतइति च क्रियोत्पाद्यत्वे सत्येवानुषङ्गिकत्वात्तद्व्यपदेशमात्रं निराकरणपरमिति आनुषङ्गिकत्वादेव च कृष्णलेष्ववघाताप्रयोजकत्वमिति भावः। अपवादसिद्धिमुपसंहरति *तेनेति* गुणकर्मस्वप्यदृष्टार्थेषु अपूर्वाङ्गीकरणादैकान्तिकीति पूरणीयं प्रोक्षणादिजन्यस्य वा व्रीह्याद्याश्रितस्यातिशयस्य फलस्थानीयत्वेनात्माश्रितावान्तरद्वाररूपापूर्वशब्दवाच्यत्वाभावात्त-

स्य चानन्तरभावित्वेन तत्सिद्ध्यर्थापूर्वान्तरकल्पने प्रमाणाभावात्प्रोक्षणजन्ये ऽतिशये प्रमाणान्तरागोचरत्वसाम्येनौपचारिको ऽपूर्वशब्दप्रयोग इत्यविरोधः । अस्य चेत्यादिभेदलक्षणार्थं इत्येवमन्तं सुगमम् * तदपवादार्थमिति * गुणत्वलक्षणस्यापवादः प्रधानत्वलक्षणं तदपवादार्थं प्रधानत्वलक्षणस्यापवादो गुणत्वलक्षणं तदपवादार्थमुत्तरमित्यर्थः । प्रक्रियाशब्देन विरुद्धलक्षणया प्रकरणान्तरमुक्तं । कैश्चित्तु प्रथमाध्यायप्रतिपादितप्रामाण्यस्य शास्त्रस्य साध्यानुबन्धभेदाभ्यां भेदो ऽस्मिन्नध्याये प्रतिपाद्यतइत्युक्तं तत्र साध्यं संयवनस्य पिण्डोत्पत्तिः गोदोहनस्य पयःप्राप्तिः अवघातस्य व्रीहिविकारः प्रोक्षणस्य संस्कार इति चतुर्विधमन्योन्यनिरपेक्षं भिन्नं सत्सामवायिकाङ्गशास्त्राणां भेदकं द्वितीयाश्रुत्या एषां साध्यनिष्ठत्वावसायात् क्रियारूपानुबन्धनिष्ठत्वाभावेन तद्भेदनिमित्तभेदायोगात्तथारादुपकारकाङ्गसाध्यः करणोपकारः प्रधानसाध्यानि करणावान्तरकार्याणीति तद्भेदेनाङ्गप्रधानशास्त्रभेदः समस्ताङ्गप्रधानसाध्यश्चैश्वर्यलक्षणो ऽधिकारः कामजीवनाधिकाररूपेण भिन्न इति तच्छास्त्रभेदाध्यवसानमिति शब्दान्तरादिप्रमाणकविषयापरनामधेयानुबन्धभेदाच्च यागहोमादिशास्त्राणां भेद इति तन्निराकरणार्थमेष एवार्थो वर्णनीयो नान्य इति भाष्यं व्याचष्टे * एष एवेति * अयमाशयः अङ्गाङ्गित्वाद्यवधारणार्थत्वेनानुष्ठानोपयोगित्वाच्छास्त्रार्थरूपकर्मभेद एव विचार्यो नानुपयोगी शास्त्रभेदो ऽनुष्ठानपर्यवसायित्वान्मीमांसाशास्त्रस्येति । किं च साध्यानुबन्धभेदयोः शास्त्रार्थभेदद्वारा वा शास्त्रभेदकत्वं तन्निरपेक्षं वेति विकल्पनीयं न तावदाद्यः पक्षः । शास्त्रभेदावधारणात्प्रागेव शास्त्रार्थभेदे ऽवधारिते ऽनुष्ठानसिद्धेरनुनिष्पादिशास्त्रभेदावधारणानर्थक्यान्नैरपेक्ष्यं तु न सम्भवत्येव साध्यानुबन्धभेदयोः शास्त्रार्थेन भावनया नियोगेन वा सम्बन्धं विना शास्त्रेणासम्बन्धाद्भेदकत्वानुपपत्तेः। अस्तु वा ऽनुबन्धभेदेनाधिकारलक्षणसाध्यभेदेन च शास्त्रार्थभेदाध्यवसायात्तद्द्वारेण शास्त्रभेदः साध्यान्तराणां तु शास्त्रार्थाभेदकत्वात्कथं शास्त्रभेदकत्वमिति वाच्यम्। उत्पत्त्यादीनामशाब्दत्वेन शास्त्रार्थनियोगानवच्छेदकत्वात्तद्भेदकत्वानुपपत्तिः। तदेवं भाष्यकारेणैव शास्त्रभेदस्य लक्षणार्थत्वनिराकरणात्प्राभाकराणां प्रधानप्रधानानीति भाष्यस्य शास्त्रभेदलक्षणार्थप्रतिपादनपरतया व्याख्यानमतिमूढतामापादयतीति अलमनेन कर्मभेदस्य लक्षणार्थत्वे कथं प्रमाणलक्षणानन्तरसङ्गतिरित्याशङ्क्य भाष्यकृतोक्तम् । एष एवाध्याय सम्बन्ध इति तत्र तत्र

प्रस्मर्त्तव्यमित्यनेन च हेतुहेतुमद्भावलक्षणसम्बन्धप्रतिपादनेन भे-
दलक्षणस्य चावसरप्रतिपादनाल्लक्षणान्तरावसरनिरासपरतया इदं
भाष्यं व्याचष्टे * न चान्यस्येति * एतदेव प्रश्नपूर्वकमुपपादय-
ति * कुत इति * उपदेशे ज्ञात इत्यनुषङ्गः सर्वेषामुत्तरोत्तराध्या- ३३७।१
यानां पूर्वपूर्वापेक्षत्वं दर्शयितुं श्लोकानुक्तमपि प्रमाणलक्षणापेक्षत्वं
दर्शयति * प्राक् तावदिति * तत्रापीत्यादिना ऽपेक्षतइत्यन्तेन श्लोक-
व्याख्यानं तत्रावृत्तिप्रसङ्गानामुपदेशातिदेशसाधारण्ये ऽपि भूम्नोत्त-
रषट्कस्यातिदेशविषयत्वाभिधानं लक्षणान्तरावसरनिराकरणपरत्वे
कथं प्रस्तुताशङ्कानिराकरणमत आह * ततश्चेति * तदिहेत्यादि-
भाष्ये भेदस्य स्वतो वैलक्षण्याभावात् षड्विधत्वानुपपत्तिमाशङ्क्य
व्याचष्टे * षड्विधइति * नामधेयक्रमस्त्वविवक्षित इत्याह * व-
क्ष्यमाणेति * शब्दान्तरादीनां भेदत्वाभावात्सामानाधिकरण्यानुप-
पत्तिमाशङ्क्य वैयधिकरण्येन व्याचष्टे * इतिकरण इति * शङ्का-
द्वयमप्यन्यथा परिहरति * अथ वेति * संज्ञायाः शब्दान्तरवदभि-
धानान्तरत्वेनाभिधेयान्तरोपस्थापकत्वात्संख्यायाश्च गुणत्वाविशेषा-
द्भेदोपादानमनर्थकमाशङ्क्याह * संज्ञाशब्दान्तरयोरिति * धा-
त्वन्तररूपं शब्दान्तरं भविनानुरञ्जकव्यापाररूपेण स्वार्थं व-
दत्स्वार्थानुरक्ताया भावनायाः धात्वर्थान्तरानुरक्तभावनातः
स्पष्टं भेदं बोधयति संज्ञा तु न स्वेन भावनानुञ्जकव्यापार-
रूपेण धात्वर्थं वदति नाम्नां निष्पन्नरूपाभिधानस्वभाव-
त्वान्नासौ धात्वर्थमात्रभेदे व्याप्रियते तद्भेदात्तु शब्दान्तरन्यायेन भा-
वनाभेदसिद्धिः। गुणश्च गुणान्तरावरुद्धे कर्मण्यसम्भवात्स्वविशिष्ट-
कर्मोत्पत्तिमाक्षिपन्नुत्पन्नस्योत्पत्त्यसम्भवात्कर्मान्तरेभ्यो भेदं बोध-
यति संख्या तु व्यासज्यवृत्तित्वेनैकनिष्ठत्वाभावात्संख्यान्तरावरुद्धे-
ष्वपि कर्मसु उपजनापायेनोपपत्तेः स्वविशिष्टकर्मोत्पत्तिमाक्षेप्तुमश-
क्नुवन्ती प्रमाणान्तरेण कर्मोत्पत्ताववधारितायामनेकत्वमात्रं बोध-
यतीति स्वरूपानभिधायित्वात्सञ्ज्ञाशब्दान्तरात्पृथक् व्यासज्यसम-
वायाच्च संख्या भिन्ना गुणान्तरादित्यस्मिन्वार्त्तिके वक्ष्यतइति भि-
न्नान्यभिन्नानि चेत्येतावतैव हेतुमत्तया वर्त्तिष्यमाणकथनसिद्धेः ष-
ड्विधकथनानर्थक्यमाशङ्क्य वक्ष्यमाणमित्यादिभाष्येण सङ्क्षेपप्रदर्श-
नपूर्वकस्य विस्तरवचनव्याख्यातुः प्रतिपादनसौकर्यं श्रोतुश्च प्रतिप-
त्तिसौकर्यं प्रयोजनमुक्तं तदिष्टं विदुषां लोके समासव्यासधारणमि-
ति न्यायेन स्पष्टत्वात् तदेतदित्येतदप्यनादिसमाख्याबलेन शास्त्रभे-
दलक्षणार्थत्वनिराकरणपरतया ऽतिस्पष्टत्वान्न व्याख्यातम्। यद्वोप-

क्रमोपसंहारपर्यालोचनया सर्वमेवैतन्निराकरणपरं व्याख्येयं हेतुहेतुमल्लक्षणो ह्यध्यायानां सम्बन्धः प्रसिद्धो न प्रासङ्गिको प्राधान्यापत्तेः। षड्विधत्वेन साध्यानुबन्धभेदाभ्यां द्वैविध्यमवान्तरविवक्षया त्रयोदशविधत्वं निराकृतं कर्मशब्देन शास्त्रविषयत्वं शब्दान्तरादिग्रहणेन साध्यादीनि । परोक्ताध्यायार्थनिरासेन स्वाभिमतार्थकथनस्य व्याख्यानतो ज्ञास्यमानत्वादानर्थक्यमाशङ्क्योत्तरभाष्यमिति ।न चोक्रमोपसंहारभाष्ययोः सत्यमन्यमर्थं पश्यामः । एतत्तात्पर्येणेति भाष्ये काक्वा भेदमात्रतात्पर्याभिधानं बलाबलस्यापि वक्तव्यत्वादयुक्तमाशङ्क्य व्याचष्टे * सर्वदा चेति * न यत्रैकेन भेदो बोध्यते तत्रैवेतरेणेति भिन्नविषयत्वम्। उपोद्घातादिशब्दार्थं व्याचष्टे * तत्रेति * यत्प्रस्तुतादुपजायते तत्प्रसक्तानुप्रसक्तादीति योज्यम् । किं पुनरुपोद्घाताधिकरणमत आह * यथेति * अनुसरतीति कर्त्तरि घञं व्युत्पाद्य प्रकृतौ यो ऽनुनिष्पाद्यपूर्वको भेदानुसारी कर्मभेदः तत्सिद्ध्यर्थमिति योज्यम्। धात्वर्थस्य हि फलभावनाकरणत्वे तद्भेदानुनिष्पादी फलापूर्वभेदः।सिध्यति कारणभेदानुनिष्पादित्वात्कार्यभेदस्य नामार्थस्य तु करणत्वे तद्भेद एवापूर्वभेदापादकः स्यादित्याशयः प्रकृतानुनिष्पाद्यान्यथादरदर्शनान्नानुनिष्पादित्वमात्रेणापूर्वभेदस्यानादरणीयत्वम् । धर्मापेक्षाज्ञानार्थं चेह कर्मभेदस्य प्रतिपाद्यत्वात्फलसाधनत्वेन कर्मणां धर्मत्वात्तस्य चापूर्वद्वारत्वादनुनिष्पादिनोऽप्यपूर्वभेदस्य विवक्षोपपत्तेः। प्रकृतकर्मभेदविशेषणत्वाविरोधः किं भावशब्देभ्यो ऽपूर्वं किं द्रव्यगुणशब्देभ्य इति सन्देहभाष्यम्।अपूर्वस्य शब्दवाच्यत्वाभावादयुक्तमाशङ्क्य फलपदसम्बन्धद्वारा भावशब्दानां द्रव्यगुणशब्दानां चापूर्वगमकताभिप्रेतेति भावः । अनेन च नामार्थस्य फलभावनाकरणत्वं धात्वर्थस्य वेत्यधिकरणार्थः सूचितः । करणभेदाभेदयोरपूर्वभेदाभेदहेतुत्वसूचनायानुगन्तव्यावित्युक्तं सर्वेषां फलपदसम्बन्धे कतरस्य सम्बन्ध इति चिन्तानुपपत्तेस्तत्सिद्ध्यर्थं प्रथमं तावदित्यादिभाष्येणैकस्य फलसम्बन्धः सर्वेषां चेति चिन्तान्तरं कुर्वतो ऽर्थस्याप्यस्य चिन्तान्तरस्य धर्मभेदाभेदफलत्वाल्लक्षणसङ्गतिरप्यस्तीति दर्शयितुं किं पदेन पदेन धर्म उच्यते उत सर्वैरेक इति । प्रथमं चिन्त्यतइत्युक्तम्। भेदस्य च पदार्थस्वरूपत्वात् प्रमाणलक्षणवद्भेदलक्षणस्यापि चोदनासूत्रप्रतिज्ञातधर्मस्वरूपव्युत्पादनार्थत्वात्तयैव प्रतिज्ञया सङ्गतिरिति सूचयितुम्* प्रथमे ऽध्यायइत्युक्तम् * नन्वेवं सति चोदनाशब्दस्य विधिप्रत्ययमात्रवाचित्वात्तत्पदेन पदेनेति चिन्ता न युक्तेत्याशङ्क्य * वाक्यमित्युक्तम् *

तदुपपादनार्थं विधेरुत्र्यंशभावनाविषयत्वं वक्तुम् * क्रियाया इत्युक्तम् * तच्चोदनासूत्रएव इत्यध्याय्याश्चोदनासूत्रमित्यनेन प्रमाणलक्षणवद्भेदलक्षणस्यापि चोदनासूत्रपरिकरत्वाभिधानात्किमाद्यपेक्षितैः पूर्णः समर्थप्रत्ययो विधावित्यनेन वाक्यस्य चोदनात्वाभिधानात् स्पष्टमित्युपेक्ष्य वाक्ये चेति वाक्यवाक्यार्थसावयवत्वाभिधानस्य प्रकृतोपयोगमाह * यदेति * भाष्यार्थमजानानः शङ्कते * अत्रापीति * वाक्यवाक्यार्थयोः सावयवत्वे ऽपि चोद्यं भवतीत्यर्थः। ३३८।२
धर्मस्य वाक्यरूपचोदनागम्यत्वेन वाक्यार्थत्वात्प्रतिपदमित्याशङ्का न युक्ता वाक्यार्थस्य लक्ष्यमाणत्वाद्वाच्यत्वाभिधानं न युक्तमिति चोद्यार्थः। एतदेव व्याचष्टे * यदि हीति * किं वाक्यार्थस्य धर्मत्वमभिप्रेत्येयमाशङ्का भाष्येण धर्मस्य पदार्थता उक्तेत्यभिमानाद्वा तत्र पदार्थस्यैव श्रेयःसाधनत्वेन धर्मत्वान्न तावद्वाक्यार्थस्य धर्मता युक्तेत्याह * तदुच्यतइति * धर्मस्य वाक्यार्थत्वे ऽपि वाक्यार्थस्य धर्मत्वं नास्तीत्याशयः। न च भाष्येण धर्मस्य पदार्थतोक्तेत्याह * न चात्रेति* श्रेयःसाधनत्वस्य फलपदसमभिव्याहारलभ्यत्वाद्वाक्यार्थात्मत्वे सति वाक्यार्थत्वप्रसिद्ध्युपपादनायोक्ते पदार्थस्य धर्मत्वे सर्वपदानामेकवाच्याभावात्सर्वशब्दानर्थक्यमाशङ्क्येतरेत्युक्तम् । पदार्थान्तरानुपगृहीतस्यैकपदार्थस्यैव फलपदान्वयाधीना श्रेयःसाधनत्वावगतिरित्याशयः। अत्रैव भाष्यं योजयति *तथा चेति* नन्वेवमपि पदद्वयमात्राधीनत्वाद्धर्मत्वावगतेर्बहुविषयसर्वशब्दानर्थक्यं द्रव्यादेरपि फलवदुपकारित्वेन धर्मत्वात्तदभिधायिपदापेक्षत्वेन सर्वशब्दस्यार्थवत्त्वे सत्येकपदानर्थक्यं स्यादित्याशङ्क्याह *साक्षादिति* कान्यस्य साधनानीत्यादौ अङ्गस्य धर्मसाधनत्वाभिधानेन धर्मत्वानभ्युपगमान्न धर्मानेकत्वापत्तिरित्याशयः। यथा श्रुतं त्वसमञ्जसमेव स्यादित्याह *न त्विति* नन्वत्र किं पदेनेति भाष्यात्सर्वेषां धर्मत्वम् एकस्य वेति विचारः प्रतिभाति यदेकस्मादपूर्वम् इत्यस्माच्च सर्वेषां वा ऽपूर्वसाधनत्वमेकस्य वेति यआहुः किमपि भावयेदिति ते स्वर्गकामपदसम्बन्धात्स्वर्गं भावयेदिति ब्रूयुरिति मुख्योपोद्घाताधिकरणभाष्याच्च एकस्य फलसम्बन्धः सर्वेषां चेति तत्र किं प्राधान्येन विचार्यमित्याशङ्क्याह * यच्चेति * फलपदसम्बन्धावगम्यधर्मत्वकल्प्यत्वादपूर्वसाधनत्वस्य फलपदसम्बन्धएव मूलत्वात्प्राधान्येन विचार्य इत्यर्थः। किं तावदिति पूर्वपक्षप्रतिज्ञामुपपादयितुं व्याचष्टे * किं प्राप्तमिति * प्रतिज्ञासूचितामुपपत्तिं प्रश्नपूर्व-

१ वाक्येति २ पु० ना० ।

कमाह * कुत इति * सर्वेषामगृह्यमाणविशेषतया ऐकरूप्यात्फलपदसम्बन्ध इति हेतौ तृतीयामङ्गीकृत्य तावद्व्याचष्टे *यदि हीति * सर्वेषां फलपदसम्बन्धे सति ऐकरूप्येण सम्बन्धः सिद्ध्यतीति इत्थम्भावे तृतीयामङ्गीकृत्यान्यथा व्याचष्टे * यदि चेति * व्याख्याद्वयसमुच्चयार्थश्चशब्दः प्रधानेन चेत्युपपत्त्यन्तरं गुणसम्बन्धे ऽप्यर्थवत्त्वोपपत्तेरयुक्तमाशङ्क्योपपादयति * सर्वश्चेति * ननु सर्वेषां फलपदसम्बन्धस्य प्रतिज्ञार्थत्वे धर्मग्रहणमसङ्गतं स्यादित्याशङ्क्य फलतः सङ्गतिं दर्शयन्नुत्तरार्द्धं व्याचष्टे * तस्मादिति * नन्वेवं सति धर्मभेदाभेदफलत्वाद्विचारस्य तस्मादेकमपूर्वमिति सिद्धान्तोपसंहारवत्पूर्वपक्षे भिन्नो धर्म इति वाच्यमित्याशङ्क्याह * तत्त्विति * प्रत्येकं फलसाधनत्वे सति भेदेन श्रेयःसाधनत्वाद्धर्मभेदः सिद्ध्येन्न च सर्वेषामपि फलपदसम्बन्धे नियमेन प्रत्येकं फलसाधनतास्तीत्याशयः । पुरुषार्थैकसिद्धित्वात्तस्य तस्याधिकारः स्यादिति षष्ठाधिकरणन्यायेन यथा सत्रिणः प्रत्येकं कृत्स्नं फलं लभन्ते तथा नामधात्वर्था अपि किं प्रत्येकं फलं साधयन्त्यथ एकप्रयोजनाभिसम्बन्धात्पृथक्त्वसतां ततः स्यादैककर्म्यमेकशब्दाभिसंयोगादित्येकादशाधिकरणन्यायेन यथा दर्शपूर्णमासौ संहत्य साधयतस्तथैते ऽपि संहत्य साधयन्तीति यथेष्टं कल्पनोपपत्तेः सर्वेषां फलसाधनत्वे ऽपि पृथक्फलसाधनत्वनियमाभावान्नैकान्ततो धर्मभेदः सिद्ध्येदित्यर्थः प्रत्येकमपि फलसाधनत्वे ऽग्निहोत्रे दध्यादिवददृष्टार्थत्वेनैकार्थत्वादन्योन्यानैरपेक्ष्याद्विकल्पे सत्यथ वा ऽग्निहोत्रदर्शपूर्णमासादिवदन्योन्यनैरपेक्ष्याभावात्समुच्चये सति नात्यन्तिको धर्मभेदः सिध्येन्न चाग्निहोत्रदर्शपूर्णमासादिवदेकान्तत एकशब्दोपादानमप्यस्तीति सूचयितुम् * तथेत्युक्तम् * आदिशब्दसूचितानवक्लृप्तिर्यथेष्टशब्देन स्वीकृता । ननु ऋद्धिकामाः सत्रमासीरन्नित्याख्यातोक्तस्य बहुकर्तृत्वस्य संहतानां कर्तृत्वाद् द्रव्यभेदे ऽपि कर्तृरूपैक्यादनुपपत्तेः प्रत्येकं कर्तृत्वावसायात्पुरुषार्थस्य फलस्यैकस्मात्कर्तुः सिद्धेः तस्य तस्य कर्त्तुः प्रत्येकमधिकारो युक्तः । श्येनेनाभिचरन्यजेत चित्रया यजेत पशुकाम इत्यादौ तु नामधात्वर्थानां फलभावनां प्रत्युपादेयत्वेन समुदाये वाक्यपरिसमाप्तेः संहत्यकारित्वावगमात्प्रत्येकसाधनशक्त्यवगमहेतोर्बहुवचनस्याभावात्कथं प्रत्येकं फलसाधनतेत्याशङ्क्याह * तत्रेति * नामधात्वर्थयोरस्मिन्पूर्वपक्षे ऽरुणैकहायन्यादिवद्विशेषणविशेष्यभावानभ्युपगमाद्दर्शपूर्णमासादिवच्चैकशब्दोपादानाभावात्साहित्यानवगतेरुपादेयत्वे ऽपि समुदाये वाक्यसमाप्त्ययोगात्

बहुवचनाभावे ऽपि नामार्थस्य तृतीयया व्रीह्यादिवन्निरपेक्षसाधनत्वावगमाद्धात्वर्थस्याप्यन्यसापेक्षस्य साधनत्वे सामर्थ्याभावात्समर्थः पदविधिरिति पदमात्रविधौ सामर्थ्याधीनत्वस्मृतेः प्रत्ययार्थान्वयानुपपत्तिप्रसङ्गान्नैरपेक्ष्यावगतेर्बहुवचनाभावे ऽपि पृथक्फलसाधनत्वावगतिः सम्भवतीत्यर्थः । समुच्चयस्तर्हि न सम्भवेदित्याशङ्क्य यथा सत्त्रिणां प्रत्येकं साधनत्वशक्त्यवगमे ऽपि समुच्चयस्तथा नामधात्वर्थानामपीत्येतावता दृष्टान्ताभिधानम् । नन्वत्र सत्त्रिवत् बहुवचनाभावात्कथं समुच्चयावगतिरित्याशङ्क्य * फलेत्युक्तम् * दृष्टार्थव्रीह्यादेः साहित्ये ऽपि फलानतिशयादगत्या विकल्पो ऽङ्गीकृतः । इह तु प्रत्येकं साधनत्वे ऽपि समुच्चयेन फलभूयस्त्वस्य सारतरत्वस्य वा कल्पयितुं शक्यत्वान्न विकल्पाङ्गीकरणं युक्तमिति भावः । नन्वेवं सति दर्शपूर्णमासवदेकशब्दोपादानाभावात्कथं संहत्य साधनत्वपक्षसम्भावनेत्याशङ्क्याह * अथ वेति * अन्योन्यनैरपेक्ष्यात्संहत्य साधनत्वायोगे ऽपि दर्शपूर्णमासवत्साधनानां साहित्यमेकशब्दोपादानाभावे ऽप्येकवाक्योपादानात्सम्भवतीत्यर्थः । समुदाये वाक्यसमाप्तिसम्भावनार्थो ऽरुणादिदृष्टान्तः । विकल्पपक्षमपि सम्भावयत्यथ वेति । दर्शपूर्णमासवदेकशब्दोपादानाभावेन शब्दसामर्थ्यादरुणादिवच्चान्योन्याकाङ्क्षाभावेन वस्तुसामर्थ्यादपि साहित्यानवगतेः । समुदाये प्रमाणाभावात्प्रत्येकं वाक्यसमाप्त्या विकल्पः प्रतिभातीत्यर्थः * इति प्राप्तइति * सिद्धान्तभाष्यं प्रति पदधर्म इति सर्वेषां फलसाधनत्वे पूर्वपक्षिते तत्प्रतियोगित्वेनैकस्य फलसाधनत्वे ऽभिधातव्ये ऽपूर्वसाधनत्वाभिधानादयुक्तमाशङ्क्योपपादयन् सिद्धान्तयति *अत्रेति* अदृष्टकल्पनागौरवापत्त्या सर्वेषां फलसाधनत्वं निराकर्त्तुमेवमुक्तमित्याशयः । सर्वेषां हि फलसाधनत्वे ऽभिहिते संहत्य पक्षे ऽपि उत्पत्त्यपूर्वभेदो ऽवश्याङ्गीकार्यः । विकल्पे ऽपि प्रत्येकमपूर्वकल्पना प्रसज्येतैव तत्र यद्येकस्य फलापूर्वसाधनत्वे नामार्थस्य धात्वर्थस्यानर्थक्यं स्यात्ततो ऽगत्या बह्वदृष्टकल्पनापादकमपि सर्वेषां फलापूर्वसाधनत्वं कल्प्येत । न त्वेतदस्ति धात्वर्थस्य साधनत्वे नामार्थस्य धात्वर्थनिष्पादकत्वेन तादर्थ्योपपत्तेः नामार्थस्य चासाधनत्वे निराश्रयस्य तस्य साधनत्वायोगेनाश्रयतया धात्वर्थस्य नामार्थोपकारित्वोपपत्तेः । ततश्चादृष्टानुमानस्य प्रसङ्गो यस्यां कल्पनायां साल्पीयसी भविष्यतीति भाष्यार्थो ऽनेन सूचितः। श्लोकं व्याचष्टे * यदि हीति * तस्मादित्युपसंहारभाष्यं फलसम्बन्धद्वारा ऽपूर्वसम्बन्धाभिधानात्पूर्वपक्षप्रतियोगित्वोपपत्तावप्युप-

क्रमानुरोधेनैकस्मादपूर्वमित्युपसंहर्त्तव्ये पूर्वैक्योपसंहारादयुक्तमाशङ्क्यैकस्मादित्यनेनैकस्य फलापूर्वसाधनतया उक्तस्य तस्माच्छब्देन परामर्शमभिप्रेत्यैकस्मात्फलसम्बन्धिनो ऽपूर्वमित्येवं व्याख्यां सूचयन् सिद्धान्तमुपसंहरति * तस्मादिति * भाष्यकृता तु सर्वेषां फलसम्बन्धे फलांशस्याविधेयत्वेन नामधात्वर्थविशिष्टफलभावनाविध्यनुपपत्तेर्नामधात्वर्थानामेकविशिष्टविधिप्रसूतार्थविधिविधेयत्वायोगाच्छ्रौतव्यापारनानात्वेन वाक्यभेदापत्तेरेकस्यैव फलोद्देशेन विधेयत्वादेकमेवापूर्वं प्रमाणवदिति सूचनायापूर्वैक्यमुक्तम् । एवं च सर्वेषां फलसाधनत्वपक्षे प्रत्येकं विकल्पेनैव फलसाधनत्वापत्तेर्धर्मभेदात् सिद्धान्ते चाभेदात्साक्षादप्यस्याश्चिन्ताया लक्षणसङ्गतिः सूचिता भवति । यस्त्वेकस्य फलवत्त्वे ऽन्यस्य तदुपकारित्वे वैरूप्याख्यो वाक्यभेदो ऽभिहितः तं परिहरति * न चेति * नामार्थस्य फलसम्बन्धे सोमेन यजेतेत्यादौ चैतत्परिहारायोगाद्भावार्थाधिकरणसिद्धान्तत्वाच्च पूर्वं नामधेयत्वस्य वक्तुमशक्तेरपरितोषात्स्वमतेनान्यथा परिहरति * अगत्या वेति * अदृष्टकल्पनातो लक्षणा ज्यायसीति सूचनायागत्येत्युक्तम् । इह नामार्थस्य फलसम्बन्धे यागवता श्येनेनेति मत्वर्थलक्षणा धात्वर्थपक्षे तु श्येनवता यागेनेति मत्वर्थलक्षणाप्यत्र नास्तीति प्रौढ्या परिहारान्तरमाह * अर्थाक्षिप्तेति * धात्वर्थस्य करणत्वे कर्तृव्यापारव्याप्यत्वात्करणस्य यो ऽर्थात्करणत्वेनाक्षिप्तः कर्तृव्यापारव्याप्यत्वरूपः साध्यांशस्तद्द्वारेण धात्वर्थेरात्मनो निष्पादकस्य नामार्थरूपकरणस्य ग्रहणसिद्धेः शब्दस्योपादेयत्वोद्देश्यत्वविधेयत्वानुवाद्यत्वगुणत्वप्रधानत्वरूपाविरुद्धत्रिकद्वयपरत्वाभावान्न वैरूप्यलक्षणो विरोधो भविष्यतीत्यर्थः । नामार्थस्य करणत्वे निर्व्यापारस्य तस्य करणत्वायोगादात्मनः करणत्वसिद्धये ऽर्थाक्षिप्तो यः कस्य चिद्व्यापारस्य साध्यत्वाख्यः सामान्यरूपो ऽशस्तद्द्वारेण नामार्थैरात्मीयस्ववाक्योपात्तयागादिविशेषरूपसाध्यग्रहणसिद्धेरित्यूहेन योज्यम् ॥१॥ सर्वेषां फलसाधनत्वे कतरस्य साधनतेति विचारायोगात्तत्सिद्ध्यर्थमेकस्य साधनत्वे साधिते मुख्योपोद्घातोपक्रमार्थं यदेति भाष्यं तस्माच्छब्दपरामृष्टादेकस्मात्फलसम्बन्धिनो ऽपूर्वमित्येवं व्याचष्टे * एवमिति * अत्रापि भाष्यगतस्यैकशब्दस्य पूर्वोक्तमेव प्रयोजनद्वयमविशेषेणेति पूर्वपक्षभाष्यादनियमपक्षो ऽप्यत्राभिप्रेत इति शङ्का स्यात्तन्निवृत्तये निर्द्धारणार्थो डतरप्रत्ययः । ननु सर्वेषां फलसाधनत्वयोग्यतायामप्यनेकादृष्टकल्पनापरिहारायैकस्य साधनतोक्ता तस्य च पक्षद्वये ऽप्युपपत्तेरनियमो

ऽपि प्राप्नोतीत्याशङ्कामुपन्यासपूर्वकं निरस्यति * सर्वथेति * नन्वनियमे विकल्पापत्तेस्तस्य च पूर्वाधिकरणपूर्वपक्षनिरासेन निरस्तत्वान्नेहानियमाशङ्का युक्तेत्याशङ्कानिरासस्सूचनार्थः प्राप्तिशब्दः सर्वेषां फलसाधनत्वं वाक्यं बोधयतीति पूर्वाधिकरणपूर्वपक्षार्थः। प्रयोगे तु विकल्पो योगसिद्ध्यधिकरणन्यायेन सिद्धः फलत्वेनोक्तः। इदानीं तु वाक्येनैवानियमः प्रतिपाद्यतइति शङ्कानिरसनीयेत्याशयः। विध्यधीनत्वात्फलसाधनत्वस्य एकस्मिंश्च वाक्ये विधेयद्वयायोगेनैकविशिष्टस्येतरस्य विधेयत्वात् धात्वर्थस्य फलसम्बन्धे श्येनवता यागेनेति फलसम्बन्धिनो धात्वर्थस्य विशेष्यत्वरूपात्प्राधान्यात्फलसम्बन्धिनश्च नामार्थस्य विशेषणत्वरूपादङ्गत्वान्नामार्थस्य तु फलसम्बन्धे यागवता श्येनेनेति विपरीतविशेषणविशेष्यभावापत्तेरेकस्य चैकत्र वाक्ये वचनव्यक्तिभेदप्रसङ्गेन विशेषणविशेष्यत्वाख्याङ्गप्रधानत्वायोगान्नानियमः शङ्कितुं युक्त इत्याशयः। श्लोकं व्याचष्टे *न हीति* ३४०।२
अतो निर्द्धारणार्थो डतरप्रत्ययो युक्त इत्युपसंहरति * तस्मादिति* कः पुनरिति भाष्येणाख्यातशब्दानां भावनावाचित्वव्युत्पादनार्थं प्रश्नद्वयं कृतं तद्भावप्रधानमाख्यातमिति स्मृत्याख्यातस्य भावनावाचित्वप्रसिद्धेरयुक्तमाशङ्क्योपपादयति * कः पुनरिति * इह व्युत्पाद्यमानभावनावाचित्वबलेन भावनाक्षेपादेव कर्त्तृप्रतीतिसिद्धेराख्यातस्य कर्त्तृवाचित्वं कर्त्रधिकरणे निषेत्स्यमानमपि असिद्धभावनावाचित्वावस्थायामुच्यमानं न विरुद्धत्वेनाशङ्कनीयं विशेष्यत्वेन वा विशेषणत्वेन वा कर्तैवाख्यातेनोच्यते न तु कथं चिद्भावनेति सूचयितुं कर्त्तुः प्रत्ययार्थत्वेनाप्राधान्याद्विशेष्यत्वे ऽभिहिते प्रत्ययार्थत्वोपपादनार्थं लः कर्मणि चेति सूत्रे चकारेण कर्त्तरिक्वादित्यतः कर्त्तरीत्यनुकर्षणात्कर्त्तरि लकारोत्पत्तिरुक्ता। नन्वनेककारकानुरञ्जनसहत्वेन भावनायाः प्राधान्यदर्शनात्प्रत्ययार्थत्वं न्याय्यं न कर्त्तुरित्याशङ्क्य फलभाक्त्वात्कर्त्तुः प्राधान्यं वक्तुम् * फलेत्युक्तम् * ननु प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः तयोः प्रत्ययार्थः प्राधान्येनेति सामान्यस्मृतेर्भावप्रधानमाख्यातमिति विशेषस्मृत्या बाधाद्भावनाया एव प्राधान्यात्प्रत्ययार्थता युक्तेत्याशङ्क्य * कथं चिद्वेत्युक्तम् * धात्वर्थातिरिक्तायाः भावनायाः स्वरूपेणैव सिद्धायाः प्राधान्यप्रत्ययार्थत्वयोर्दूरोत्सारितत्वाद्धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयतइति च भावशब्दस्य स्वतन्त्रधात्वर्थवाचित्वस्मृतेर्विशेषस्मृतिबलेन प्रकृतिप्रत्ययार्थप्राधान्याविपर्ययमभ्युपगम्य कर्तृविशिष्टयागाद्यभिधानं युक्तं न तु भावनाप्राधान्यपरेयं स्मृतिरित्याशयः। ननु कः पुन-

भाव इति भावनाक्षेपेणैव तद्वाचिशब्दाक्षेपसिद्धेः के भावशब्दा इति पुनराक्षेपो ऽयुक्त इत्याशङ्क्याह * सत्यामपीति * यदि कश्चिद्भावोत्पन्नल्युडादिप्रत्ययान्तधातुवाच्यस्य भावत्वाभ्युपगमेनार्थपर्यनुयोगं परिहरेत्तं प्रति श्येनेन यजेतेत्यादिषु एतदधिकरणोदाहरणभूतेषु वाक्येषु तादृग्भावशब्दाभावादन्य एव भावो भावशब्दाश्चाभिमता इतिप्रत्युत्तरसूचनायोभयप्रश्न इत्यर्थः। अलौकिकशब्दो वैयाकरणाप्रसिद्धत्वाभिप्रायः। न केवलं भाव एवालौकिकः किं तु भावशब्दा अपीत्यपिशब्दार्थः यजतीत्युत्तरभाष्ये शब्दमात्रकथनादव्यापकमाशङ्क्य शब्दान्तरकथनेनार्थान्तरस्यापि सूचनाद्व्यापकत्वं दर्शयन् व्याचष्टे * सिद्धान्तेति * वैयाकरणाभिमतशुद्धधात्वर्थव्यतिरिक्तभावनारूपार्थवाचित्वोपपादनार्थं हेतुमति चेति णिचि कृते भावीतीकारान्तत्वादेरजित्यच्प्रत्यये सति णेरनिटीति णिलोपे भावशब्दव्युत्पत्तिनिरूपणेन कः पुनर्भाव इति प्रश्ने निरस्ते के भावशब्दा इति प्रश्ननिरासाय आख्यातस्य * चेत्युक्तम् * धात्वर्थातिरिक्तभावनाख्यभावाभ्युपगमेनोदाहृतानां तद्वाचित्वासम्भवाशङ्कार्थं नन्विति भाष्यं धातोर्योगादिधात्वर्थवाचित्वे ऽपि आख्यातस्य भावनावाचित्वोपपत्तेरयुक्तमाशङ्क्योपपादयति * परः पुनरिति * भावनाया णिजन्तभवतिधातुमात्रवाचित्वाच्छब्दान्तरवाच्यत्वायोगे ऽभिहिते ननु यजत्यादिधात्वन्तरवाच्यत्वाभावे ऽप्याख्यातवाच्यत्वं भविष्यतीत्याशङ्क्याख्यातस्य धात्वर्थवाचित्वादर्शनाद्भावयतेश्च सनाद्यन्ता धातव इति धातुसञ्ज्ञत्वेनाख्यातप्रकृतिभूतयजत्यादिधात्वर्थत्वाभावे ऽपि भावनाया धात्वन्तरार्थत्वान्नाख्यातवाच्यत्वं सम्भवतीति दर्शयितुं * न चेत्युक्तम् * नन्वेवमपि धातूनां भावनावाचित्वस्य सिद्धान्त्यनभिमतत्वात्तन्निषेधो न युक्त इत्याशङ्क्य * काममित्युक्तम्। धात्वर्थत्वेनाख्यातप्रत्ययार्थत्वे निषिद्धे यदि कश्चिद्याति वाति गच्छतीत्यादिधातूनां तुल्यार्थत्वदर्शनाद्यजत्यादिधातूनां भावयतिधातुवाच्यभावनावाचित्वं शङ्केत तन्निरासायेदमुक्तमित्याशयः *नैतदेवमिति* परिहारभाष्यं धात्वर्थाभिधानानर्थक्यमाशङ्क्य भावनानुरञ्जकत्वेन धात्वर्थाभिधानं दर्शयन् व्याचष्टे * अत्रेति * धात्वर्थस्यापि प्रत्ययार्थतानन्यथासिद्धप्रतीतिबलादवगम्यमाना न विरुद्धेत्याशयः। श्लोकं व्याचष्टे * यावानेव हीति * नन्वाख्यातप्रत्ययस्य भावनावाचित्वे ऽपि इह धात्वर्थस्य फलभावनाकरणत्वाभिधानार्थं धातोः फलपदसम्बन्धेनापूर्वंगमकताया विवक्षितस्य भावनावाचित्वाभावेन भावशब्दत्वाभावात् किं भावशब्देभ्यो ऽपूर्वमि-

ति सिद्धान्तवचनव्यक्तिरयुक्ता प्रत्ययसम्बन्धानुग्रहात्तु भावनानुरञ्जकस्यार्थवाचितया भावशब्दत्वे द्रव्यगुणशब्दानामपि, पूर्वपक्षे प्रत्ययसम्बन्धस्य सर्वेषां भावार्थ इति चेदित्यत्र वक्ष्यमाणत्वाद्भावशब्दत्वापत्तिरित्याशङ्कानिरासार्थं द्रव्यगुणशब्देभ्यो द्रव्यगुणप्रत्ययो न तु तेभ्यो भावना प्रतीयते तदर्थस्य भावनानुरञ्जकत्वायोगादिति प्रत्ययशब्दस्य समासान्निष्कृष्य भावनाशब्देनान्वयं कर्मव्युत्पत्तिं चाङ्गीकृत्य भाष्यकृतोक्तम् । तत्र के द्रव्यगुणाः के वा तच्छब्दा इति प्रश्नपूर्वकं तत्स्वरूपमनुक्त्वैव भावशब्दत्वशङ्कानिरासो न युक्त इत्याशङ्क्याह * तद्व्यतिरिक्तास्त्विति * आख्यातानां भावशब्दत्वे कथिते तद्व्यतिरिक्तानां द्रव्यगुणशब्दत्वज्ञानसिद्धेः प्रश्नपूर्वकमनभिधानमित्यर्थः । उपलक्षणार्थः पृष्ठशब्दः निपातोपसर्गाणामाख्यातव्यतिरेकेऽपि स्वतन्त्रार्थानभिधायित्वेनेहाविवक्षितत्वान्न द्रव्यगुणशब्दत्वापत्तिः । द्रव्यगुणशब्दत्वेन च निष्पन्नार्थाभिधायित्वस्य विवक्षितत्वात्क्रियावाचिनां नाम्नां द्रव्यगुणशब्दत्वापत्तावप्यदोषः । किं तावदिति पूर्वपक्षभाष्यमव्यवस्थितशास्त्रार्थानुपपत्तेरनियमपक्षायोगादयुक्तमाशङ्क्य यदि भावशब्देभ्य एवाकाङ्क्षोत्पद्यते न द्रव्यगुणशब्देभ्य इति विशेषः स्यात्ततो द्रव्यगुणशब्दानां नैराकाङ्क्ष्येणाकाङ्क्षानिबन्धनफलपदसम्बन्धायोगान्नापूर्वगमकत्वं स्यान्न त्वसावस्ति द्रव्यगुणशब्देभ्योऽपि करणविभक्त्यन्तेभ्यः साध्याद्याकाङ्क्षोत्पत्तेरविशेषादित्येव व्याख्यां सूचयन् पूर्वपक्षमाह * तत्रेति * यथैव भावशब्देभ्यो ३४।१।१
भावार्थत्वात् भावनाकाङ्क्षोत्पत्तिस्तथैव द्रव्यगुणशब्देभ्योऽपि करणार्थत्वादित्यविशेषपदव्याख्यासूचनार्थं करणार्थत्वेन फलपदसङ्गतौ योग्यत्वादित्युक्तम् । इतरथा निष्पन्नार्थाभिधायित्वेनैव योग्यत्वसिद्धेः करणार्थत्वस्य च धातावपि तुल्यत्वात्करणार्थत्वशब्दोऽनर्थकः स्यादिति । नन्वविशेषे सति कथं द्रव्यादिशब्दानामेव फलपदसङ्गतिरित्याशङ्क्य निष्पन्नार्थाभिधायित्वलक्षणाभिधानमनेन च भाष्येणाकाङ्क्षोत्पादकत्वलक्षणविशेषसदसद्भावसन्देह एव नामार्थस्य फलभावनाकरणत्वं धात्वर्थस्य चेति सन्देहकारणमिति सूचितं भवति । अत एव सर्वेषां भावोऽर्थ इति चेदित्यनेन सर्वेषां साकाङ्क्षत्वाविशेषमाशङ्क्य येषामुत्पत्ताविति सूत्रद्वयेन विशेषो वक्ष्यते । श्लोकं व्याचष्टे * सर्वत्र हीति * न साध्यान्तरमित्यनेन धात्वर्थस्य विधिसामर्थ्यात्करणत्वावगतेः साध्यापेक्षायामपि असिद्धत्वेन तस्यापि साध्यत्वादसम्बन्धः समत्वात्स्यादिति न्यायान्न

साध्यान्वयो ऽस्तीति सूचितम् । उच्यतइति सिद्धान्तभाष्यं व्याचष्टे * इतीति.* सूत्रशब्देन प्रतिपदाधिकरणसिद्धान्तस्योत्सूत्रत्वं सूचितम् । कीदृशेन सूत्रेण भाष्यकृतोत्तरं दीयतइत्यपेक्षिते सूत्रं योजयति * भावार्था इति * यच्छब्देन भावप्रधानमाख्यातमित्याख्यातशब्दानां भावनावाचित्वप्रसिद्धेस्तद्विषयो ऽयं निर्देश इति सूचितम् । फलस्येति भाष्यात् क्रियाशब्दस्य फलनिष्पादनाविषयत्वप्रतीतावपि भावशब्दानां फलनिष्पादनप्रत्यायकत्वाभिधानस्य यदेकमपूर्वं तदा सन्देहः । किं भावशब्देभ्य इति सन्देहभाष्याद्भावशब्देभ्यो ऽपूर्वमिति सिद्धान्तवचनव्यक्त्यर्थत्वावगतेस्तद्धेतुत्वसूचनार्थमपूर्वक्रियागतिरित्युक्तम् । एष ह्यर्थो विधीयतइत्युक्ते को ऽसावित्यपेक्षायाम् * कुर्यादित्युक्तम् * आख्यातपदानां फलपदान्वये धात्वर्थस्य फलभावनाकरणत्वं सिद्धान्त्यभिमतं सिद्ध्यतीति प्रदर्शनार्थम् * यजिनेत्युक्तम् * (फलसाधनविधिमात्रेण भावशब्दानामपूर्वंगमकत्वासिद्धेस्तैरित्यध्याहृतम् भावशब्दानामेव फलपदान्वयो न द्रव्यगुणशब्दानामित्याशयः।[1]) ननु भावशब्दानां फलसाधनविधायकत्वस्यापूर्वंगमकत्वे कथं हेतुतेत्याशङ्क्याह * फलेति* ननु भावशब्दानामेव फलपदान्वयो न द्रव्यगुणशब्दानामित्येतदेव कथमवगम्यतइत्याशङ्क्याह * सम्बन्धश्चेति * द्रव्यगुणशब्देभ्यः करणार्थत्वेन क्रियामात्राकाङ्क्षोत्पत्तावपि कारकाणां क्रियान्वयनिरपेक्षान्योन्यान्वयायोगेन साध्यानाकाङ्क्षत्वात्तदभावे चेतिकर्त्तव्यतान्वयानुपपत्तेः भावशब्दवत् सर्वपदार्थान्वयः स्यादित्याकाङ्क्षा नोत्पद्यत इति सूचयितुम् * प्रसर्पन्तीत्युक्तम् * दृश्यतइत्यनेन प्रतीतिसाक्षिकतोक्ता अतो भावशब्दानां फलपदान्वयेन फलसाधनविधायकत्वादपूर्वंगमकतेति सूत्रयोजनामुपसंहरति * तस्मादिति * क्रियाशब्दव्याख्यानार्थो भावनाशब्दः । न चात्र धात्वर्थस्य फलभावनाकरणत्वं तद्भेदानुनिष्पाद्यपूर्वभेदसिद्ध्यर्थं वाच्यम्।तच्च भावनावाचिनः प्रत्ययस्य फलपदान्वये ऽपि करणाकाङ्क्षायां सिद्धत्वेन योग्यत्वात्पदान्तरोपात्तस्यापि नामार्थस्यैव करणत्वापत्तेर्न सिद्ध्यतीत्याशङ्क्याह * तत्र चेति * योग्यत्वं नाम लिङ्गं तच्चैकपदोपादाननिमित्तप्रत्यासत्तिलक्षणया श्रुत्या बाध्यतइति भावः । स्वकारकनिष्पादितस्य धात्वर्थस्यापि योग्यतास्तीति सूचनार्थश्चकारः । सिद्धे च धात्वर्थस्य करणत्वे तदन्यथानुपपत्तिकल्प्यत्वेनापूर्वस्य तद्भेदानुनिष्पादी भेदः सिद्ध्यतीति सूचयन्नाह * अत इति * भाष्यं चा-

१ अयं पा० २ पु० ना० ।

नेनैव व्याख्यातम्। भावशब्देभ्यः फलक्रियाप्रतीयतइति भावशब्दानां फलपदान्वये ऽभिहिते कुतो भावशब्दानामन्वय इति पृष्टे ऽशन्त्रयाकाङ्क्षभावनावाचित्वादेवेत्युक्त्वा यआहुरित्यनेन किमपीति भाव्याकाङ्क्षाप्रदर्शनपूर्वकमेतदेवोपपाद्यनन्वाख्यातस्य भावनावाचिनः फलपदान्वये ऽपि करणाकाङ्क्षायां नामार्थस्यापि करणत्वोपपत्तेः कथं धात्वर्थस्य करणत्वसिद्धिरित्याशङ्क्य ते चेत्यनेन धात्वर्थानुरक्तभावनावाचितया धात्वर्थसम्बद्धानां स्वर्गोत्पादनाभिधायित्वात्प्रत्यासत्तेर्धात्वर्थस्यैव करणत्वावगतिरिति कर्मशब्दा इति एतत्सूत्रावयवसूचिते ऽर्थे ऽभिहिते नन्वेकप्रत्ययोपादानश्रुत्या धात्वर्थनिरपेक्षायाः भावनाया विध्यन्वयात्स्वर्गादिपुरुषार्थफलत्वे ऽवगते करणाकाङ्क्षायामपि निष्पन्नत्वेनायोग्यत्वात्प्रत्यासन्नमपि धात्वर्थं भाव्यांशवत्करणांशादपि प्रच्याव्य नामार्थेनैवान्वयावगमात्कुतो धात्वर्थ सम्बन्ध इति पृष्ट्वा एष हीति सूत्रावयेन प्रकृतिप्रत्ययपौर्वापर्यनियमाच्छुद्धभावनानवगतेरनुष्ठानाशक्तेश्च धात्वर्थानुरक्ताया एव फलोद्देशेन विधीयमानत्वाद्विधिगम्यत्वाच्च करणत्वस्य केन भावयेत्स्वर्गमित्यपेक्षायां यागादिनेत्येवान्वयो युक्त इत्युत्तरे दत्ते धात्वर्थकरणत्वाभिधानफलं भावनाशब्दानामपूर्वगमकत्वं यस्य चेत्यादिनोक्तमिति अपूर्वभावनागम्यतइति भावनाशब्देन निष्पत्त्युत्पत्तिशब्दयोः प्रयोज्यव्यापारवाचिनोरपि प्रयोजकव्यापारलक्षणार्थत्वं सूचितम्। अन्यथानुपपत्तिशब्देन तेनापूर्वं कृत्वा नान्यथेति भाष्येणापूर्वस्यार्थापत्तिगम्यता पराभिमतलिङादिवाच्यत्वनिरासायोक्तेति सूचितं तथा च ननु कश्चिच्छब्दः साक्षादपूर्वस्य वाचको ऽस्तीत्युक्तं। लिङादिव्यतिरिक्तशब्दाभिप्रायत्वे तु कश्चिच्छब्दो ऽसमञ्जसः स्यात्।अपूर्वशब्दस्याप्यनुष्ठानात्पूर्वं न जायत इत्यवयवव्युत्पत्त्या प्रवृत्तेर्न वाचकतास्तीत्यविरोधः।

अतो लिङादिवाच्यत्वमपूर्वस्य वदन्तिये।
एतद्भाष्यविरोधस्तैः परिहर्त्तुं न शक्यते॥

एवं सूत्रयोजनापूर्वकं सङ्क्षेपेण भाष्यं व्याख्यायाख्यातस्य भावनावाचित्वमाक्षिपति * कथं पुनरिति * यद्यपि प्रत्ययवाचित्ववद्यज्यादिवाच्यत्वमप्याक्षेप्तुरनिष्टं तथापि प्रत्ययमात्रवाच्यत्वसिद्धान्तसूचनार्थं यागादिना स्वर्गकाम इति करणांशवाचित्वेन यज्यादीन्धातून्पृथक्कृत्य प्रत्ययमात्रवाच्यो भावनारूपो ऽर्थो यो ऽभ्युपगम्यते * स कथं लभ्यतइति * अनुवादपूर्वकमाक्षेपः कृतः। एवकारेण धातुवाच्यत्व-

निरासासिद्धावपि धातुप्रत्ययसमुदायवाच्यत्वनिरासार्थः केवलशब्दः। ये तु भावनारूपो ऽर्थो ऽङ्गीक्रियमाणो धातोः स्वार्थाभिधानोपक्षीणशक्तित्वात्प्रत्ययवाच्यो ऽङ्गीकार्यः। स च न सम्भवतीति भावनासद्भावाक्षेपार्थत्वेनेमं ग्रन्थं व्याचक्षते तेषामभिदध्युः *स्वशक्त्या हीति* वाच्यत्वाक्षेपोपपादनार्थः सिद्धकर्तृक्रियावाचिनीत्यादिस्तस्मात्प्रत्ययार्थ एव भावनेत्युपपन्नमित्यन्तश्च वाच्यत्वसमर्थनार्थः। सर्वो ऽयं ग्रन्थो ऽन्यपरत्वापत्तेरसमञ्जस एव स्यात्। न चाख्यातवाच्यत्वासम्भवमात्रेण वस्त्वभावो भवति घटादिवन्नामवाच्यत्वोपपत्तेः। उत्पादनमेव च प्रयत्नानुष्ठानाद्यपरपर्यायं भावनाशब्देनाभिप्रेतम्। तच्च सर्वलोकप्रसिद्धत्वान्नापह्नोतुं शक्यम्। धात्वर्थमात्रातिरेके तु विप्रतिपत्तिः तत्र चानतिरेके ऽपि धातुना धात्वर्थस्वरूपमभिधाय तस्यैवान्योत्पादानुकूलत्वरूपभावनाप्रत्ययेनोच्यतइति वक्तुं शक्यत्वाच्च धात्वर्थातिरेकाक्षेपार्थत्वं वाच्यत्वाक्षेपस्य युक्तम्। भावनायां तु धात्वर्थस्य करणत्वसिद्ध्यर्थम्। ननु च यदि प्रयोजकव्यापारो भावनेष्यते इत्यादिना शङ्कापूर्वकं धात्वर्थातिरेको वक्ष्यते अत एव प्रत्ययार्थस्य भावस्य वाच्यता तत्र चिन्तितेत्याकृत्यधिकरणे ऽभिहितम्। वाच्यत्वाक्षेपं प्रश्नपूर्वकमुपपादयति*कुत इति* आख्यातप्रत्ययमात्रस्य भावनावाचित्वाक्षेपे ऽप्युदाहरणभूतविधिवाक्यगताख्याताभिप्रायेण * विधिमात्रमित्युक्तम् * कर्तृसंख्योपग्रहविशेषाभिधाने ऽपि भावनाभिधाननिरासार्थो मात्रशब्दः। धातुप्रत्ययांशद्वयोगिन्याख्याते धात्वंशस्य करणांशवाचित्वाभ्युपगमात्प्रत्ययस्यापि भावनावाचित्वासम्भवे ऽनभिधेयताक्षेप्तुरभिमता सिद्ध्यतीति सूचयितुम् * केनेत्युक्तम् * नन्वाख्यातप्रत्ययस्यानेकार्थत्वाद्विध्यभिधायित्वे ऽप्यविरुद्धं भावनाभिधायित्वमित्याशङ्क्य * स्वशक्त्येत्युक्तम् * स्वप्रत्ययार्थमात्रे प्रत्ययस्य शक्तेर्भावयतिधातुवाच्यभावनाभिधायित्वं न सम्भवतीत्याशयः। नन्वेवमपि धात्वंशेनाभिधानोपपत्तेः केनांशेनेत्यनभिधेयत्वाभिधानमयुक्तमित्याशङ्क्याह * न चेति * यज्यादिधातूनामण्यन्तधात्वर्थाभिधानव्यापृतत्वात् ण्यन्तभावयतिधात्वर्थाभिधायिता न युक्तेत्यर्थः। नन्वाख्यातश्रवणानन्तरं भावनाप्रतीत्यन्यथानुपपत्त्या तत्रापिशक्तिः कल्पनीयेत्याशङ्क्याह *अत इति* नास्माभिः प्रतीयमानाया अपि भावनाया युक्त्या वाच्यत्वं निरस्यते किं त्वप्रतीयमानत्वादेव स्वपक्षानुरागेण त्वप्रतीयमानायामपि प्रतीत्यारोपवादिनं प्रति युक्त्युपन्यास इत्याशयः। यतो लिङादयो धातवो वा न भावनां प्रतिपादयन्ति न भा-

वनाप्रतिपत्तिं जनयन्ति न तेभ्यो भावनाप्रतिपत्तिर्जायते अतः श-
ब्दजनितप्रतीतिरहितमेवेदमारोप्यतइत्यर्थः । ननु लिङादीनां धा-
त्वन्तरार्थवाचित्वायोगे ऽपि करोतिभावयतिभ्यां विवरणदर्शनात्त-
त्पर्यायत्वावगतेस्तदर्थवाचिता युक्तेत्याशङ्क्याह * किं चेति * पि-
कादिशब्दान्तरस्य यो ऽर्थः कोकिलादिपर्यायैर्व्याख्यायते तस्मिन्नर्थे
न स पर्यायस्तेन शब्दान्तरेण सह प्रयुज्यते किं तु केवलस्ततश्च प-
र्यायत्वस्य सहाप्रयोज्यत्वेन व्याप्तेराख्याते करोतिभावयतिभ्यां स-
हाप्रयोज्यत्वव्यावृत्त्या तत्पर्यायत्वव्यावृत्तिरित्याशयः । श्लोकं व्या-
चष्टे * तद्यथेति * ननु करोतिभावयतिमात्रेणाख्यातार्थकथन-
सिद्धावपि केवलधातुप्रयोगायोगात्तदनुग्रहार्थं प्रत्ययः प्रयुज्यमानो
न दोषमावहतीत्याशङ्क्याह * न हीति * प्रत्ययसहितकरोतिभा- ३४२।२
वयतिप्रयोगे सति या करोतिना भावयतिना वा यजत्यादिपदप्रत्या-
य्या क्रिया व्याख्यायते सा यथा धात्वर्थस्य यागेनेति पृथगुपादाना-
त्तद्वाच्या न सम्भवति तथा पर्याययोः सह प्रयोगायोगेनाख्यातवा-
च्यत्वस्याप्यसम्भवो वा विशेषाद्व्याख्यान्यथानुपपत्त्या चैकेनांशेन
वाच्येत्यवगतावपि किं यजत्यादिधात्वंशेन प्रत्याय्याख्यातांशेन वेति
विवेकज्ञानान्नार्थकथनं सिद्ध्येदिति भावः । नन्वेवं सति प्रत्ययो
न प्रयुज्यतामित्याशङ्क्याह * अत्र त्विति * केवलधातुप्रयोगाद-
वश्यं प्रत्ययः प्रयोज्य इति भावः । करोतिभावयतिपरप्रत्ययप्रयोगे
च सति तेनैव यजिपरप्रत्ययार्थोपादानात्करोतिभावयत्योस्तदर्थकथ-
नार्थत्वानुपपत्तेरानर्थक्यं स्यादित्याह * अतश्चेति * अधिकस्या-
वापः प्रक्षेपो ऽस्यास्तीति बहुव्रीह्यर्थः । नन्वधिकावापो ऽपि विश्व-
जिदादिवाक्ये स्वर्गकामादिपदावापवन्न दोषमावहतीत्याशङ्कानिरा-
सं सूचयन्नुपसंहरति * तस्मादिति * आनर्थक्येन वेदाननुमत-
त्वान्नास्य तत्तुल्यतेत्याशयः । आख्यातस्य भावनावाचित्वमाक्षिप्तं
समाधातुं करोत्यर्थवाचित्वं तावदुपपादयति * अत्रेति *किं करोति
पचतीति करोतिसामानाधिकरण्येनाख्यातप्रत्यये करोत्यर्थो वाच्यो
ऽवगम्यतइत्युक्ते भवत्यादिपराख्यातप्रत्यये करोत्यर्थसामानाधिक-
रण्याभावात्करोत्यर्थवाचित्वं न सिद्ध्यतीत्याशङ्क्य * सिद्धेत्यु-
क्तम् * आक्षेपवाद्यसिद्धमपि आख्यातप्रत्ययस्य क्रियावाचित्वं स्व-
सिद्धान्तसिद्धमङ्गीकृत्य नाख्यातमात्रस्य करोत्यर्थवाचित्वं ब्रूमः किं
तु करोतिसामानाधिकरण्यवतामेवाख्यातानामिति ख्यापनाय सिद्ध-
कर्तृक्रियावाचित्वमुपलक्षणं कृतम् । यद्वा ये धात्वर्थस्य स्वरूपेण धा-
तुनाभिहितस्यापि निष्पाद्यत्वलक्षणक्रियारूपेण प्रमाप्रत्ययवाच्यत्व-

मङ्गीकृत्य मीमांसकाभिमतधात्वर्थातिरिक्तभाव्यनिष्ठभावनावाचित्वं प्रत्ययस्य नेच्छन्ति तान्प्रति भावनावाचित्वं साधयितुं करोत्यर्थेवाचितानेन साध्यतइत्यदोषः। नन्वसिद्धकर्तृविषयेष्वस्त्यादिपरेष्वाख्यातेषु करोतिसामानाधिकरण्याभावेन करोत्यर्थक्रियावाचित्वाभावात्तद्व्यावृत्त्यर्थं सिद्धविशेषणं व्यर्थमित्याशङ्क्य भाव्यनिष्ठभावनारूपकरोतिवाच्यक्रियावाचित्वाभावे ऽपि कर्त्रात्मलाभाख्यक्रियावाचित्वसद्भावाद्विशेषणसाफल्यं दर्शयितुं सिद्धासिद्धकर्तृक्रियावाचीन्याख्यातानि विविनक्ति *इहेति* भवतेर्जन्माख्याद्यभावविकारवाचित्वात्ततः परा तिङ्विभक्तिर्जायमानस्य कर्त्तुर्जन्मोत्पत्त्याद्यपरपर्यायात्मलाभमात्ररूपं व्यापारं प्रतिपादयन्ति। अस्तिविद्यत्योस्तु द्वितीयभावविकारवाचित्वात्ततः परां सत्तां प्रतिपद्यमानस्य कर्त्तुः स्वसत्ताख्यात्मलाभमात्ररूपमित्यर्थः। अन्यात्मलाभविषयस्यैव व्यापारस्य करोत्यर्थत्वात्तस्य चास्त्यादिपरया विभक्त्यानभिधानात्करोत्यर्थक्रियावाचित्वाभावे ऽप्यात्मलाभस्यानिष्पन्नरूपत्वेन व्यापारशब्दवाच्यत्वाद्व्यापारस्य क्रियात्वप्रसिद्धेर्व्यापाराख्यक्रियावाचित्वस्य सर्वाख्यातेषु भावादर्थवद्विशेषणमित्यर्थः। ननु द्रव्यव्यतिरेकेण व्यापारस्यानुपलब्धेरभावान्न वाच्यत्वं सम्भवतीत्याशङ्क्याह *द्रव्यमेव चेति* जातिगुणवत्क्रियाया अपि द्रव्यादत्यन्तव्यतिरेकाभावान्न व्यतिरेकानुपलम्भमात्रेणाभावो भवतीति सूचयितुम् *द्रव्यमेवेत्युक्तम्* ननु द्रव्यस्य व्यापारशब्दवाच्यत्वे सर्वदा घटो भवति देवदत्तः पचतीति प्रयोगः स्यादित्याशङ्क्य प्रचलितमपगतमात्मनस्तत्त्वमौदासीन्यस्वरूपं यस्येति द्रव्यगतस्यावस्थाविशेषस्य व्यापारशब्दवाच्यत्वं सूचितम्। नन्वेवं सति यौवनाद्यवस्थाविशेषस्यापि व्यापारत्वं स्यादित्याशङ्क्य विप्रकीर्णो विक्षिप्तो ऽनेकत्र व्यासक्तत्वादेकत्रानुपसंहृतः स्व आत्मीयो भावो धर्मो यस्येति अवस्थान्तरव्यावृत्त्यर्थं व्यापारावस्थाया विप्रकीर्णत्वं विशेषणम्। नन्वेवं सत्यवयविरूपस्याप्यनेकावयवव्यासक्तत्वेनैकत्रानुपसंहृतत्वाद्व्यापारत्वं स्यादित्याशङ्क्य तद्व्यावृत्त्यर्थं क्रियावयवानां क्षणिकत्वेनानेकक्षणव्यासक्तत्वाभावे ऽपि।

> यदा त्वाद्यपरिस्पन्दात्प्रभृत्या फललाभतः।
> क्रिया पूर्वापरीभूता लक्ष्यते वर्त्तते तदा॥

अनेकफलसाधनानेकक्रियावयवसमूहस्यैव क्रियात्वाभिधानात्तस्याः पूर्वापरानेकक्षणव्यासक्तत्वरूपं पूर्वापरीभूतत्वं विशेषणम्। अवयविनस्त्वनेकावयवव्यासक्तत्वे ऽपि युगपद् बुद्धे-

नानेकक्षणव्यासक्तताऽस्तीति भावः। नन्वेवं सत्यनेकक्षणवर्त्तित्वेन क्रियाया द्रव्यतुल्यत्वात्कथं द्रव्याद्भेदाध्यवसाय इत्याशङ्क्य पूर्वौदासीन्यावस्थातः प्रच्युतं परमौदासीन्यावस्थामप्राप्तमिति पूर्वापरावस्थयोरनुवृत्ता द्रव्याद्व्यावृत्तरूपाभिधानेन भेदो दर्शितः। नन्वस्तु नाम द्रव्यस्यैवंविधावस्थाविशेषस्तस्य तु व्यापारशब्दवाच्यत्वे किं निमित्तमित्याशङ्क्य फलोत्पादानुकूलत्वस्य निमित्तत्वसूचनार्थम् * विशिष्टेत्युक्तम् * यद्वा ननु घटो भवतीत्यादौ घटस्य वा कर्तृत्वं विवक्षितं मृत्पिण्डस्य वा। तच्च घटस्यासिद्धसत्ताकत्वेन व्यापाराश्रयत्वायोगान्मृत्पिण्डस्य च सिद्धत्वेन कर्त्रात्मलाभाख्यव्यापाराश्रयत्वायोगान्नोभयथापि सम्भवतीत्याशङ्क्येदमुक्तम्। घटोत्पत्तेः प्रागपि घटविषयायाः मृत्पिण्डाश्रितायाः शक्तेः कार्यकारणनियमान्यथानुपपत्तिकल्पितायाः सद्भावात्स्वरूपेण चाविद्यमानस्यापि शक्तिसद्भावमात्रेणातीतानागतज्ञानादौ कारकत्वदर्शनात्कर्तृत्वोपपत्तेः।समवायिकारणाच्च कार्यस्यात्यन्तभेदाभावान्मृत्पिण्डात्मना व्यापाराश्रयत्वोपपत्तेर्घटात्मना चासिद्धत्वोपपत्तेरुभयथाप्यविरोध इत्याशयः। नन्वस्य सिद्धासिद्धकर्त्राश्रितत्वे तस्यैव करोत्यर्थत्वादस्त्यादावपि करोतिसामानाधिकरण्यापत्तिः सिद्धकर्तृमात्राश्रितत्वे त्वस्त्यादिपरायाः विभक्तेर्व्यापारप्रतिपादकत्वाभिधानं न युज्येतेत्याशङ्क्यासिद्धकर्त्राश्रितस्य व्यापारस्य करोत्यर्थत्वाभावं दर्शयितुमाश्रयं तावद्विविनक्ति *तत्रेति* अन्योत्पादानुकूलस्यैव व्यापारस्य करोत्यर्थं वक्तुमेवकारः। अन्यात्मलाभफलकस्य हि व्यापारस्य कर्त्ता करोतीति व्यपदिश्यते अस्त्या पराख्यातप्रयोगे च कर्त्तुरेवात्मलाभाख्यव्यापारावस्थात्वप्रतीतेरन्यात्मलाभफलकव्यापारायोगान्न करोतिव्यपदेशता युक्तेत्याशयः। एवंशब्दात्प्रकृतव्यापारमात्रपरामर्शावगमे ऽपि सिद्धे कर्त्तर्यन्यस्यैवमवस्थात्वाभिधानेन तस्यासिद्धकर्त्तृविषयत्वावसायात्तस्य चात्मलाभातिरिक्तव्यापाराभावात्तत्परत्वव्याख्यानमसिद्धे कर्त्तरि तस्यैव व्यापारत्वं प्रतीयते सिद्धे त्वन्यो ऽपीत्यपिशब्दाध्याहारेण व्याख्याने व्यापारमात्रपरामर्शे ऽप्यदोषः।अन्यस्यात्मलाभाख्यं व्यापारं प्रति कर्तृत्वे ऽपि सिद्धकर्त्तृत्वस्य करोतिप्रयोगविषयत्वात्तत्र चासिद्धस्य कर्तृत्वाप्रतीतेः कर्त्तुरन्यत्वमविरुद्धं ततश्चासिद्धे कर्त्तर्यन्यात्मलाभफलाभावेन तद्व्यापारस्य करोत्यर्थत्वायोगात् सिद्धकर्त्तुर्व्यापारस्य त्वन्यात्मलाभफलत्वात्करोत्यर्थत्वोपपत्तेर्व्यवस्था युक्तेत्याह * तदिति * तस्मादित्यर्थे तदित्यव्ययम्। सिद्धकर्त्राश्रितस्यैव व्यापारस्य करोतिवाच्यत्वं ना-

सिद्धकर्त्राश्रितस्येत्येतदेव करोतिसामानाधिकरण्यव्यवस्थयोपपादयति * तथा चेति * नन्वाख्यातकरोत्योर्द्वयोरप्याकृत्यधिकरणान्यायेन सामान्यवाचित्वात्पर्यायत्वापत्तेः सामानाधिकरण्यं न युक्तमित्याशङ्क्य * सामान्येत्युक्तम् * सामान्यवाचिनोऽप्याख्यातस्य प्रकृत्यर्थोपधानेन विशेषपरत्वात्को राजा यातीति शुद्धसामान्यवाचिनो राजशब्दस्येव पाञ्चालराजशब्देन पाञ्चालविशेषोपहितराजसामान्यवाचिना सामानाधिकरण्यं युक्तमित्याशयः। यथाहुः मण्डनमिश्राः भेदोपहितसामान्यवचनेऽप्यपृथक् श्रुतिरिति । श्लोकार्थमुपसंहरति * तस्मादिति * ननु लब्धात्मककर्तृव्यापारवाचिनामाख्यातानां करोतिसामानाधिकरण्यात्करोत्यर्थत्वेऽपि भावयत्यर्थभावनावाचित्वं कथमित्याशङ्क्य भावनावाचित्वोपपादनार्थं करोतिभावयत्योस्तुल्यार्थत्वमुपपादयितुं भावयतिवत् करोतेरपि भवत्यर्थकर्तृकर्मनिष्ठत्वं दर्शयन्कर्मनिष्ठतामेव तावदाह*तत्र चेति* उपसर्जनत्वेनाप्यनन्तरनिर्दिष्टस्य करोत्यर्थस्य योग्यतया तत्शब्देन परा-
३४३। मर्शात्तत्र करोत्यर्थ इत्यर्थः । एतदेव प्रश्नपूर्वकमुपपादयति * कुत इति*ननु कर्मनिष्ठत्वेऽपि ग्रामं गच्छतीतिवद्भवत्यर्थकर्मकर्तृनिष्ठत्वाभावात्कथं भावयतिना तुल्यार्थतेत्याशङ्क्य करोत्यर्थं प्रति भवत्यर्थकर्तुरेव कर्मतेत्याह * भवत्यर्थस्येति * करोतेरर्थस्येत्यर्थव्यतिरेकजनिता षष्ठी यजतिस्त्वित्यादिवद्धात्वर्थपरो वायं धातुनिर्देशः श्लोकपूर्वार्द्धं व्याचष्टे * करोतेरिति * उत्तरार्द्धं व्याख्यातुं कर्मणः प्रधानक्रियातिरिक्तावान्तरक्रियाकर्तृत्वापेक्षां तावदाह * सर्वेति * नन्ववान्तरक्रियापेक्षायामपि भवनक्रियापेक्षायाः प्रधानक्रियान्तरेष्वदर्शनात्कथमत्र तदपेक्षेत्याशङ्क्याह * प्रतिक्रियं चेति* अन्वयव्यतिरेकौ दर्शयति * तथा हीति * व्यतिरेकाभिधानसूचितान्वयदर्शनपूर्वकं श्लोकं व्याचष्टे * य एवेति * स्वयं विशीर्णे बीजे अङ्कुरस्य प्रवृत्त्योत्पत्त्याख्यभवनस्य जलावसेकारोपणादिनोत्पादनाख्यप्रयुक्तिदर्शनात्प्रवृत्तभवनः प्रयुज्यतइत्युक्ते ननु प्रवृत्त्यर्थत्वात्प्रयुक्तेः प्रवृत्तस्यानर्थक्यापत्तेः प्रयुक्तिरयुक्तेत्याशङ्क्य * सम्भावितभवनो वेत्युक्तम् * मृदादाविव घटादिसर्वः सम्भावितभवन एव प्रयुज्यते स्वयं विशीर्णबीजाङ्कुरस्यापि वृक्षादिरूपेणाप्रवृत्तोत्पत्तेरेव जलावसेकादिनोत्पादनादित्याशयः । ननु सिद्धस्यापि पाकादेः करोत्यर्थकर्मत्वदर्शनाद्व्यतिरेको व्यभिचरतीत्याशङ्क्याह * यत्रापीति * ननूत्पूर्वस्य करोतेरुपकारप्रयुक्तहिंसात्मकसूचनाख्ये गन्धने अपपूर्वस्य च भर्त्सनाख्ये ऽवक्षेपणे प्रपूर्वस्य चानुवृत्त्याख्यसेवने प्रक-

र्षकथनाख्यप्रकथने धर्माद्यर्थंविनियोगाख्योपयोगे उपपूर्वस्य साहसिककर्माख्यसाहसिक्ये उपपूर्वस्य सतो गुणान्तराधानाख्ये प्रतियत्ने प्रयोगाद् गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञ इतिस्मृतेश्चानेकार्थत्वेनोत्पादनार्थत्वनियमाभावात्कथमुत्पत्त्याख्यभवनकर्तृकर्मनिष्ठत्वनियम इत्याशङ्क्याह * सत्यपि चेति * नियमाभावे ऽपि वा यदोत्पादनार्थत्वं तदोत्पाद्यमानकर्मनिष्ठत्वं भविष्यतीत्याह * अथ वेति * करोत्यर्थकर्मणो भवनक्रियापेक्षामुपपादितामुपसंहरति * तेनेति * लब्धायां च भवनक्रियायां तत्कर्तृकर्मनिष्ठत्वं करोत्यर्थस्य सिद्धं भवतीति तावच्छब्देन सूचितम्। नन्वेवं करोतेर्भावयतिवद्भवत्यर्थकर्तृकर्मनिष्ठत्वे ऽपि णिजन्तत्वाभावेन प्रयोजकव्यापारवाचित्वायोगात्कथं भावयतिना तुल्यार्थतेत्याशङ्क्याह * ततश्चेति * करोत्यर्थस्य भावयत्यर्थत्वोपपादनाय प्रयोजकव्यापारत्वप्रतिपादनार्थं तत्कर्त्तुः प्रयोजकत्वाभिधानं प्रयोज्यं विना प्रयोजकत्वायोगात्तत्सिद्ध्यर्थं प्रयोजत्वाभिधानम्। ननु णिच्प्रत्ययराहितस्य धातोः प्रयोजकव्यापारवाचित्वे करोतिवद्भवतेरपि तद्वाचित्वापत्तेर्भावयतीति णिच्प्रत्ययो ऽनर्थकः स्यात्प्रयोज्यव्यापारवाचित्वे वा भवतिवत्करोतेरपि तद्वाचित्वापत्तेः प्रयोजकव्यापारवाचित्वं न स्यादित्याशङ्क्याह * भवतीति * णिच्प्रत्ययरहितत्वाविशेषे ऽपि यथा विक्लिदेः प्रयोज्यतण्डुलव्यापारवाचित्वं पचतेस्तु प्रयोजकदेवदत्तव्यापारवाचित्वं वृद्धव्यवहारान्नियतं तथा तयोरपीत्यर्थः। ननु प्रयोज्यप्रयोजकव्यापारयोः परस्परापेक्षत्वात्कथमनयोः प्रयोज्यप्रयोजकव्यापारमात्रवाचितेत्याशङ्क्याह * तत्र चेति * प्रयोज्यव्यापारानपेक्षप्रयोजकव्यापारयोगादेवकारोक्तातन्मात्रे विवक्षा न युक्तेत्याशङ्क्य प्रयोज्यव्यापारस्यान्यतो ऽवगतिसिद्धेः पारिशेष्यात्प्रयोजकव्यापारमात्रविवक्षोपपन्नेति केवलमित्यनेन तु पारिशेष्यवाचिना क्रियाविशेषणेनोक्ते कथं प्रयोज्यव्यापारस्याभिधानं विनावगतिरित्यपेक्षायां घटमिति द्वितीययाभिहितया कर्माख्यया शक्त्याक्षिप्तः प्रयोज्यस्य घटस्य भवनाख्यो व्यापारो यस्मिन्नित्युक्तम्। कथं वा कर्मणः प्रयोज्यव्यापाराक्षेप इत्याशङ्क्य *कर्मणः शक्त्येत्युक्तम् * निर्व्यापारस्य कर्मत्वायोगात्तद्बलेनाक्षेप इति ३४४।१
भावः। करोतिमात्रप्रयोगे कथमाक्षेप इत्याशङ्क्य * स्वयमाक्षिप्तप्रयोज्यव्यापारेत्युक्तम् * घटो भवतीत्यत्र प्रथमाया अप्यभिहितकारकविभक्तित्वाभ्युपगमात्प्रथमाभिहितकर्त्तृशक्त्याक्षिप्तः प्रयोजकव्यापारो यस्मिन्स्वयं वाक्षिप्तः प्रयोजकव्यापारो येनेति बहुव्रीहि-

विग्रहेण व्याख्येयम् । पचतिविक्लिद्यतीतिदृष्टान्तार्थौ उभयोस्तु व्यापारयोर्भिन्नपदोपात्तयोः समुच्चयेन विवक्षायां करोतिभवत्योः समुच्चित्य प्रयोग इत्याह * कदा चिदिति * ननु करोतेः प्रयोजकव्यापारवाचित्वे तदाक्षिप्तस्यापि भावनाख्यस्य प्रयोज्यस्य व्यापारस्याशब्दत्वेन प्राधान्यानुपपत्तेः क्रियते घट इति प्रयोज्यवाचिना घटशब्देन सामानाधिकरण्यं न स्यादित्याशङ्क्याह * कदा चिदिति * तिङा घटस्य कर्मत्वोक्तेः कर्मणश्च वस्तुतः प्राधान्यात् सव्यापारस्यैव च कर्मत्वादाक्षिप्तस्यापि प्रयोज्यव्यापारस्योपसर्जनीभूतः प्रयोजकव्यापारो यस्य स विवक्ष्यतइत्युत्तरग्रन्थगतविवक्ष्यतइति पदानुषङ्गेण व्याख्येयम् । ननु प्रयोज्यव्यापारस्य प्राधान्यविवक्षायां करोतिप्रयोगोपपत्तावुपसर्जनत्वविवक्षायां सुतरामुपपत्तेर्न कदा चिद्भावयतिः प्रयुज्येतेत्याशङ्क्याह *कदा चित्पुनरिति* समानस्य पदस्यैकदेशेनोपात्ता प्रयोज्यक्रियोपसर्जनीभूता यस्येति विग्रहः तदा च समानपदैकदेशोपात्तत्वविवक्षायां करोतेरेवाशक्तत्वेन भवतेरपि प्रयोज्यक्रियामात्रपर्यवसायित्वेन प्रयोजकव्यापारविवक्षायां णिच्प्रत्ययं विना प्रवृत्त्यशक्तेः सो ऽप्यधिकः प्रयुज्यतइत्यर्थः । क्रियाया धातुवाच्यत्वप्रसिद्धेर्णिचश्च केवलस्य धातुत्वाभावान्न क्रियावाचितास्तीति ये वदन्ति तन्मते न द्योतकत्वोक्तिः । स्वमते तु भुविक्लिद्योः प्रयोजकक्रियावाचित्वे केवलप्रयोज्यक्रियानिष्ठत्वोक्तिविरोधापत्तेर्णिच एव तद्वाचकत्वम् । प्रयोज्यक्रियावाचिना णिचा विना प्रयोजकक्रियायामशक्तिं वृद्धवचनेन द्रढयति * तथा चाहेति * प्रयोज्यकर्तृकाणां भवनादीनां व्यापाराणां प्रतिपादका ये भूवादयो धातवस्तेषां प्रयोज्यानां घटादीनां ये प्रयोजकाः कुलालादयस्तेषां व्यापारेषु णयन्ता एव प्रयुज्यन्तइत्यर्थः । भवनादीनामन्योत्पादानुकूलत्वाभावेनाव्यापारत्वमाशङ्क्य *एकान्तेत्युक्तम्* अन्योत्पादानुकूलत्वाभावे ऽप्यनिष्पन्नरूपत्वादेकान्तेन व्यापारतास्तीत्याशयः । ननु भवत्यादीनां णिचं विना प्रयोजकक्रियाभिधानाशक्तौ करोत्यादीनामप्यशक्तिप्रसङ्गात्तेषां वा शक्तावन्येषामपि शक्तिप्रसङ्गाद्व्यवस्था न युक्तेत्याशङ्क्याह * न चेति * शक्तीनां स्वभावत्वेनापर्यनुयोज्यत्वात्प्रकृतयः प्रत्ययास्तत्समुदायात्मकानि चादिशब्दोक्तानि पदानि नानारूपानर्थान्वदन्तीत्यर्थः । अतो भवत्यर्थकर्तृकर्मनिष्ठप्रयोजकव्यापारवाचित्वेन करोतिभावयत्योस्तुल्यार्थत्वात्सिद्धकर्तृक्रियावाचिषु चाख्यातेषु करोतिसामानाधिकरण्येन करोत्यर्थस्य वाच्यत्वावगमात्तद्द्वारा भावयत्यर्थस्यापि वाच्यत्वासिद्धेर्यज्या-

यर्थश्चातो ऽवगम्यते भावयेदिति चेदित्यादिभाष्यं युक्तमेवेत्याह * एवमिति * ननु भावनायाः प्रत्ययवाच्यत्वे ऽपि धात्वर्थस्यैव निष्पाद्यत्वलक्षणक्रियारूपेण प्रत्ययेनाभिधानाद्भावनात्वोपपत्तेरन्योत्पादानुकूलत्वे ऽपि वा भावनालक्षणे धात्वर्थस्यैव धातुना व्यापारात्मनोपादीयमानस्य प्रत्ययावगतानुष्ठेयत्वान्यथानुपपत्त्या फलोत्पादानुकूलतयावगमाद्भावनात्वोपपत्तेर्भावयेद्यागेनेति क्रियाकरणतया भेदेन निर्देशो न युक्त इत्याशङ्क्य भवनक्रियाकर्तृकर्मनिष्ठप्रयोजकव्यापारत्वं धात्वर्थव्यावर्त्तकं लक्षणमाह * तेनेति * येन कारणेन करोतिभावयत्योरुक्तप्रकारेण तुल्यार्थत्वं तेन कारणेनेत्यर्थः। यत्त्वाक्षेप्त्रा विधिमात्राभिधायित्वाल्लिङादीनां भावनाभिधायित्वं न सम्भवतीत्युक्तं तदनुभाषणपूर्वकं निराकरोति * यत्तूक्तमिति। अयमाशयः * किं विधिमात्रशब्देन भावयतिधातुवाच्यत्वं भावनायाः प्रत्ययानभिधेयत्वे कारणमभिप्रेतं विधिव्यतिरिक्तभावनाभावो वा। तत्र विधेरपि भावयतिधातुवाच्यत्वेन लिङाद्यवाच्यत्वापत्तेर्नाद्यः कल्प इत्यभिधाभावनाशब्देन सूचितं प्रयोजकव्यापारवाचित्वात् भावनाशब्दस्य विधेरपि प्रयोजकलिङादिव्यापारत्वात् भावनात्वमस्तीत्याशयः। ननु विधेर्लिङादिवाच्यताभ्युपगमात्तदुच्चारणात्प्रागसिद्धत्वे सति अगृहीतसम्बन्धत्वेन वाच्यत्वायोगाल्लिङाद्युच्चारणात्प्रागेव सिद्धेस्तत्परत्वं न युक्तमित्याशङ्क्य शब्दश्रवणानन्तरभाविप्रवृत्तिहेतुप्रेषणाध्येषणादिव्यापारानुवृत्तप्रवर्त्तनासामान्याभिधानेन तद्विशेषापेक्षायामपौरुषेये वेदे पुरुषधर्मस्य प्रेषणादेरसम्भवात्तद्व्यतिरिक्तविध्याख्यस्य विशेषस्य पारिशेष्याल्लक्षणया गम्यमानस्य सम्बन्धग्रहणानपेक्षत्वेन प्राक् सिद्ध्यनपेक्षणादविरुद्धा शब्दव्यापारतेति सूचनायाभिधाशब्दः। कर्त्तृव्युत्पत्त्या करणव्युत्पत्त्या वाभिधाशब्दस्य शब्दपरत्वमङ्गीकृत्याभिधायाः शब्दस्यात्मनो भावनां व्यापारं प्रवर्त्तनासामान्यव्यक्तिभूतं लिङादयः प्रवर्त्तनासामान्यमभिदधानां निर्विशेषसामान्यायोगात्प्रैषादौ च लोकदृष्टस्य विशेषस्य पुरुषधर्मत्वेनापौरुषेये वेदेऽसम्भवात्प्रवर्त्तनासामान्यस्य च प्रैषादिप्रवर्त्तकव्यापारवर्त्तित्वदर्शनाल्लिङादेरेव च वेदाप्रवर्त्तकत्वावधारणाल्लक्षणया गमयन्तीत्यर्थः। अन्यामित्यपरत्ववाचिना ऽन्यशब्देन शब्दभावनायाः पाश्चात्यमभिदधतार्थभावनाविषयत्वेन तदपेक्षत्वसूचनाद्विध्यभिधायित्वं नार्थभावनाभिधायित्वस्य बाधकं प्रत्युत साधकमिति सूचितम्। न च विधिव्यतिरिक्तभावनापह्नवार्थौ विधिमात्रशब्दार्थौ युज्येते विध्यभावे ऽपि सर्वो-

ख्यातेषु दर्शनेनापह्नोतुमशक्यत्वादिति द्वितीयकल्पनिरासायोत्तरार्धे विधेयायाः भावनायाः पुरुषार्थरूपभाव्यनिष्ठत्वसूचनायेच्छायोनित्वं सूचयितुमिच्छार्थादर्थयतेर्णिजन्तादर्थयतइति कर्तृविवक्षायामेरजित्यच्प्रत्ययोत्पादनेनार्थिनः पुरुषस्यार्थशब्देनाभिधानाद्भावनायाश्च पुरुषधर्मत्वाद्धर्मधर्मिणोश्चात्यन्तभेदाभावात्तादात्म्यं विवक्षित्वार्थात्मा चासौ भावना चेति विग्रहः कार्यः। अन्यामित्यर्थ-
३४५।२ भावनापेक्षित्वं शब्दभावनायाः सूचितमुपपादयति * यदा हीति* पुरुषव्यापाररूपेत्यनेनार्थशब्दस्यार्थयतइति व्युत्पत्त्यार्थिपुरुषपरतया व्याख्यानं सूचितम्। विध्यादीनां भावनाव्यक्तित्वाभावे ऽपि विषयित्वेनावच्छेदकत्वात् विशेषतोक्ता लिङादिषु शब्दविशेषेषु अनुवृत्तं यत्सामान्यमाख्यातत्वं नाम तद्व्यतिरिक्तैर्लिङादिशब्दविशेषैर्वाच्या इत्याख्यातत्वेति त्वप्रत्ययाध्याहारेण व्याख्येयम्। व्यक्तीनां सामान्यादत्यन्तव्यतिरेकाभावे ऽपि आख्यातरूपवाच्यार्थभावनाव्यतिरिक्तविध्याद्यर्थान्तरवाचित्वोपपादनार्थं कथं चिद्व्यतिरेकविवक्षया व्यतिरेकशब्दः। लिङ्लोट्तव्यपञ्चमलकाराणां विधिर्वाच्यस्तेषामेव नञ्युक्तानां निषेधः। लङ्लुङ्लिटां भूतकालः लट्लुटोर्भविष्यत्कालः लटो वर्त्तमानकालः आदिशब्दोपात्ता क्रियातिपत्तिर्लङ्वाच्या आशीरादीनामपि लिङादिशब्दवाच्यानामादिशब्देनोपादानमेतदेवोदाहरणैरुपपादयितुम् * तथा चेत्युक्तम् * ननु विध्यादेरर्थभावनापेक्षित्वे ऽप्यभिधाभावनायाः किमायातं का वाभिधाभावना कथं चास्याः सापेक्षतेत्याशङ्क्य * तत्रेत्युक्तम् * विधेरेवाभिधाख्यशब्दधर्मभावनात्वात्तस्याश्च प्रयोजकशब्दव्यापारत्वेन प्रयोज्यपुरुषव्यापारात्मकार्थभावनाविषयत्वात्तदपेक्षितेत्याशयः। शब्दव्यतिरेकेण व्यापारस्यानुपलम्भेनाभावमाशङ्क्यात्यन्तभेदाभावेनानुपलम्भोपपादनायाभिधात्मिकेत्युक्तम्। ननु भावनायाः सर्वत्रांशत्रयोपेतत्वाद्विधेश्चांशत्रयानिरूपणान्न भावनात्वमस्तीत्याशङ्क्याह * विशेषतश्चेति * पुरुषप्रवृत्तिविधिज्ञानप्ररोचनाख्यसाध्यसाधनेतिकर्त्तव्यताविशिष्टरूपेण वर्णितेत्यर्थः। यच्च करोतिभावयत्योः प्रत्ययेन सह प्रयोगात्सहाप्रयोज्यत्वलक्षणपर्यायास्थित्यतिलङ्घनेनापर्यायत्वमुक्तं तदप्यनुभाषणपूर्वकं त्रेधा परिहरति * यत्त्विति * पर्यायाणां सहाप्रयोज्यत्वस्यानर्थक्यापत्तिप्रयुक्तत्वात् पर्यायत्वस्वरूपस्याप्रयोजकत्वेन स्वरूपप्रयुक्तसाहित्यलक्षणव्याप्त्यभावादिह च प्रकृत्यनुग्रहादिप्रयोजनत्रयसद्भावेनानर्थक्यापत्त्यभावान्न सहाप्रयोज्यत्वनिवृत्त्या पर्यायत्वनिवृत्तिरित्याशयः। प्रकृत्यनुग्रहार्थत्वमुप-

मुपपादयति*यदि हीति* ननु तृजादिप्रयोगेणापि प्रकृत्यनुग्रहसि-द्धेराख्यातनियमो ऽनर्थकः स्यादित्याशङ्क्याह *तेनेति* येन प्रत्ययं विनापभ्रंशत्वप्रसङ्गस्तेनावश्यं कस्मिंश्चित्प्रत्यये प्रयोज्ये तृजादिप्रयोगे कर्त्राद्यर्थान्तरापत्तेस्तस्य च विवक्षितार्थाभ्यधिकत्वेनावाच्यत्वात्प्रकृत्यर्थानुवाद्याख्यातमेव नियम्यतइत्यर्थः। नन्वधिकार्थापत्तिभयात् कर्त्ता भावयितेत्यादिकर्त्रादिवाचितृजादिप्रयोगायोगे ऽपि इकः श्तिपो वाभ्यधिकार्थानापादकत्वेन प्रयोगोपपत्तेः क्रिर्भाविः करोतिर्भावयतिरिति वा कस्मान्न प्रयुज्यतइत्याशङ्कते*ननु चेति * तयोरधिकार्थत्वाभावे ऽपि तद्युक्तयोः करोतिभावयत्योः स्वरूपवाचित्वेनाख्यातार्थवाचित्वहानापत्तेर्न युक्तः प्रयोग इति परिहरति * नैतदिति * नन्वर्थे ऽपीङ्गन्तस्य श्तिबन्तस्य वा धातोः प्रयोगान्नार्थवाचित्वहानिरित्याशङ्क्याह * यत्त्विति * एतदेवोपसंहरति * तस्मादिति * कर्तृसंख्यादिसङ्ग्रहार्थत्वं विवृणोति * यदि ३४६।९ चेति * पूर्वस्मिन्परिहारे सर्वप्रत्ययार्थाविवक्षापत्तेः परिहारान्तरमुक्तम् भावनांशानुवादस्त्विहापि तुल्य इत्याह * यस्त्विति * ननु भावनायाः प्राधान्येनाख्यातार्थत्वाद् गुणभूतकर्तृसंख्यादिसंग्रहायानुवाद्यत्वानुपपत्तेः प्रकृत्यनुग्रहाय धातुनिर्देशार्थस्यैव प्रत्ययस्य लक्षणायार्थपरत्वोपपत्तेः प्रयोगो युक्त इत्याशङ्क्याह * अन्यथा हीति * आख्यातार्थकथनाय भावनामात्रवाचिनि क्रिभाव्यादिशब्दे प्रयुज्यमाने भावनामात्रस्याख्यातार्थत्वभ्रान्तिं करोतिभावयत्योर्वा सर्वाख्यातार्थवाचित्वभ्रान्तिं व्यावर्त्तयितुं कर्तृसंख्याद्याख्यातेनावश्यं वाच्यमित्यर्थः। रूपाविनाशसिद्ध्यर्थत्वमुपपादयति * नित्यं चेति * एतच्च ननु कारो भाव इत्यादि भावोत्पन्नकृत्प्रयोगे ऽभ्यधिकार्थान्तरानापत्तेः शब्दपदार्थकत्वानापत्तेश्च नाख्यातनियमः सम्भवतीत्याशङ्क्य * परिहारान्तरमुक्तम् * श्लोकार्थमुपसंहरति * तस्मादिति * एवं पर्यायत्वे ऽपि प्रत्ययस्य प्रयोजनान्तरार्थत्वेन पौनरुक्त्याभावात्सह प्रयोगो * न विरुध्यतइत्युक्तम् * इदानीं भावनाया वस्तुतः प्रत्ययमात्रवाच्यत्वे ऽपि प्रतीतिमात्रव्यवहारिणा लोकेन विवेक्तुमशक्यत्वादाख्यातपदेन धात्वर्थवत् भावनाप्युच्यतइत्येतावदवगम्य पचतीत्यस्य को ऽर्थ इति पृष्टे धातुमात्रवाच्यत्वेन निश्चितं धात्वर्थं पाकमिति व्याख्याय सम्मुग्धाख्यातपदवाच्यत्वेन भावनां ख्यापयितुं करोतौ भावयतौ वा प्रयुज्यमाने प्रकृत्यनुग्रहार्थं प्रत्ययमात्रस्य भावनावाचित्वाभावेनापौनरुक्त्यं मत्वा प्रयोगो न विरुध्यतइत्याह * किं चेति *

पर्यायत्वाभावादपि तिङ्प्रयोगाविरोध इत्येवम् किं च शब्दव्याख्यानपूर्वकम् । श्लोकं व्याचष्टे * यदि हीति * लोकानवगतं विवेकं कुर्वतां परीक्षकाणां लोकविरोधपरिहारसूचनार्थं लोकस्य विवेकज्ञानप्रयोजनाभावाभिधानम् । ननु धातोः व्यभिचारित्वेनावाचकत्वनिश्चयात्प्रत्ययमात्रवाच्यत्वं विवेक्तुं शक्यमित्याशङ्कते * स्यादेतदिति * प्रत्ययस्यापि व्यभिचारस्तुल्य इति तावत्परिहरति * तदिति * प्रौढ्या भावनावाचित्वेनाभिमतस्य सिद्धकर्तृक्रियावाचिनो धातोरव्यभिचारं वक्तुमुपक्रमते * न वेति * प्राधान्याप्रतीतावपि स्वरूपमात्रप्रतीतिदर्शनायात्यन्तमित्युक्तम् । अस्तिः प्रतीतिलक्षणार्थः। तत्र कृद्विशेषाणां कृत्यानां प्रैषातिसर्गप्राप्तकालेषु कृत्याश्चेति प्रैषवाचित्वस्मृतेरप्राप्तविषयस्य च प्रैषस्य विधित्वाद्विधेश्च भावनाविषयत्वादप्रधानभूतायाश्चांशत्रयोपसंहारासामर्थ्येन विधातुमशक्यत्वादीषत्प्राधान्यमप्यस्तीति सूचयितुं पूर्वं कृत्येषु किं चिदपकृष्यमाणभावनारूपप्रतीतिं दर्शयति * कृत्येषु तावदिति * कृत्यमध्ये ऽपि-भोक्तव्यमित्यादेर्भावोत्पन्नात्कृत्याद्धन्तव्य इत्यादिषु कर्मोत्पन्नेषु न्यू-
३४७। नतरागम्यतइत्याह * तत्रापीति * द्रव्यप्राधान्येन धात्वर्थस्यापि प्राधान्याभावाद्भावनायाः सुतरां नास्तीति सूचितं कथं न्यूनतरत्वं चेत्यपेक्षायामाह * न हीति * भोजनं कर्त्तव्यमित्यत्र प्रयोजकव्यापारस्य धात्वर्थप्रधानत्वाद्धन्तव्य इत्यत्र च प्रयोज्यद्रव्यपरत्वान्न प्राधान्यमित्यर्थः । द्रव्यस्वरूपस्य तव्यवाच्यत्वाभावेन प्राधान्यायोगात् कर्मस्वरूपेण प्राधान्यं वक्तुं प्रयोज्यशब्दः । निर्व्यापारस्य प्रयोज्यत्वायोगात्कर्मशक्त्याक्षिप्तप्रयोज्यव्यापारविशिष्टतोक्ता । नन्वेवं सति तिङ्क्षु भावनावाचित्वस्य भावनाप्राधान्यव्याप्तेः कृत्येषु भावनाप्राधान्यनिवृत्त्या तद्वाचितापि निवर्त्ततइत्याशङ्क्य तिङ्क्ष्वपि सर्वेषु भावनाप्राधान्याभावाद्व्याप्त्यभावं सूचयितुमाह * एतेनेति * भावोत्पन्नाः कर्मोत्पन्ना वा स्थानिनो लकारा येषां भुज्यते देवदत्तेन भुज्यते ऽन्नमित्यादीनामादेशानां तिङन्ते ऽप्यनेन भावकर्मोत्पन्नकृत्यव्याख्यानेन व्याख्याता इत्यर्थः । एतदेव विवृणोति * तेष्वपीति * अतो भावनावाचिनामपि सर्वेषां तिङन्तानां तत्प्राधान्यलक्षणतुल्यत्वाभावाद्भावनावाचित्वस्य तत्प्राधान्येनाव्याप्तेर्न कृत्येषु भावनाप्राधान्यनिवृत्त्या तद्वाचित्वनिवृत्तिरित्युपसंहरति * अत इति * अव्ययसंज्ञकेषु कृत्सु कृत्यसंज्ञकेभ्यो ऽपीषत्न्यूनभावनाज्ञानमित्याह * तथेति * ननु तेषामपि भोक्तव्यमिति कृत्यसंज्ञकवद्भावोत्पन्नत्वस्मरणाविशेषात्कथं कृत्यवाच्यभावनातो ऽन्ययक-

द्याच्यावा भावनायाः न्यूनतेत्याशङ्क्य * अव्ययेत्युक्तम् * स्मृत्युप-
न्यासेनाव्ययकृत्सु इति ज्ञातुं शक्यत्वान्न कण्ठेनोक्तम् । ईषन्न्यून-
भावनाज्ञानस्य स्वसंवेद्यत्वमुदाहरणैर्दर्शयति * अभिक्राममिति *
धातुसम्बन्धे प्रत्यया इति धातुसम्बन्धाधिकारविहितानामपि णमु-
लादीनां धात्वर्थसम्बन्धं विना धातुसम्बन्धायोगात् धात्वर्थनिष्पा-
दलक्षणभावनायाः सम्बन्धं च विना धात्वर्थसम्बन्धायोगाद्भाव-
नासम्बन्धवाचित्वप्रतीतेः समानकर्तृकयोः पूर्वकालइत्यनेन समान-
कर्तृकयोः धात्वर्थयोः पूर्वकाले धात्वर्थे वर्त्तमानाद्धातोः क्त्वाप्रत्ययं
विधाय आभिक्ष्ण्ये णमुल्चेति तस्मिन्नेवार्थे पौनःपुन्याख्याभीक्ष्णाधि-
क्ये णमुल्विधानादभिक्रमणं कृत्वा होमं करोतीति णमुल्श्रुत्यैव
होमभावना सापेक्षाभिक्रमणभावनाश्रीयते। करणे हन इति च क-
रणवाचिन्युपपदे हन्तेर्णमुल्प्रत्ययविधानादुपहननं कृत्वा होमं क-
रोतीति हननभावना होमभावना सापेक्षावगम्यते। होमं कृत्वा भ-
क्षणं करोतीति भक्षणभावना सापेक्षा होमभावना क्त्वाश्रुत्यैवावग-
म्यते। भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन् इत्यनेन
च तुमर्थइत्यनुवर्त्त्य भावं च तुमर्थत्वेन विवक्षित्वा भावो लक्ष्यते-
ऽनेनेति च भावलक्षणशब्दार्थं विवक्षित्वा तिष्ठतेरिणः कृञोवदेश्चरे-
र्जुहोतेस्तमिर्जनेश्च धातोर्भावलक्षणार्थे भावे वर्त्तमानात्तोसुन् विधा-
नात्पुरा वाचःप्रवदितोरनूच्य इत्यत्र प्रवदितोरित्यव्ययतोसुन् श्रुत्यैव
पुरेति दिक्शब्दयोगात् लुप्तपञ्चमीकतया वाक्प्रवादक्रियातःपुराप्रात
रनुवाकानुवचनं कार्यमित्यनुवाचनभावनासापेक्षा प्रवादभावना ग-
म्यते। अतो भावनान्तरसापेक्षत्वात्स्वसम्वेद्या न्यूनतेत्याशयः। नि-
ष्ठासञ्ज्ञयोस्तु क्तक्तवत्वोः कृतो न्यूनतरभावनाज्ञानं स्वसम्वेद्यमि-
त्याह *पक्व इति* पक्वः पक्ववानित्यत्रौदनः कृतपाको देवदत्तः पाकं
कृतवानिति निष्पन्नरूपायाः भावनायाः यथासंख्यं कर्मकर्तृरूपद्र-
व्योपसर्जनत्वप्रतीतेर्निष्पाद्यत्वप्राधान्ययोर्द्वयोरप्यभावात्कृत्यसञ्ज्ञ-
केभ्यः कृद्भ्यो न्यूनतरेत्याशयः। एवं कृत्याव्ययनिष्ठासञ्ज्ञकेषु
कृद्विशेषेषु अपकृष्यमाणभावनारूपप्रतीतिमुक्त्वा कृदन्तरेषु यथा-
सम्भवमातिदिशति * एवमिति * पाचकः पक्तेत्यादिषु कर्त्रुत्प-
न्नेषु पाककारकः पाककर्त्तेत्यादिकर्तृप्राधान्यप्रतीतेरादिशब्दोपात्तेषु
पाक इत्यादिषु भावोत्पन्नेषु पाकः क्रियेत्यादिधात्वर्थप्राधान्यप्रतीते-
र्विधेयत्वाभावेन च प्राधान्यानपेक्षणात् कृत्येभ्यो न्यूनतरेति भा-
वः। स्वसम्वेद्यमपि सर्वेषु सिद्धकर्तृक्रियावाचिषु धातुषु भावनाज्ञानं
विप्रतिपन्नान्प्रत्यर्थापत्त्या साधयति * तथा चेति * भावोत्पन्नेषु

कृत्येषु कस्य केनेति कर्मकर्तृकरणानां कर्मोत्पन्नेषु केनेति कर्तृकरणयोरभिक्रामामित्यत्र कर्तुंरुपघातमित्यत्र कस्य कः केनेति कर्मकर्तृकरणानां प्रवदितोरित्यत्र कस्येति कर्मकर्त्रोः पक्क इत्यत्र केनेति कर्तृकरणयोः पक्कवानित्यत्र कस्य केनेति कर्मकरणयोः पाचक इत्यत्र कस्य केनेति कर्मकरणयोः पाक इत्यत्र कस्येति कर्मकर्त्रोः केनेति च करणस्याधिकरणाद्यपेक्षायाश्च यथायोगं दर्शनात्तस्याश्च रूढ्यादिषु भावनानुपलब्धावदर्शनाद्भावनाज्ञानहेतुत्वावधारणात्तदन्यथानुपपत्त्या भावनाज्ञानं कल्प्यतइत्यर्थः । करोतेश्च ण्वुल्प्रत्यये कारकशब्दस्य मनिन्प्रत्यये । कर्मशब्दस्य तृच्प्रत्यये कर्तृशब्दस्य ल्युट्प्रत्यये करणशब्दस्य व्युत्पत्तेः कारकव्यपदेशतद्विशेषकर्मादिव्यपदेशानां करोत्यर्थव्यापारसम्बन्धनिवन्धत्वात्तदन्यथानुपपत्त्यापि भावनाज्ञानं कल्प्यतइत्याह * न चेति * ननु धात्वर्थस्यैव व्यापारत्वात्कारकापेक्षा कर्मादिषु च कारककर्मादिव्यपदेशाश्चोपपत्स्यन्त इत्याशङ्क्याह * न त्वस्तीति * धात्वर्थस्य निष्पाद्यत्वे सत्यप्यन्योत्पादानुकूलत्वलक्षणकरोत्यर्थक्रियारूपव्यापारत्वाभावान्न क्रियासम्बन्धिरूपकारकापेक्षा धात्वर्थसम्बन्धनिवन्धना वा कारकादिव्यपदेशाः सम्भवन्तीत्याशयः । यत्र धात्वर्थे किंचिदसन्न जायते स व्यापारो न भवतीत्यर्थः । अतः करोतिभावयत्योर्यो ऽर्थस्सर्वधातूनामर्थः सिद्ध इत्युपसंहरति * ततश्चेति * नन्वाख्यातेषु भावनावाचित्वं करोतिसामानाधिकरण्येन व्याप्तं ( कृत्सु करोतिसामानाधिकरण्ये व्यावृत्त्या न व्याप्तं) कृत्सु करोतिसामानाधिकरण्ये व्यावर्त्तते इत्याशङ्क्याह * शक्यते चेति * ननु पूर्वापरानेकक्षणव्यासक्तरूपपूर्वापरीभूतत्वस्य व्यापारलक्षणस्य घञन्तादिष्वप्रतीतेः कथं भावनाख्यव्यापारवाचितास्तीत्याशङ्क्य * विनापीत्युक्तम् * यथा शुक्लत्वमित्यत्र भावप्रत्ययाद् गुणस्य निष्कर्षप्रतीतेर्द्रव्योपसर्जनत्वरूपाप्रतीतावपि गुणस्वरूपवाचित्वं न विहन्यते तथात्रापि घञादिप्रत्ययात् सिद्धरूपप्रतीतेः पूर्वापरीभूतत्वरूपनिष्पाद्यत्वाप्रतीतावपि भावनास्वरूपवाचित्वं न विहन्यतइति भावः । कथं शक्यमित्यपेक्षायामाह * तद्यथेति * णमुलन्तधातौ करोतिसामानाधिकरण्यं प्रदर्शयितुं प्रश्नार्थे किमिति प्रयोक्तव्ये अन्यथैवं कथमित्थम्स्विनियोगिनि किम्युपपदे करोतेर्णमुल्प्रत्ययविधानात् * कथङ्कारमित्युक्तम् * किं कृत्वा भक्षयन्त्यभिषुत्य हुत्वेति वक्तव्यं होमाभिषवयोः पौर्वापर्यसन्देहनिवृत्त्यर्थं जुहोतीत्यु-

१ अयं पा० २ पु० ना० ।

क्तं किङ्कर्त्रोः पुरा प्रवदितोरिति कृञ्वदिभ्यामेकसूत्रेण तोसुन्विधानात्सुज्ञातत्वान्न दर्शितम् किं कर्त्तेत्युच्यमाने कर्मविशेषप्रश्नाशङ्कापत्तेः क्रियाविशेषविषयत्वज्ञापनार्थं का क्रियास्येति विवक्षितत्वात् * किं क्रिय इत्युक्तम् * नन्वाख्यातेषु भावनायाः प्राधान्यप्रतीतेः प्रत्ययार्थत्वावधारणान्न धातुवाच्यतेत्याशङ्क्याह * न चेति * प्रत्ययार्थस्यापि कर्तृसंख्यादेर्गुणत्वदर्शनात्प्रत्ययार्थस्य प्राधान्यस्मृतिरप्रमाणमित्याशयः । अतो यथा धातवो धात्वर्थं न व्यभिचरन्ति तथा भावनामपीत्युपसंहरति * तस्मादिति * भिन्नक्रमो ऽपिशब्दः सर्वधातूनां करोत्यर्थवाचित्वे ऽभियुक्तानां संमतिमाह * तथा चाहुरिति *

विभज्य सेनां परमार्थकर्मा सेनापतींश्चापि पुरन्दरोत्थः ।
नियोजयामास स शत्रुसैन्ये करोतिरर्थेष्विव सर्वधातून् ॥

नन्वाख्यातेषु सर्वधातुवाच्यत्वे भावनायाः प्राधान्यप्रतीतिः कथमित्याशङ्क्याह * यत्त्विति * गुणप्रधानभावस्यार्थाद्गम्यमानत्वेन प्रत्ययार्थत्वपक्षे ऽपि प्राधान्यस्य वाच्यत्वाभावात्प्रौढिमात्रेण वाच्यत्वाभिधानमिति सूचयितुम् * काममित्युक्तम् * अस्मिन्पक्षे यज्याद्यर्थश्चात इत्यतःशब्देन धातुमात्रपरामर्शात् धात्वर्थश्च धातोरवगम्यते भावयेदिति चेति भाष्यं व्याख्येयम्।नन्वेवं भावनायाः प्रत्ययवाच्यत्वाभावात्प्रत्ययस्य करोतिभावयतिभ्यां पौनरुक्त्याभावे ऽपि यागेनेति घञन्तेन धातुना धात्वर्थे कथ्यमाने भावनाया अपि तेनैव धातुनोपात्तत्वाद्भावयेदिति पुनरुक्तं स्यादित्याशङ्कते * नन्विति * ननु घञा भावनातो धात्वर्थस्य निष्कृष्टत्वात्कथं भावनोपादानमित्याशङ्क्यैकशब्दोपात्तयोः शुद्धाभिधानलक्षणनिष्कर्षायोगात्सिद्धरूपाभिधानलक्षणो निष्कर्षो वाच्यः । भावनाया अपि सिद्धरूपेणाभिधानोपपत्तेरपरिहार्यं पौनरुक्त्यमिति सूचयितुं व्याख्यायमानं इति वक्तव्ये निष्कृष्टमित्युक्तम् । तृतीयान्तेन करणात्मना धात्वर्थस्य निष्कृष्टत्वाद्भावनायाश्च क्रियात्वेन करणत्वायोगाद्धात्वर्थमात्रं धातुना विवक्षित्वा शब्दान्तरेण भावनारूपार्थव्याख्या युक्तेति परिहरति * नैष दोष इति * सामान्यविशेषशब्दयोरवच्छे- ३४८।२
द्यावच्छेदकपरत्वं विशेषणभावाच्च यागादयो भावनाविशेषा इत्यत्र स्वयमेव वक्ष्यते एवं प्रौढ्या धातुमात्रवाच्यत्वमुपपाद्य केवलयोर्धातुप्रत्यययोर्व्यभिचाराद्धात्वनुगृहीतेन प्रत्ययेन प्रत्ययानुगृहीतेन वा धातुना उभाभ्यां वा परस्परानुगृहीताभ्यां भावनोच्यत इत्यपि वक्तुं शक्यमिति यदुपक्रमे ऽभिहितं तदुपपादयति *अथ वेति* कर-

णांशस्य धात्वर्थस्य कर्तृसंख्यादीनां चैकवाच्यत्वे ऽपि भावनायाः समुदायवाच्यत्वाविरोध इत्याशयः। अस्मिन्पक्षे यज्याद्यर्थश्चात इत्यतःशब्देन धातुप्रत्ययसमुदायं परामृश्यातःसमुदायाद्यज्यादिधात्वंशस्य चार्थो ऽवगम्यते समुदायार्थश्च भावनेति भाष्यं व्याख्येयम्. प्रकृतसूत्रपर्यालोचनयाप्येतत्पक्षद्वयं प्रतिभातीत्याह * तथा चेति* क्रियतइत्यस्मिन्नर्थे करोतेर्मनिन्प्रत्ययस्मृतेः कर्मशब्दस्यानुष्ठेयवाच्यत्वाद्धात्वर्थानवच्छिन्नायाश्च भावनाया अनुष्ठेयत्वाद्धात्वर्थस्यैवानुष्ठेयत्वेन कर्मशब्दवाच्यत्वात्कर्मशब्दशब्देन धातून् विवक्षित्वा तत्सामानाधिकरण्याद्भावार्थता तेषामेवाश्रितेत्यर्थः। समुदायवाच्यत्वपक्षे भावार्थानां धातुप्रत्ययसमुदायानां धात्वंशेन कर्म्मशब्दत्वात्सामानाधिकरण्यं प्रत्ययस्य तु भावार्थत्वेन कथं चित् सामानाधिकरण्यमित्याशयः । नन्वेवं सति सिद्धकर्तृक्रियावाचिन्याख्यातप्रत्यये सति इत्यादिना कस्मात्प्रत्ययवाच्यतोक्तेत्याशङ्क्याह * शास्त्रे त्विति * इहैव तावद्यज्याद्यर्थश्चातो यजेतेति पदादवगम्यते भावयेदिति चेति धातुवाच्यादर्थाद्भेदेन भावनावगमाभिधानाद्धातुमात्रस्य चानिर्दिष्टस्यातःशब्देन परामर्शानुपपत्तेस्तन्मात्रपरामर्शे च यागादिश्चातो ऽवगम्यते इति वक्तव्यत्वात्प्रत्ययार्थत्वाभिप्रायागवतेः शब्दान्तराधिकरणे च यजेतेत्यस्य पूर्वो भागो यजत्यर्थं ब्रवीति उत्तरो भागो भावयेदिति इत्यादिभाष्ये परो भागो भावनावचन इत्यत्र च स्पष्टप्रत्ययवाच्यत्वाभिधानात्सामानाधिकरण्यस्य चाख्यातपदरूपाः शब्दाः प्रत्ययांशेन भावार्थाः धात्वंशेन कर्मशब्दा इत्येव धातव एव भावनाविशेषणभूतस्वार्थवाचित्वेन भावनाप्रयोजनत्वाद्भावार्था इत्येवं वोपपत्तेः। प्रत्ययमात्रार्थता शास्त्रकाराणामभिप्रेतेत्याशयः । प्रत्ययार्थत्वमुपपादयितुमुपक्रमते * तत्रेति * भावप्रधानमाख्यातमिति नैरुक्तिकस्मृतेर्णिजन्ताद्भवतेरच्प्रत्यये कृते भावशब्दव्युत्पत्तेर्भावनाप्राधान्यविषयत्वावसायात्प्राधान्याभावे च कृदन्तवन्निरपेक्षस्य कारकान्वयायोगापत्तेराख्यातेभ्यश्च भावनाप्राधान्यावगतेः । सर्वस्य सम्वेद्यत्वान्न तावत्प्राधान्ये विप्रतिपत्तुं शक्यम् । प्रकृत्यर्थत्वे च सति विशेषणत्वापत्तेः प्राधान्याभावप्रसङ्गात्प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतस्तयोः प्रत्ययार्थः प्राधान्येनेति प्रत्ययार्थप्राधान्यस्मृतेश्च कर्तृसंख्यादेः प्रत्ययार्थस्य प्राधान्याभावात्प्रत्ययार्थः प्रधानमेवेति नियमायोगे ऽपि प्रत्ययार्थ एव प्रधानमिति नियमोपपत्तेर्नामस्वपि च कृत्तद्धितान्तेषु कारकविभक्त्यन्तेषु च प्राधान्यस्य प्रत्ययार्थत्वाव्यभिचारात्सत्त्वप्रधानानि नामानि इति

स्मृतेश्च लिङ्गसंख्यासम्बन्धार्हत्वाविषयतया व्याख्यानोपपत्तेः । प्रातिपदिकार्थप्राधान्यपरत्वे ऽपि वा प्रतीत्यनुसारात्प्रथमान्तनामविषयतया व्याख्यानोपपत्तेः । प्रातिपदिकार्थप्राधान्यस्य प्रत्ययार्थत्वव्यभिचारानापादकत्वात्प्राधान्येन भावनायाः प्रत्ययार्थतावसीयतइत्याशयः । प्रकृत्यर्थस्य विशेषणत्वोपपादनार्थं पूर्वार्द्धे प्रत्ययार्थविशेषणीभूतस्यार्थाभिधानेन प्रकृतेः प्रत्ययार्थपरत्वस्य विवक्षितत्वात् श्लोकतात्पर्यं व्याचष्टे * यद्यपीति * तदागमन्यायेनापि भावनायाः प्रत्ययार्थतावसीयतइत्याह * तथेति * नन्वन्वयव्यतिरेकाभ्यां निष्कृष्टे ऽर्थे नियम्यतइत्यन्वयव्यतिरेकैकशरणत्वान्निष्कृष्टार्थविषयशक्तिनियमस्य धातुव्यतिरेकेण चाख्याताभावादिह तन्मात्रान्वयव्यतिरेकानुपपत्तेः कथं तन्मात्रवाच्यत्वनिर्णय इत्याशङ्क्याह * न केवलमिति * धात्वपरित्यागे ऽपि प्रत्ययश्रवणकाले धातुश्रवणाभावे ऽपि भावनाप्रतीतेर्धातुश्रवणकाले च प्रत्ययश्रवणाभावे तदप्रतीतेः शब्दवत्तूपलभ्यते न तदागमे हि तद् दृश्यते तस्य ज्ञानं यथान्येषामिति चातुर्थन्यायेन निर्णयो भविष्यतीत्याशयः । यत्तु कृदन्तधातुवदस्त्यादिपरस्य प्रत्ययस्यापि भावनाव्यभिचारात्तद्वाचित्वं न सम्भवतीत्युक्तं तदनुभाषणपूर्वकं परिहरति * यत्त्विति * अयमाशयः पचतीत्यादिषु प्रतीयमानायाः भावनायाः धात्वर्थेन स्वनिष्पादकतया लक्ष्यमाणत्वे गुणत्वापत्तेः प्राधान्यप्रतीतिविरोधापाताद्वाच्यत्वं तावदवश्याङ्गीकार्यं तच्च व्यभिचारात्प्रत्ययस्यावाचकत्वे धातुसमुदाययोरप्यवाचकत्वापत्तेर्विरुध्येत समुदायार्थत्वपक्षे ऽपि हि धातुमात्रस्याख्यातसाहित्यात्मकः समुदायो भावनावाची स्यात्पच्यादिधातुविशेषस्य वा तत्र धातुविशेषस्य शुद्धस्यापि अव्यभिचारोपपत्तेर्द्वयोर्वाचकत्वकल्पनस्यान्याय्यत्वाच्छुद्धधातुवाच्यत्वस्य प्राधान्यविरोधादनभ्युपगमे प्राधान्यस्य शुद्धप्रत्ययार्थत्वेन कारकविभक्तिवाच्येषु कारकेषु व्याप्तेः । शुद्धप्रत्ययार्थत्वस्यैव न्याय्यत्वापत्तेर्धातुमात्राख्यातसमुदायार्थताभ्युपगन्तव्या सा च व्यभिचाराविशेषान्न युक्तेति पक्षत्रये ऽपि यत्र पचतीत्यादौ भावना प्रतीयते तत्रैव वाच्यताङ्गीकार्या तच्च चोक्तरीत्या प्रत्ययार्थतैव निश्चीयतइति । नन्वेवं सति भावनायाः सार्वत्रिकं प्रत्ययार्थत्वं न सिध्यतीत्याशङ्क्याह * अन्यत्र त्विति * प्रयोजकव्यापारस्य भावनात्वात् अस्त्याद्यर्थकर्त्तुश्चासिद्धत्वेन प्रयोजकत्वायोगात् भावनानुपपत्तेरसत्याश्च कस्य वाच्येति विचाराविषयत्वात्प्रत्ययस्य भावनावाचित्वाभावे ऽपि प्रकृ-

त्यनुग्रहार्थत्वेन कर्तृसंख्याद्यभिधानार्थत्वेन वा टाबादेरिव स्त्रीत्ववाचिनः खट्वादौ स्त्रीत्वाभावेन तद्वाचित्वाभावे ऽप्यर्थवत्त्वोपपत्तेरानर्थक्यपरिहारायापि वाच्यानाकाङ्क्षणाद्यत्र प्रतीयते तत्रैव प्रत्ययार्थत्वं विचार्यते तत्र च सार्वत्रिकतास्त्येवेत्याशयः। नन्वेवं सति व्यभिचारात्प्रत्ययस्य भावनाचिता न युक्तेत्याशङ्क्याह * क्वचिदिति *

नान्वयव्यतिरेकाभ्यां त्वपूर्वो ऽर्थो ऽवगम्यते।
सङ्कीर्णो ऽवगते त्वर्थे ताभ्यां शक्तिर्नियम्यते ॥

तेनानेकात्मकाच्छब्दादनेकार्थाववोधने सिद्धे यदागमे यो ऽर्थः स तस्येत्यवधार्यते इत्यनेनानेकशब्दोच्चारणादनेकार्थप्रतीतौ कस्य शब्दस्य को ऽर्थ इति विवेकमात्रस्य तदागमन्यायात्मकान्वयव्यतिरेकाधीनत्वादस्त्यादौ च भावनाप्रतीत्यभावेन कस्यासावर्थ इति विवेकानाकाङ्क्षणात्कूपयूपसूपादिवद्व्यभिचारे ऽपि यत्रानेकार्थप्रतीतिस्तत्र तदागमन्यायाविघातान्न कश्चिद्दोष इत्युत्तरमुक्तमित्यर्थः । प्रौढ्या ऽस्त्यादिना परस्परप्रत्ययस्य भावनावाचित्वं वक्तुमुपक्रमते * अथ वेति * एतदेव प्रश्नपूर्वकमुपपादयति * कुत इति * भाव्यं विना भावनानुपपत्तिमाशङ्क्य भाव्यान्तराभावे ऽपि कर्तैव भाव्यो भविष्यतीत्युक्ते कथमेकस्यैव कर्तृकर्मतेत्याशङ्कानिरासायांशशब्दः घटो भवतीत्युच्यमाने घटे प्रयोगात्तस्यां चावस्थायां पूर्वापरीभूतस्य घटस्य केन चिदंशेन सिद्धत्वात्केन चित्साध्यत्वात्सिद्धेः कर्त्तुर्घटस्यांशे समवेता भाव्यकर्त्रंशविषया भावनास्त्येवेत्यंशशब्दात्परां सप्तमीमधिकरणकर्मरूपविषयपरतयावश्यं व्याख्येयम् । नन्वेवं सति तत्र करोतिसामानाधिकरण्यं कस्मान्न भवतीत्याशङ्क्योत्तरार्द्धं सिद्धासिद्धानां घटावयवानामत्यन्तभेदाभावादन्यत्र कर्तृव्यतिरिक्ते भाव्ये शेषत्वाभावाद्व्यतिरिक्तभाव्यनिष्ठत्वाभावात्करोत्यर्थभावनारूपेण सा न प्रकाशते न प्रतिभातीत्यर्थः । केन चिदंशेन सिद्धो घटो ऽशान्तरं करोतीत्यपि विवक्षितुं शक्यत्वात्प्रत्युक्तम्। कथं चित्करोत्यर्थरूपप्रतीतावपि प्रकर्षेण न प्रतीयतइत्यर्थः।अनुपलब्धिविरोधाशङ्का-
३४९।२ निरासार्थत्वेनोत्तरार्द्धव्याख्यानपूर्वकम् श्लोकं व्याचष्टे * यद्यपीति * प्रशब्दव्याख्यानाय * अतीवेत्युक्तम् * अंशांशिनोरत्यन्तभेदाभावात् * आत्मानमित्युक्तम् * अंशत्रयं विना भावनाया नैराकाङ्क्ष्याभावाद्भाव्यांशसूचितौ करणेतिकर्तव्यतांशौ दर्शयितुं निरन्तरपूर्वक्षणावयवोत्पत्तेः करणत्वं व्यवहितावयवोत्पत्तेश्चेतिकर्त्तव्यतात्वमु-

क्रम। ननु घटो भवतीति वाक्ये कथमंशत्रयप्रतीतिरित्याशङ्क्य तत्र प्रयोगे त्रयो ऽप्यंशा धातूपात्तेन भवनेन * पूर्यन्तइत्युक्तम् * प्रत्ययोपात्ताया भावनाया भाव्यापेक्षायां घटस्य भवतिपदात् भवितृत्वावगतेर्भाव्यांशे निवेशार्हत्वाद्धातूपात्तस्य च भवनस्य धात्वर्थान्तरवत् करणेतिकर्त्तव्यतांशान्वयात् घटः स्वभवनेन करणेतिकर्त्तव्यतारूपेणात्मानं भवनं भावयतीत्यर्थो भवतीत्याशयः । ननु व्यापारान्तरासम्भवे ऽप्येकस्य भवनस्यानेकांशपूरकत्वं न युक्तमित्याशङ्क्य भवनकर्तृभूतावयवभेदेन भवनभेदं सूचयितुं केचिदवयवाः प्रयुज्यन्ते केचित्प्रयोजका इति श्लोकगतांशशब्दार्थे व्याख्याते के प्रयोज्याः के प्रयोजका इति व्यवस्थापेक्षायां भवनं कुर्वतामुत्तरावयवानां प्रयोज्यत्वोक्त्या भवनस्य प्रयोज्यव्यापारत्वेन भाव्यांशपूरकता सिद्धभवनानां च पूर्वावयवानां प्रयोजकत्वोक्त्या सिद्धत्वेन करणेतिकर्त्तव्यतांशपूरकतोपपादिता अवस्थाविशेषाभिप्रायौ चेमावंशावयवशब्दौ । घटादिर्हि मृत्पिण्डादेरुत्पद्यमानो घटादिशब्दवाच्यपृथुबुध्नोदराद्याकारात्मकावस्थाविशेषात्प्रागवस्थान्तराणि अनुभूय घटादिशब्दवाच्यावस्थाविशेषरूपेणोत्पत्तेः पूर्वावस्थाभिर्भाव्यः पूर्वावस्थायाश्च तत्साधनत्वाद्यथार्हं करणेतिकर्त्तव्यतात्वेन विवक्षितुं शक्यन्ते घटशब्दवाच्यस्य त्वस्यैवैकस्यावस्थाविशेषस्य प्रयोज्यत्वे वाच्ये ततः प्राचीनानामप्युत्तरोत्तरावस्थानां पूर्वपूर्वावस्थाहेतुकत्वं दृष्टान्तार्थं सूचयितुम् अवयवा इति बहुवचनम्। ननु सिद्धभवनानां पूर्वावयवानां प्रयोजकत्वेनाभिमतानामसिद्धभवनोत्तरावयवोत्पत्तौ हेतुभूतः को ऽसौ व्यापारो यो भावनेत्युच्यतइत्याशङ्क्य * सिद्धेत्युक्तत् * सिद्धभवनानां नियतपूर्वक्षणवर्त्तित्वेनासिद्धभवनोत्पादकत्वावगमात् व्यापारं च विनोत्पादकत्वायोगाद्भवनाख्यस्यानन्यनिष्ठत्वेनान्योत्पत्त्यननुकूलत्वादवश्यं सिद्धभवनप्रयोजकावयवव्यापारत्वात्तत्वृत्त्यसिद्धभवनप्रयोज्यावयवनिष्ठत्वाच्च तद्वृत्तिसंबंधात्वर्थानुरञ्जनसहत्वरूपं व्यापारसामान्यमभ्युपगन्तव्यम् । तच्च भाव्यनिष्ठभावकव्यापारत्वेन भाव्यभावकोभयसम्पर्काद्भावनेत्युच्यतइत्यर्थः । भवतिपराख्यातस्य भावनावाचित्वोपपादनेन तत्पर्यायजन्यादिपरस्य सिद्धमपि भावनावाचित्वं भूसत्तायामिति स्मृतेः सत्ताख्यद्वितीयभावविकारवाचित्वेन भवतेराद्यभावविकारवाचिजन्यादिपर्यायत्वं नास्तीति भ्रमप्रसङ्गात्तद्व्यावृत्त्यर्थं लोकप्रयोगानुसारात् भवतेराद्यभावविकारवाचित्वेन जन्यादिपर्यायत्वं सूच-

१ भवन्तमिति २ पु० पा० ।

यितुमतिदिशति * एतेनेति * आदिशब्देनोत्पद्यतिपराख्यातोपादानम् । ननु भवतेरुत्पत्त्याख्यप्रथमभावविकारवाचित्वेन निष्पन्ने वस्तुनि प्रयोगाद्भाव्यान्तरायोगे ऽपि आत्मनो भाव्यत्वोपपत्तेर्भावनासम्भवे ऽपि अस्तेः सत्ताख्यद्वितीयभावविकारवाचित्वेन निष्पन्ने वस्तुनि प्रयोगादात्मनो भाव्यत्वानुपपत्तेः । स्वनिष्ठत्वेन च भाव्यान्तरायोगात्कथं तत्र भावनावाचित्वं स्यादित्याशङ्क्याह * अस्तिः पुनरिति * लभ्यमानसत्ताकत्वावस्थैवास्तेर्वाच्या न लब्धसत्ताकत्वावस्था तस्याविपरिणामादिभावविकारान्तरेष्वप्यनुवृत्तेर्द्वितीयभावविकारवाचित्वाभावापत्तेस्तस्यां चावस्थायामलब्धसत्ताकत्वाद्युक्तैवात्मनो भाव्यतेत्याशयसूचनाय * उपरितनीमित्युक्तम् * भवनानन्तरं भवितृत्वायोगात्कथं भाव्यतेत्याशङ्क्य * सत्तयेत्युक्तम् * सिद्धभवनस्य सद्रूपेणापि कथं भवितृतेत्याशङ्क्य करणाधिकरणयोश्चेत्याधिकरणे ल्युडुत्पत्तेः । भवनाश्रयवाचिना भवनशब्देन भवनविशिष्टत्वाभिधानादात्मना स्वरूपेण सिद्धभवनस्यापि सत्तारूपेण भवनकर्तृता * युक्तेत्युक्तम् * आत्मना भवनं यस्येति बहुव्रीहिणा वा भवनविशिष्टत्वाभिधानं करणेतिकर्त्तव्यताकाङ्क्षाया धातूपात्तायाः सत्ताया एव करणेतिकर्त्तव्यतांशपूरकत्वं वक्तुं सत्तयेत्यंवावर्त्तनीयम् । सत्तया भवदित्यनुपात्तभवनविशेषणत्वं सत्ताया न युक्तमित्याशङ्क्य भवनानन्तर्यात्सत्ताया एव भवनलक्षणार्थत्वसूचनायार्थलक्षणार्थो भवति प्रयुक्तः कथं भवतिवाच्यावस्थानन्तर्यमस्तिवाच्यायाः अवस्थाया इत्याशङ्क्यातिदेशसूचितं जन्यादिपर्यायत्वं विवृतम्। ननु घटाकारावस्थाविशेषोत्पत्तेरतदाकारावस्थान्तरोत्पत्तिसापेक्षत्वात्प्रयोज्यप्रयोजकव्यापारभेदकल्पना युक्ता सत्तायास्त्ववस्थान्तरानपेक्षत्वेन एवंविधभेदकल्पना न युक्तेत्याशङ्क्याह * तत्रापि त्विति * उत्पत्त्याख्याद्यभावविकारानन्तरभावित्वाद्द्वितीयभावविकाररूपायाः सत्तायास्तस्याश्चावस्थाकालभेदेन भेदात्तदनुनिष्पादिसत्ताभेदस्यावश्यम्भावात्सिद्धसत्ताकाः पूर्वे ऽवयवाः प्रयोजकाः सत्ताभवनव्यावृत्ताश्चासिद्धसत्ताका उत्तरे ऽवयवाः प्रयोज्याः । सिद्धसत्ताकासिद्धसत्ताकवर्त्तित्वसामान्यं भावनाख्यो व्यापार इति कल्पनानुसर्त्तव्येत्यर्थः । ननु वस्तुत्वसामान्यरूपायाः सत्तायाः स्वरूपेणैकत्वे ऽपि कालकृतो भेदो ऽनेनोक्त इति शङ्कनीयम्। तस्या धातुवाच्यत्वाभावान्निष्पन्ने वस्तुनि इदानीमस्तीति प्रयोगस्य कालसंसर्गविषयत्वेन वस्तुस्वरूपविषयत्वाभावात् पूर्वकाल-

१ भावनाभाव्यत्वेपि २ पु० पा० ।

सत्तासम्बन्धस्य चोत्तरकालसत्तासम्बन्धं प्रति हेतुत्वाभावेन प्र-
योजकत्वव्यवस्थानुपयोगितया इह कालसंसर्गस्यावक्तव्यत्वात्काल-
कृतो भेदो येषां पूर्वोत्तरावयवानां तेषां या सत्ता या चोभयवर्त्तिनी
सामान्यसत्ता तद्रूपेणेति विग्रहः । नन्वेवं सत्याग्नेयो ऽष्टाकपालो
भवतीत्यादौ भवत्यर्थावच्छिन्नायाः पुरोडाशभावनाया विधेयत्वोप-
पत्तेः पुरुषव्यापारकल्पनानर्थिका स्यादित्याशङ्क्याह * सत्यामपि
त्विति * निष्पन्नकर्तृविषयत्वोपपादनार्थं चेतनग्रहणम् । ननु भव-
त्याद्यर्थे ऽपि विधिदर्शनात्कथं तत्र विधिप्रतिषेधयोरसम्भव इत्या-
शङ्कते * स्यादेतदिति * स्वप्रयोजकसिद्धकर्तृव्यापारलक्षणार्थ-
त्वेनात्र भवत्याद्यर्थस्य विधिविषयत्वं युक्तमिति परिहरति * स-
त्यामिति * भवतिनास्तिरप्युपलक्षितः नन्वृत्विक्त्वस्यासिद्धत्वेन
तद्भवनस्य सिद्धपुरुषव्यापारलक्षणार्थतास्तु रथन्तरादेस्तु सिद्ध-
त्वात्तद्भवनस्य विधिविषयत्वोपपत्तेः पुरुषव्यापारलक्षणार्थत्वं न स-
म्भवतीत्याशङ्क्याह * तथेति * भवतीति श्रुत्या भवनस्य विधिस-
म्बन्धे प्रतीयमाने ऽप्यचेतनव्यापारे विध्यसम्भवाद्विधेये भावना
लक्षणेत्याशयः । ननु चेतनगतस्य तर्हि भवनस्य वि-
धिविषयत्वं भविष्यतीत्याशङ्क्याह * यत्र त्विति * ति-
ष्ठत्यर्थवाचित्वात्स्मृतावपि इह भवेदिति देशविशेषाश्रितस-
त्ताभिधानेन गतिनिवृत्त्याख्यतिष्ठत्यर्थवाचित्वसम्पत्तेरेवमुक्तामि-
हामुकः स्यादिति प्रयोगे ऽस्तेरपि तिष्ठत्यर्थवाचित्वमूहितव्या
नन्वृत्विजा भवितव्यमित्यादावृत्विक्त्वादिभवितृव्यतिरिक्तभावयि-
तृपुरुषव्यापाररूपभावनासद्भावे भवितृव्यापारस्य भावनाभ्युपगमो
व्यर्थः स्यादित्याशङ्क्याह * तेनेति * विध्यादिशब्दोपात्ते च प्रैषादौ ३५०।१
निषेधे च भवितृव्यापारव्यतिरिक्ताख्यातवाच्यभावनासद्भावे ऽपि
भूताद्युपदेशेष्वभावान्न भवितृव्यापारस्य भावनात्वाभ्युपगमस्य वै-
यर्थ्यापत्तिरित्याशयः । ननु श्रुताद्युपदेशे ऽपि आत्मानमभावय-
द्भावयति भावयिष्यतीति वा व्यवहारादर्शनाद्व्यर्थो भवितृव्यापा-
रस्य भावनात्वाभ्युपगमः स्यादित्याशङ्क्य *अपारमार्थिकमित्युक्तम *
व्यवहारानुपात्यापि भवितृव्यापारस्य भावनात्वमाख्यातार्थवत्त्वाय
तत्राभ्युपगतमित्याशयः । एतच्च सिद्धभवनानामवयवानां भावना-
ख्यो व्यापारो भवतिपदेन भवनं करोतीत्यभिधानादुच्यते असिद्धभव-
नावयवव्यापारस्तु धातुमात्रेणोच्यतइत्यङ्गीकृत्य प्रयोज्यनिष्ठप्रयोज-
कव्यापाररूपभावनावाचित्वमाख्यातस्योक्तम् । यदा प्रतीत्यनुसारात्स-
मस्तस्य भ्रमच्चक्रोपस्थानप्रभृतेर्घटाकारनिष्पत्तिपर्यन्तस्य व्यापारस्य

वाचको धातुरिष्यते तदा प्रयोज्यप्रयोजकव्यापारभेदाभावाद्धातुमात्रोक्तव्यापारस्य च कर्तुरेकत्वेन प्रयोज्यप्रयोजकत्वभेदायोगादसिद्धत्वेन च घटस्य प्रयोजकत्वायोगादवयवलक्षणायां च कारणाभावात्प्रयोजकव्यापाररूपभावनानुपपत्तेर्भूताद्युपदेशे ऽपि कर्तृसंख्यादिमात्रमाख्यातेनोच्यते न भावनेत्याह * भूतादीति * अस्तेर्लभ्यमानसत्ताकत्वावस्थावाचित्वात्तस्याश्चोत्पत्तिवदतदाकारावस्थान्तरानपेक्षत्वेनावयवशब्दाभिलप्यावस्थाभेदायोगे ऽप्युत्पत्त्यनन्तरकालत्वेनोत्पत्त्यवस्थाकालभेदेन भेदावश्यम्भावापत्तिसूचनार्थं कालग्रहणम् । यथा प्रतीत्यनारूढत्वादवयवकालव्यतिरिक्तार्थान्तरकृतस्य भेदस्यानाश्रयणं तथावयवकालकृतस्यापीत्यादिशब्देन सूचितम् । भेदाभावे चैकस्यैव प्रयोज्यव्यापारता प्रयोजकव्यापारता च विरुद्धेत्यर्थः । एवं तर्हि व्यभिचारो दुर्वारः स्यादित्याशङ्क्याह * न चेति * यत्तु धातूनां भावनावाचित्वमुक्तं तदनुभाषणपूर्वकं दूषयति * यत्त्विति * धात्वश्रवणे ऽप्योदने पच्यमाने दृष्टे पक्तृव्यापाररूपभावनाप्रतीतेर्धातुश्रवणे ऽपि च मानसादपचाराद्धात्वर्थाप्रतीतावप्रतीतेः धात्वर्थाव्यभिचारद्वारा धातूनामव्यभिचारो न स्वत इत्यर्थः । धात्वर्थाव्यभिचारे च सति तत एव प्रतीत्युपपत्तेः । सत्यपि धात्वव्यभिचारे तद्वाच्यत्वकल्पना न युक्तेत्याह * तैरेव त्विति* चशब्दार्थे ऽनुशब्दः यदि चाख्यातवत् स्वप्राधान्येन कृदन्तेषु भावनावगम्येत ततो धात्वर्थप्रतीतिनिरपेक्षभावनाप्रतीत्युपपत्तेर्वाच्यत्वं कल्प्येत धात्वर्थनिष्पादकत्वेन तु तद्गुणत्वप्रतीतेर्धात्वर्थप्रतीतिसापेक्षत्वान्न साक्षाद्वाच्यत्वकल्पना युक्तेत्याह * तथा हीति * देवदत्तेनेत्यादिकारकविभक्तिश्रवणे यथाकारकसिद्ध्यर्थत्वेन तद्गुणतया ऽप्यवगम्यमानाया भावनाया न कारकविभक्तिवाच्यत्वं कल्पितं तथा धात्वर्थसिद्ध्यर्थत्वेनाप्यवगम्यमानाया न धातुवाच्यत्वं कल्पनीयमिति दृष्टान्तार्थं कारकग्रहणम् । एतदेव कर्त्रधिकरणसिद्धदृष्टान्तपूर्वकं विवृणोति *यथैवेति* नन्वर्थादवगम्यमानाया भावनाया अशाब्दत्वात्करोतिसामानाधिकरण्यं पदान्तरोपात्तकारकान्वयश्च न स्यादित्याशङ्क्याह * गम्यमानेति * पक्तव्यमित्यादेर्भावनानपेक्षत्वे किं कर्त्तव्यमित्यादिप्रश्नानुरूप्यायोगावुरवायामोदनस्य काष्ठैर्देवदत्तेन पाक इत्यादौ च क्रियतइत्याद्याख्यातानपेक्षत्वे पाकभावनेत्यप्युक्ते ऽन्वयाप्रतीतेः । निष्पाद्यरूपभावनावगतिसापेक्षत्वादन्वयस्य भावनायां तात्पर्यावगतेरवाच्यत्वे ऽपि भावनायास्तात्पर्यवृत्त्या शाब्दत्वाद्युक्तं सामानाधिकरण्यादीत्याशयः । गम्यमानाया अपि भावना-

यास्तद्वाचिनश्चाख्यातस्यापेक्षया तात्पर्यावगतिरिति तात्पर्यसूचनायापेक्षोक्ता गम्यमानस्यापि तात्पर्यवृत्त्या शाब्दत्वात्सामानाधिकरण्योपपत्तौ कर्त्रधिकरणसिद्धदृष्टान्ताभिधानं तथाभूतयेत्यपेक्ष्यमाणत्वेन तात्पर्यवृत्त्या शाब्दीभूतयेत्यर्थः भावनया कारकाणामन्वयायोगे ऽपि धात्वर्थेनैव गम्यमानभावनान्वयापादितसाध्यभावेनान्वयो भविष्यतीति प्रौढ्या परिहारान्तरमाह * अथ नेति * धात्वर्थस्य साध्यत्वसिद्ध्यर्थभावनायास्तन्निष्पादकत्वेनोपसर्जनतोक्ता।ननु धात्वर्थस्याक्रियारूपत्वात्कथं कारकान्वयो ऽत आह * स एव हीति * क्रियाया अपि निष्पन्नायाः कारकानपेक्षत्वात् साध्यत्वप्रयुक्तकारकापेक्षावगतेरक्रियारूपस्यापि च धात्वर्थस्य क्रियान्वयेन साध्यत्वापत्तेर्युक्तः कारकान्वय इत्याशयः। नन्वाख्यातश्रवणे तर्हि कथं भावनान्वयाभ्युपगमो ऽत आह * भावनापि चेति * गुणस्येव द्रव्यपरिच्छेदं विना कारकाणां धात्वर्थनिष्पादनं विना भावनान्वयायोगाद्धात्वर्थसिद्ध्यर्थत्वेनैव भावनया ग्रहणादाख्याताश्रवणे भावनान्वयाभावे ऽपि धात्वर्थान्वयो गौररुणेत्यत्र गुणस्य द्रव्यवदविरुद्ध इत्याशयः। कारकान्वयान्यथानुपपत्त्या कृदन्तानां भावनानभिधायित्वे ऽपि सर्वेषां भावनापरतोक्ता तद्विशेषाणां तु कृत्यानां प्रैषवाचित्वान्यथानुपपत्त्यापि भावनापरतावगम्यतइत्याह * कृत्यानां त्विति * एतदेव प्रश्नपूर्वकमुपपादयति * कुत इति * प्रैषाणां पुंव्यापारविषयत्वे ऽपि धात्वर्थस्यैव पुंव्यापारत्वोपपत्तेः किं भावनयेत्याशङ्क्य * तस्य चेत्युक्तम् * पुंसः को व्यापार इत्यपेक्षायां भावनेति वाच्यमित्यर्थः। एवमपि प्राधान्याप्रतीतेः साध्यसाधनेतिकर्त्तव्यतांशत्रयवशीकारासामर्थ्यात्कथमंशत्रयपरिपूर्णतेत्याशङ्क्यांशत्रयात्मिकेत्युक्तम्।अंशत्रयावच्छेदं विना ऽनुष्ठेयत्वाभावादेतादृश्या एवाक्षेपात्तद्बलेनैव प्राधान्यमपि कथं चिद्भविष्यतीत्याशयः। प्रैषाणां पुंव्यापारविषयत्वोपपादनपूर्वकम् श्लोकं व्याचष्टे * न हीति * प्रैषाणां भावनाविषयत्वोपपादनस्य प्रकृतभावनातात्पर्योपयोगितामाह * ते यदीति * ननु वैदिकानां कृत्यानां पुरुषाशयवि- ३५।११
शेषप्रैषवाचित्वायोगाद्विधौ चास्मृतेरनुष्ठापकत्वाभावात् कथं भावनापेक्षेत्याशङ्क्याह * यावांश्चेति * प्राप्तविषयत्वप्रवर्त्तकत्वसमुदायात्मकप्रैषवाचिनां कृत्यानां ब्राह्मणे प्राप्तविषयत्वाभावात् समुदायासम्भवे ऽपि प्रवर्त्तनात्मकत्वे तदेकदेशे ऽपि लक्षणया प्रयोगोपपत्तेरप्राप्तविषयप्रवर्त्तनस्य च विधित्वादस्मृतमपि विधायकत्वं सेत्स्यतीत्याशयः।मन्त्रगतेषु कृत्येषु प्राप्तविषयत्वोपपत्तेर्ब्राह्मण-

ग्रहणम् । ननु प्रणतं नीचं प्रत्येषणं स्वाभिमतसाधने प्रवर्त्तनार्थं गमनं प्रैषणमधिकं वोच्यं प्रत्येषणं अध्येषणम् गत्यर्थैष्यतिधात्वनुसारात्प्रसिद्धं तयोश्च मदभिमतसाधनमनेनानुष्ठेयमित्येवं विधोच्चनीचपुरुषाशयविशेषात्मकत्वेनापौरुषेये वेदे क चिदप्ययोगात् ब्राह्मणविशेषणं व्यर्थमित्याशङ्क्याह * अयमेव चेति * अग्नीदग्नीन्विहरेत्यादिमन्त्रेष्वध्येतॄणां प्रैषसमाख्यानात् भृत्यादिवच्चाग्नीधो ऽध्यग्नीत्कर्त्तृकपदार्थानुष्ठानार्थं वृतत्वेन पदार्थानुष्ठाने प्रणतत्वात्तं प्रति प्रवर्त्तनार्थगमनोपलक्षितस्य प्रवर्त्तनस्य प्रैषशब्दवाच्यत्वोपपत्तेर्नाव्यापकं पुरुषाशयत्वं प्रैषलक्षणान्तःपातीतिभावः । प्रेषणं प्रवर्त्तनं भावनायाः प्रत्ययार्थत्वमुपपादितमुपसंहरतिः * तस्मादिति * ननु भावनाया धात्वर्थाद्भेदे सत्युक्तेन न्यायेनास्तु प्रत्ययवाच्यत्वं न त्वसौ धात्वर्थाद्भिन्नास्तीति शङ्कते * ननु चेति * अयमाशयः प्रयोजकव्यापारत्वविशेषणेन प्रयोज्यव्यापाररूपाद्विक्लेदनादिधात्वर्थाद्भेदे सत्यप्यधिश्रयणादेः प्रयोजकव्यापाररूपाद्भेदो नोपलभ्यते स्थाल्यधिश्रयणोदकासेचनतण्डुलावापादिप्रयोजकव्यापारसमूहो हि विक्लेदनफलावधिः पचिनोच्यते कः पच्यर्थो येयं तण्डुलानां विक्लित्तिरिति तु महाभाष्यकारीयं विक्लित्त्यर्थत्वाभिधानं फलाभिप्रायं विक्लेदनाख्यप्रयोज्यव्यापारवाचित्वे देवदत्तः पचतीति सामानाधिकरण्यायोगापत्तेर्यैनापि देवतोद्देशपूर्वकं द्रव्यत्यागाख्यसङ्कल्पः प्रयोजकव्यापार एवोच्यते अतो धात्वर्थादभिन्नत्वान्न प्रत्ययार्थो भावनेति । पचौ प्रतीयमानान्यधिश्रयणादीनि यजौ च प्रतीयमानः सङ्कल्पः प्रयोजकव्यापार इति कृत्वैवमादीनां भावनात्वमित्यर्थः । ननु स्थाल्यादीनां चुल्ल्यादिसंयोगस्याधिश्रयणादिशब्दवाच्यस्याव्यापारत्वान्न भावनात्वापत्तिरित्याशङ्क्य * अत एव चेत्युक्तम् * अधिश्रयणादीनां पचिवाच्यस्य पचावधिश्रयणादीनीत्यनेनैव सिद्धत्वात् प्रयोजकव्यापारत्वावधारणायैवकारः प्रयोजकव्यापाररूपा एवाधिश्रयणादयः पच्यादिधात्वर्था न संयोगरूपा इत्यर्थः * अयमाशयः * संयोगमात्रं वा ऽधिश्रयणशब्दवाच्यं स्यात् स्थालीचुल्लीसंयोगो वा । तत्राद्ये कल्पे सर्वधातूनां पर्यायत्वम् । द्वितीये स्थालीचुल्ल्योरप्यभिधानापत्तेर्गौरवं दोषः । संयोगवाचित्वे चाधिश्रयतेरुदासीने ऽपि पक्तरि संयोगसद्भावो ऽधिश्रयणं वर्त्ततइति प्रत्ययापत्तिः । क्रियमाणसंयोगवाचित्वे वा प्रत्ययवाच्यायाः प्रक्रियायाः प्रागप्रतीतेर्विशेषणत्वायोगाद्धातुनैव क्रियाविशिष्टसंयोगाभिधानापत्तेर्दुर्वारं प्रयोजकक्रियाधातुवाच्यत्वम् अनेनैव न्यायेन गम्यादेः सं-

योगविभागावाचित्वं निरसनीयम्। संयोगविभागविशेषलाभाय च संयोगिनोर्विभागिनोश्चाभिधानापत्तेरतिगौरवं यज्यादेश्च संयोगविभागावाचित्वायोगात् संयोगविभागात्मकधात्वर्थवचनमव्यापकं स्यात्तत्त्वावियोगात्मकस्वस्वामिविभागयज्यर्थाभ्युपगमे ऽपि जानात्यादौ कथं चित्संयोगविभागानिरूपणादव्याप्त्यपरिहारः भवति करोत्योः शक्तिभेदात्तु विक्लिद्दिपचत्योरिव नियतं प्रयोज्यप्रयोजकव्यापारवचनत्वमिति वार्त्तिकाद्व्यापारस्यैव धात्वर्थतावसीयते धातुमात्रनिर्देशाच्च न प्रत्ययविषयतयातद्वार्त्तिकं व्याख्यातुं शक्यम् प्रत्ययस्य च एयन्तत्वाभावात्प्रयोज्यकर्तृकैकान्तव्यापारप्रतिपादकाः ण्यन्ता एवेति न युज्येत संयोगविभागात्मकत्वे च धात्वर्थस्याव्यापाररूपत्वाद् गोदोहनादिभिराश्रयत्वेन ग्रहणं न युज्यते धात्वर्थावच्छिन्नाया भावनाया एवाश्रयत्वाभ्युपगमे गुणफलसम्बन्धविधौ वाक्यभेदभयेन प्रकृताश्रयापेक्षणाद्भावनाभेदमुपपत्तेर्गुणकामेष्वाश्रयैः सह सामानासामानविध्यविचारः संस्थाधिकरणे करिष्यमाणो न युज्यते व्यापाररूपत्वे ऽपि करोत्यर्थक्रियारूपत्वाभावाक्रियारूपायां भावनायां कारकत्वाविरोधः।

व्यापाररूपधात्वर्थादतो भेदमपश्यताम्॥
संयोगरूपधात्वर्थवर्णनं भेदतृष्णया॥ १॥
व्यापाररूपधात्वर्थात् सान्या स्पन्दात्मिका हि किम्॥
प्रयत्नात्मा द्विरूपा वा सर्वथापि न युज्यते॥ २॥
प्रयत्नो भावना चेत् स्यान्न रथो गच्छतीति हि॥
प्रयोगः स्यात्प्रयत्नो हि चेतनेष्वेव सम्भवेत्॥ ३॥
स्पन्दस्य भावनात्वे तु यजेतेति न चेतने॥
द्विःसाधारणरूपत्वे शब्दो वक्तीत्यसम्भवः॥ ४॥
न शब्दे स्पन्दयत्नौ हि विभुत्वाच्चेतनत्वतः॥
एवं च सतिधात्वर्थसामान्यं भावना पतेत्॥ ५॥
अथानयोर्हेतुभूतमन्यत्तन्नोपलभ्यते॥
अभूतोत्पादनं चान्यद्धात्वर्थान्नैव दृश्यते॥ ६॥
अन्योत्पादानुकूलत्वे भावनैकं च तद्यदा॥
तदा न भावनाभेदो भवेद्धात्वर्थभेदतः॥ ७॥
प्रतिधात्वर्थमन्यत्वं न च तस्यावधार्यते॥
धात्वर्थभेदमात्रेण फलभेदप्रसिद्धितः॥ ८॥
अथ धर्मेण येन स्याद्धात्वर्थः फलसाधनम्॥
स धर्मो भावनान्यश्च प्रतिधात्वर्थमिष्यते॥ ९॥

तस्य धात्वर्थधर्मत्वे पुम्धर्मत्वं विरुध्यते ॥
पुम्धर्मस्तु प्रयत्नः स्यात् स च पूर्वं निराकृतः ॥ १० ॥
किं च धात्वर्थनिर्वृत्तिपर्यन्तत्वात् सभावना ॥
कथं धात्वर्थसाध्या हि सेष्यतेफलसाधनम् ॥ ११ ॥
अथ धात्वर्थजन्योऽपि शक्त्यात्मा पुरुषाश्रितः ॥
प्रतिधात्वर्थमन्योऽसौ नापूर्वादतिरिच्यते ॥ १२ ॥
तस्याव्यापाररूपत्वाद्भावनात्वं न चेष्यते ॥
व्यापारत्वेऽपि करणव्यापारत्वान्न भावना ॥ १३ ॥
तत्कर्तृव्यापृतिः सा हि प्रत्ययार्थश्च नत्वदः ॥

अतो धात्वर्थातिरिक्तभावनानुपपत्तेः प्रत्ययार्थता न युक्तेति तात्पर्यार्थः । परिहरति * नैष इति * व्यापारत्वाविशेषाद्धात्वर्थभावनयोर्भेदानवभासेऽपि पाकं करोति यागं करोतीति भिन्नेषु धात्वर्थेषु करोत्यर्थानुवृत्तेर्धात्वर्थाद्भेदोऽध्यवसीयतइत्यर्थः । श्लोकं व्याचष्टे * सर्वत्र हीति * सर्वधात्वर्थसाधारणस्य व्यापाररूपस्य करोत्यर्थस्याख्यातपदांशप्रत्ययवेलायां प्रतीतिसूचनायांशशब्दः विक्लेदनोद्देशेन क्रियमाणस्याधिश्रयणादेः पचिवाच्यत्वं वक्तुं विक्लित्तिग्रहणे समासस्थायाः षष्ठ्याः सम्बन्धमात्रोत्पन्नाया अपि तादर्थ्यलक्षणसम्बन्धविशेषनिष्ठत्वाद्विक्लित्त्यर्था अधिश्रयणादय इति समासार्थः । आदिशब्दोपात्तस्य वा विक्लिदेर्विक्लित्तिर्वाच्या धात्वर्थानां नियतकर्तृस्थभावनातो वैलक्षण्यं वक्तुं केषां चित्कर्मस्थत्वप्रदर्शनायोक्ता को ऽसावधिश्रयणादिकर्तृस्थव्यापारातिरिक्तसामान्यरूपो व्यापार इत्यपेक्षायामाह * तत्रेति * औदासीन्यमकुर्वत् रूपत्वावस्था ततः प्रच्युतिः कुर्वद्रूपत्वं करोतिप्रत्ययवेद्यमन्योत्पादानुकूलत्वं तेन रूपेण यन्निरूप्यते सा भावना इत्यर्थः । संयोगविभागादिहेतोः स्पन्दादेर्धात्वर्थाद्वैलक्षण्यप्रदर्शनार्थो मात्रशब्दः अकर्मकधातुवाच्यध्वननादिधात्वर्थानन्तरं नियमेनान्योत्पादादर्शनात्सकर्मकधातुवाच्येभ्यश्च गमनादिभ्यो ऽनन्तरमेव संयोगविभागाद्युत्पत्तेरुत्पाद्यानाकाङ्क्षणाद्भाव्याकाङ्क्षालक्षणभाव्यनिष्ठत्वापरपर्यायान्योत्पादानुकूलत्वरहिताद्धात्वर्थादकुर्वद्रूपत्वलक्षणौदासीन्यप्रच्युत्यात्मकत्वेनान्योत्पादनरूपत्वादनन्तरं च फलानुत्पत्तेर्भाव्यनिष्ठत्वापरपर्यायान्योत्पादाकाङ्क्षालक्षणान्योत्पादानुकूलत्वात् भावनाया वैलक्षण्यमित्याशयः । ततश्च यथा प्रयोज्यापरपर्यायकर्मस्थस्य विक्लेदनादेर्व्यापारत्वे सत्यपि प्रयोजकापरपर्यायकर्तृव्यापारत्वाभावात् न भावनात्वं तथाधिश्रयणादेः प्रयोजकव्यापारत्वे सत्यपि

भाव्यनिष्ठत्वाभावान्न भावनात्वमित्याशङ्कापरिहारः सूचितो भवति नन्वधिश्रयणादेः परिस्पन्दात्मकात्प्रयोजकव्यापारादन्यो भाव्यनिष्ठः प्रयोजकव्यापारश्चेदस्ति किमिति तद्व्यतिरेकेण नोपलभ्यतइत्याशङ्क्य *परिस्पन्दरूपमित्युक्तम्* भावनाया धात्वर्थेन विषयभूतेन ज्ञानस्येव ज्ञेयेन निरूपिताया अवच्छिन्नायाः कार्यभूतेन वा धात्वर्थेन करणतया निरूपितायाः कल्पितायाः निरूप्यत्वाद्धात्वर्थं विनानुपलब्धिर्युक्तेति भावः। भावनावच्छेदकधात्वर्थमात्रोपलक्षणार्थः परिस्पन्दशब्दः रूपशब्दस्य करणव्युत्पत्तौ परिस्पन्दो रूपमस्येति विग्रहः। कर्मव्युत्पत्तौ वा परिस्पन्देन निरूप्यमाणमिति विग्रहः। स्वशरीरस्य स्पन्दस्य ह्यात्मप्रयत्नहेतुकत्वव्याप्तेः। परशरीरे स्पन्ददर्शनात्प्रयत्नो ऽनुमीयते स्वप्रयत्नश्च मानसप्रत्यक्षवेद्यो ऽपि गमने ऽहम्प्रयते पाके ऽहम्प्रयते इति गमनादिना स्पन्देन यागे ऽहम्प्रयते ध्याने ऽहम्प्रयतइति वा चलनात्मकेन यागादिना धात्वर्थेनावच्छिन्न एव च भाव्यनिष्ठप्रयोजकव्यापारत्वात्मकभावनालक्षणयोगादर्थिपुरुषव्यापारत्वाच्चार्थयतइति कर्तृव्युत्पत्तिद्वारा ऽर्थयितृपुरुषव्यापारवाच्यर्थभावनाशब्दव्याच्यः सर्वेषु लङाद्याख्यातेषु गम्यते। यत्त्वस्मिन्पक्षे रथो गच्छतीत्यचेतने नाख्यातं प्रयुज्यते इत्युक्तं। तत्रैवं वाच्यं किमाख्यातप्रयोगान्यथानुपपत्त्या रथादौ भावना कल्प्यते। प्रतीतिबलाद्वाभ्युपगम्यते न तावत् स्पन्दातिरिक्ता भावना प्रत्यक्षेण प्रतीयते नापि कादाचित्कत्वं स्पन्दाख्यकार्यदर्शनात्कल्प्यते इति रथवोढ्रश्वादिप्रयत्नात् स्पन्दमानाश्वादिशरीरसंयोगात्तदभावे ऽपि वा पतनप्रतिबन्धकाधारसंयोगाभावसहकृताद् गुरुत्वाद्रथस्पन्दोपपत्तेः वायुसंयोगादिसद्भावभावितया च वृक्षस्य पर्णादिपतनस्य न कारणत्वकल्पना युक्ता वायोस्तु स्वाभाविकस्पन्दो न शक्नोत्येव स्वकारणत्वेन व्यापारान्तरं कल्पयितुं स्पन्दस्य च वायुरथादेः स्पन्दनं चलनं गमनं वर्त्ततइति आख्याताश्रवणे ऽपि धातुमात्रात्प्रतीतेराख्यातार्थत्वं भाव्यनिष्ठत्वाभावाच्च भावनात्वं नाभ्युपगन्तुं युक्तं स्पन्दतिचलत्योश्चाकर्मकत्वात्तद्वाच्यस्य स्पन्दस्य भाव्यनिष्ठत्वमनाशङ्क्यमेव ततश्च वायुरथादौ स्पन्दस्य भावनात्वायोगात्तदतिरिक्तव्यापारानुपलब्धेश्च प्रयत्नात्मकभावनानभ्युपगमे आख्यातस्य भावनाव्यभिचारो दुष्परिहरः स्पन्दस्य भावनात्वाभ्युपगमे ऽपि स्पन्दत्यादिधातुनैव तदभिधानसिद्धेस्तत्परस्याख्यातस्य व्यभिचारस्तदवस्थ एव स्पन्दत्यादिपराख्यातवच्च पचत्यादिपराख्यातस्यापि स्पन्दवाचित्वं न युक्तं न हि पचतीत्यस्य पाके स्पन्दतइत्यर्थं के

चिद्व्याचक्षते तथा यज्यादार्थश्चातो ऽवगम्यते भावयेदिति चेत्युक्ते कीदृशी पुनराख्याताद्भावनावगम्यते इत्यपेक्षायां तथा यतेत यथा किं चिद्भवतीति प्रयत्नवाचिताख्यातस्य भाष्यकृता विवृता दध्नेन्द्रियकामाधिकरणे च जुहुयादिति शब्दस्यैतत्सामर्थ्यं यद्धोमविशिष्टं प्रयत्नमाहेत्यभिधानात् जुहुयादित्यस्य होमे यतेतेत्यर्थः सूचितो भवति। प्रयत्नस्य चेच्छायोनित्वान्निष्फले चेच्छायोगाद्भाव्यनिष्ठत्वावगतेर्धात्वर्थनिष्पत्तिमात्रेण च फलवत्त्वासिद्धेस्तन्निष्पत्तिमात्रेण पर्यवसानायोगेन धात्वर्थकरणकस्य प्रयत्नस्य फलसाधनत्वाविघातात्प्रयत्नस्य भावनात्वे न कश्चिद्दोषः। प्रयत्नाभावे च वातरोगादिना देवदत्ते स्पन्दमाने नायं स्पन्दं करोति किं तु वातादिवशादस्य स्पन्दो भवतीति व्यवहारदर्शनात्प्रयत्न एव करोत्यर्थो ऽवगम्यते रथादावपि न रथः स्वयं गमनं करोति किं त्वश्वादिनास्य गमनं क्रियते इति व्यवहारदर्शनाद्धातुवाच्यस्पन्दातिरिक्तकरोत्यर्थभावनाप्रतीत्यभावः सिद्धः । आख्यातप्रयोगान्यथानुपपत्त्या तु रथादौ भावनाकल्पने रथो भवतीत्यत्रापि सर्वदा भावनाकल्पनापत्तेः भूतादिकथने ऽप्यवयवादिकृतभेदानाश्रयणे धात्वर्थमात्रं कर्तृसंख्यादयश्चाख्यातपदार्थत्वेनावधार्यन्ते न भावना न च भावनाव्यभिचारेण दोष इति वार्त्तिकं विरुध्यते अवयवादिकृतभेदविवक्षायामस्त्यादौ भावनाभ्युपगमः पूर्वोत्तरवार्त्तिकपर्यालोचयया प्रौढिमात्रेणेत्युक्तम् अथ वा सो ऽपि प्रयत्नाभिप्रायेण व्याख्यातुं शक्यते नित्यस्यात्मनः शरीरशरीरिणोरभेदविवक्षया शरीरानिष्पत्तावनिष्पत्तिव्यपदेशोपपत्तेः पञ्चधातून् स्वयं षष्ठ आदत्ते युगपत्प्रभुरित्यादिस्मृतिपर्यालोचनया चात्मनः शरीरोत्पादनप्रयत्नावगमात् सिद्धभवनशरीरावयवाधिष्ठानेनात्मनासिद्धभवनान् शरीरावयवान्प्रति प्रयोजकस्य प्रयत्नात्मिका भावना न विरुध्यते। एवं च सिद्धकर्तृक्रियावाचिनीत्यपि चेतनाभिप्रायं व्याख्यातुं शक्यम् । यद्वा अर्थभावनायाश्चेतनमात्राश्रयत्वे ऽपि शब्दभावनायाश्चेतनाश्रयत्वायोगादुभयव्याप्त्यर्थं सिद्धमात्रग्रहणं नित्यस्यापि शब्दस्याभिव्यक्तिः सिद्धिरभिप्रेता भाव्यनिष्ठप्रयोजकव्यापारत्वलक्षणयोगाच्च शब्दव्यापारस्याप्यविरुद्धं भावनात्वं। यथैव हि इच्छायोनित्वात्प्रयत्नस्येष्यमाणभाव्यं विनात्मलाभायोगाद्भाव्यनिष्ठत्वं तथा लिङादिव्यापारस्यापि प्रेरणाख्यस्य प्रवृत्त्याख्यभाव्यकल्पत्वेन तन्निष्ठतावसीयते। न च यथा स्पन्दानन्तरमेव संयोगविभागोत्पत्तेराकाङ्क्षातः प्रागेवाकाङ्क्षणीयलाभे लब्धव्यालाभनिमित्ताकाङ्क्षानुपपत्तेरन्यथा च कदा चिन्नैराकाङ्क्ष्यानु-

पपत्तिप्रसङ्गात् स्पन्दस्य भाव्याकाङ्क्षालक्षणं भाव्यनिष्ठत्वं नास्ति तथा प्रेषणाया भाव्यनिष्ठत्वाभावः पुरुषप्रवृत्तेः साध्यसाधनेतिकर्त्तव्यतापर्यालोचना सापेक्षत्वेन प्रेरणानन्तरमनुत्पत्तेः अनेनैव न्यायेन सर्वशब्दगतस्याभिधानलक्षणस्यापि व्यापारस्यार्थप्रतिपत्त्याख्य भाव्यकल्पितस्य भावनात्वमनुसन्धेयं तस्या अनभिहिताया एव कार्योपयोगित्वाल्लिङादियुक्तेषु वाक्येषु द्वे भावने प्रतीयेते इत्यादौ भावनाद्वयोपन्यासाविरोधः ॥

स्पन्दप्रयत्नयोरेव भावनात्वमिति भ्रमम् ।
अपनेतुं प्रसक्तानुप्रसक्त्यैतदुदीरितम् ॥
प्रयत्नव्यतिरिक्तार्थभावना तु न शक्यते ।
वक्तुमाख्यातवाच्येह प्रस्तुतेत्युपरस्यते ॥ २ ॥
स्त्रीत्वाभावे ऽपि खट्वादौ टाबादिप्रत्ययो यथा ।
प्रयुज्यते तथाख्यातं यत्नाभावे ऽप्यचेतने ॥
स्त्रीत्वादेः प्रत्ययार्थत्वं चतुर्थे वक्ष्यते स्फुटम् ।
तथा च लिङ्गमित्यत्र प्रयत्नस्य तथा भवेत् ॥
धातोरनुग्रहार्थं वा वाच्यन्तरध्रियेथ वा ।
प्रत्ययो ऽवश्यवक्तव्यस्तावता न त्ववाच्यता ॥
वोढ्रश्वादिगतं यत्नं रथादावुपचर्य वा ।
उपपाद्यः प्रयोगो ऽत्र मुख्यार्थानुपपत्तितः ॥
तिङ्वाच्यो हि करोत्यर्थः सामानाधिकरण्यतः ।
प्रयत्नश्च करोत्यर्थस्तदन्यानुपलम्भनात् ॥
न चौलूक्यैः प्रयत्नस्य गुणत्वपरिभाषणात् ।
अकरोत्यर्थता शङ्क्या सिद्धरूपा प्रतीतितः ॥
बुद्धीच्छाद्वेषयत्नानां शब्दज्ञैः कर्मतेष्यते ।
इत्याचार्यैश्च यत्नस्य व्यापारत्वाभिधानतः ॥
चेतनप्रेरकत्वं च विधेस्तद्विषयत्वतः ।
काष्ठाद्यप्यन्यथाकस्मान्न प्रेरयति वायुवत् ॥
विध्यर्थाज्ञानतो प्रेर्यं चेत्काष्ठादि ततः कथम् ।
सौधन्वननिषादादेरप्रेर्यस्याधिकारिताम् ॥
विधिस्त्वप्रेरयत्यत्रेत्यप्रेर्यो ज्ञाप्यते कथम् ।
विद्वद्भिर्ज्ञापनादेव प्रेर्यत्वे ऽन्योन्यसंश्रयम् ॥
धात्वर्थव्यतिरिक्तातः प्रयत्नाख्याथ भावना ।
यजत्यादिपराख्यातवाच्यतेत्यसमञ्जसम् ॥

ननु धात्वर्थभावनयोर्द्वयोर्व्यापाररूपत्वे समत्वेनान्योन्य-

समन्वयो न स्यादित्याशङ्क्याह * ये त्विति * व्यापारत्वसाम्ये ऽपि भावनाया एव भाव्यनिष्ठत्वेन करोत्यर्थरूपक्रियात्वाद्धात्वर्थस्य च भाव्यनिष्ठत्वाभावेन क्रियारूपत्वाद्यथायोग्यं सन्निकर्षविप्रकर्षापेक्षया करणत्वेनेतिकर्त्तव्यतात्वेन वा भावनान्वयः सम्भवतीत्याशयः। यथा कर्मगतस्य विक्लेदनादेः प्रयोज्यव्यापारस्य विक्लिद्यतस्तण्डुलान् पचतीत्यादिप्रयोगदर्शनात् व्यापारत्वसाम्ये ऽपि भावनान्वयो न विरुध्यते तथा कर्तृगतस्य पाकादेः प्रयोजकव्यापारत्वसाम्ये ऽपीत्यर्थः । एवं च तर्हि यस्य कस्य चिद्धात्वर्थस्य यया कया चिद्भावनयान्वयः कस्मान्न स्यादित्याशङ्कानिरासायानुरञ्जकत्वविशेषणम्। ननु धात्वर्थविशेषाणां भावनानुरञ्जकत्वाभ्युपगमे गौः शावलेय इतिवत् सामान्यविशेषात्मकैकवस्तुत्वापत्तेः क्रियाकरणविभागो न स्यात् इत्याशङ्कते * एवं तर्हीति * भावनायाः प्रयत्नात्मकत्वात् धात्वर्थस्य च स्पन्दात्मकत्वादेकवस्त्वात्मकत्वाभावे ऽपि भावनाया भाव्यनिष्ठत्वाद्धात्वर्थं च विना भाव्यासिद्धेः स्वरूपेण धात्वर्थसाधनत्वे ऽपि भाव्यावच्छिन्नरूपेण धात्वर्थविशेषसाध्यत्वात् सामान्यरूपतोपपन्नेति परिहरति *सत्यमिति * एतदेव प्रश्नपूर्वकमुपपादयति * कथमिति * अयमाशयः द्वैधीभावाद्युद्देशप्रवृत्तोद्यमनादिकर्तृव्यापारव्याप्यस्य परश्वादेः करणत्वदर्शनात् भाव्योद्देशप्रवृत्तभावनाव्याप्यत्वेनाख्याते धात्वर्थः करणतयावसीयते णिजन्ताद्धि भवतेरचो यदिति कर्मणि कृत्प्रत्यये कृते भाव्यशब्दव्युत्पत्तेरीप्सिततमस्य च कर्मत्वाद्भावयितुमिष्टतमं यदुद्दिश्य भावना प्रवर्त्तते तद्भाव्यं ततश्च यथा गामानयायं दण्ड इत्युक्ते तृतीयां विनापि दण्डस्यान्यथान्वयायोगात्करणत्वं प्रतीयते तथा किञ्चिदीप्सितं भाव्यं भावयतीत्युक्ते भाव्यान्तरोद्देशेन प्रवृत्तया भावनया धात्वर्थस्य भाव्यत्वेनान्वयायोगात्करणत्वं प्रतीयते तस्माद्यागादौ साध्यात्मकभावनासामान्याविरुद्धकरणात्मकधात्वर्थसामान्यसद्भावात् भावनासामान्यं न समवेतमिति करणत्वस्य भावनासामान्याविरोधप्रदर्शनायोतरार्द्धम्। ननु निर्विशेषभावनासामान्यायोगाद् बलाद्धात्वर्थेषु विशेषेषु समवायापत्तिरित्याशङ्क्याह * भावनाया हीति * ज्ञेयैक्ये ऽपि ज्ञानस्येव धात्वर्थैक्ये ऽपीषत्प्रयते ऽहमतिशयेन प्रयते ऽहमिति सातिशयानतिशयादिभेदेन प्रयत्नरूपभावनाभेदावगतेरनौपाधिकभेदद्योतनायैवकारः भावना चेन्न धात्वर्थसामान्यं किं तदित्यपेक्षायामाह * तथेति * यथा यद्भावनासामान्यं तद्धात्वर्थेन समवैति तथा यद्धात्वर्थसमवेतं तद्भावनासा-

मान्यं न भवतीति सूचनार्थस्तथाशब्दः कथं यागादेर्भावनाकरणत्वेत्याशङ्क्य भावनायाः केनेति करणांशेनापेक्षाहेतुत्वेनोक्ता धात्वर्थभावनयोर्भेदस्य सूत्रकृत्सूचितत्वं द्योतयितुं यद्भावार्थाः कर्मशब्दा इत्यनेन कर्मशब्देनाभिधीयतइत्युक्तम। नन्वेवं सति कृभ्वस्तयः क्रियासान्यवचनाः क्रियाविशेषवचनाः पचत्यादय इत्यादियागादिधात्वर्थानां क्रियाख्यभावनाविशेषस्मरणं न युज्यते इत्याशङ्क्याह * विशेषणेति * भुवो णिजन्तस्य क्रियासामान्यवचनताभिप्रेता ३५२।१
अस्तेरप्यार्द्धधातुके णिचि कृते ऽस्तेर्भूरिति भ्वादेशस्मृतेर्भावनाख्यक्रियासामान्यवाचित्वोपपत्तिः। ननु क्रियाशब्दो यथा तद्भूतानां क्रियार्थेन सामाम्नायः। आम्नायस्य क्रियार्थत्वात्तेभ्यः क्रिया प्रतीयते क्रियायां पुरुषश्रुतिः। प्रतिषेधेषु कर्मत्वात् क्रिया स्यात् क्रिया स्याद्धर्ममात्राणामित्यत्र भावनायां प्रयुज्यते तथा आकृतिस्तु क्रियार्थत्वात् क्रियाणामाश्रितत्वात्क्रियाया ह्यस्तिसम्बन्धः क्रियातो व्यपदिश्येरन् तस्य क्रियाग्रहणार्थोक्तं क्रियाभिधानमित्यत्र धात्वर्थे ऽपि तथा तुल्यत्वा।क्रिययोर्न क्रियार्थानां संस्कारे तु क्रियान्तरमित्यत्रोभयोः कर्मशब्दश्च यथा फलस्य कर्मनिष्पत्तेः भावार्थाः कर्मशब्दास्तद्भेदात्कर्मणो ऽभ्यासः संख्यायाः कर्मभेदः स्यात् फलश्रुतेस्तु कर्म स्यात् फलस्य कर्मयोगित्वात् समेषु कर्मयुक्तं स्यात्संस्कारश्चाप्रकरणे कर्मशब्दत्वात्कर्मणः श्रुतिमूलत्वात् एतेषां कर्मसम्बन्धात्केवले कर्मशेषः स्यात्कर्माण्यपि जैमिनिः कर्तृगुणेषु कर्मसमवायात् अचोदितं कर्म भेदात् कर्मणो चोदितत्वात् कर्मणो व्यवस्था स्यात् द्रव्याणां कर्मसंयोगे कर्मतो ह्यभिसम्बन्धः तस्मात्कर्मापदेशः स्यात् । अपि तु कर्मशब्दः स्यात् ॥ कर्मणः पृष्ठशब्दः स्याद्धविर्भेदात्कर्मणो ऽभ्यास इत्यत्र धात्वर्थेषु प्रयुज्यते तथा कर्मैके तत्र दर्शनादित्यत्र तच्छब्दपरामृष्टः कर्मविषयः कर्मशब्दः कर्मणः सम्बन्धात् शब्दान्तरे कर्मभेदस्तत्वुत्सर्गे कर्माणीत्यत्र भावनायामपि एकस्यैवमित्यत्र चैवं शब्देनानुकृष्टः कर्मशब्दः फलं वा कर्मसन्निधावविभागात्तु कर्मणः कर्मधर्मः प्रकरणादित्यत्र चोभयोस्तेनैव व्यतिकरदर्शनाद्धात्वर्थभावनयोरभेदो ऽध्यवसीयते इत्याशङ्क्याह * शास्त्रेति * भावनावाचिनः क्रियाशब्दस्य धात्वर्थवाचिनश्च कर्मशब्दस्य लक्षणयेतरत्र प्रयोगोपपत्तिरित्याशयः । भावनाधात्वर्थस्वरूपवाचिनामपदाभावाच्च लाक्षणिको ऽपि प्रयोगो न दोषायेति न स्वरूपाभिधानेनेत्यनेन सूचितम। एतदेव प्रश्नपूर्वकमुपपादयति * कुत इति * श्लोकं व्याचष्टे * भावनाशब्दो हीति * एकस्मिन् क्षणे भावनायाः समस्तो-

पसंहृतरूपाप्रतीतेः । कथं निष्पन्नरूपतेत्याशङ्क्य वस्तुतो निष्पन्नरूपत्वे ऽपि नामपदसामर्थ्यात् सत्त्वस्य द्रव्यस्य यदेकत्रोपसंहृतत्वं रूपं तदापन्नामारोपितसिद्धरूपामित्युक्तं कथं नामपदसामर्थ्याद् द्रव्यरूपत्वारोप इत्याशङ्क्य नामपदोक्तो लिङ्गादियोगः कारणत्वेनोक्तः द्रव्यधर्मलिङ्गादियोगात् भास्वरत्वादिनेव शुक्तौ रजतत्वारोपो युक्त इत्याशयः । न केवलं नामपदेनाख्यातसदृशी भावना नोच्यते किं तु करोत्यादिधातुनापी त्याह * तथेति * अनन्यशब्दवाच्यत्वोपपादनस्यासाधारण्येनाख्यातस्य भावनार्थत्वसिद्धिप्रयोजनत्वं सूचयितुम् उपसंहरति * इतीति* नन्वाख्यातप्रत्ययस्य भावनार्थत्वे ऽपि स्वर्गस्य द्वितीयाभावेन भाव्यत्वाप्रतीतेः स्वर्गकामपदरूपसम्बन्धात् स्वर्गं भावयेदिति ब्रूयुरिति भाष्यमयुक्तमित्याशङ्क्य स्वर्गस्य भाव्यांशनिवेशमुपपादयितुमुपक्रमते * सा त्विति * साध्यत्वान्वयात् प्रागंशान्तरान्वये भावनास्वरूपस्य सङ्कल्पाख्येच्छाविशेषसाध्यत्वेन यागादेस्तत्साधनत्वायोगात्तत्सिद्ध्यर्थं साध्यनिष्ठत्वाभावे भावनात्वस्यैव बाधापत्तेः साध्यांशस्य प्राधान्यात् साधनेतिकर्त्तव्यतांशवच्चापेक्षान्तराधीनत्वाभावात्प्राथम्यमुक्तम् । नन्वेकप्रत्ययोपादानात् भावनामात्रस्य विधेयत्वावगतेः साध्याद्यन्वयः प्रतीतो ऽपि विध्यसंस्पर्शादविवक्षितः स्यादित्याशङ्क्याह * तत्रेति * उपसर्गे घोः किरिति विपूर्वस्य दधातेः किप्रत्यये कृते विधिशब्दव्युत्पत्तेः कृदन्तत्वाद्भावप्रत्ययेन विधिसम्बन्धाभिधानम् । नन्वेवमप्येकपदोपादानेन प्रत्यासत्तेर्धात्वर्थस्यैव भाव्यत्वं कस्मान्न भवतीत्याशङ्क्याह * विधिस्त्विति * कमियोगादपि स्वर्गस्य साध्यत्वावगतिर्न च पुरुषार्थ इत्यनेनोक्ता ।

यस्य येनार्थसम्बन्धो दूरस्थस्यापि तेन सः ।
अर्थतो ह्यसमर्थानामानन्तर्यमकारणम् ॥

इति श्लोको ऽपि चाम्नानसामर्थ्याच्चोदनार्थेन गम्येतार्थानाम्
ह्यर्थवत्त्वेन वचनानि प्रतीयन्ते ऽर्थतो ह्यसमर्थानामानन्तर्ये ऽप्यस-
म्बन्धः तस्माच्छ्रुत्येकदेशः स इति विश्वजिदधिकरणसिद्धान्तसूत्र-
गतस्यार्थानां ह्यर्थवत्त्वेनेत्याद्यवयवस्य योग्यतानुरोधेन व्यवहितान्व-
यप्रतिपादनपरतया व्याख्यानात्तत्रैव पूर्वाचार्यैर्वक्ष्यतइत्यौचित्यालो-
चनया प्रतिभाति पदश्रुत्या धात्वर्थस्य साध्यत्वावगमे ऽप्येकाभिधा-
नश्रुत्या पुरुषार्थसाध्यत्वावगमाद् बाध इति सकलस्य तात्पर्यं, यद्वा
विरोध एव नास्तीत्याह * किं चेति * श्लोकं व्याचष्टे * सम्ब-
३३५।४ न्धेति * एवं भावनाया भाव्यापेक्षायां धात्वर्थस्य भाव्यत्वसम्भवे

ऽपि विध्यन्वयबलात् पुरुषार्थस्य भाव्यतोक्ता अधुना इच्छायोनि-
त्वेन भावनायाः समीहितभाव्यनिष्ठत्वावधारणात् भावनास्वरूपा-
लोचनयैव पुरुषार्थस्य भाव्यतामाह * किं चेति * श्लोकं व्या-
चष्टे * यत्र हीति * ननु भावनास्वरूपालोचनयैव समीहितसा-
ध्यत्वावगमे स्वर्गकामादिपदं व्यर्थं स्यादित्याशङ्क्याह * तत्रेति *
नन्वेवमपि स्वर्गादिपुरुषार्थविशेषलाभस्य शास्त्राधीनत्वात् सर्वथा
साध्यांशनिवेशस्य विधिविषयत्वनिरासो न युक्त इत्याशङ्क्याह
* तदपि चेति * साध्यशब्दस्य इष्टतमत्वलक्षणकर्मवाचिकृत्यप्र-
त्ययान्तत्वेन साधयितुमिष्टमित्येवमर्थत्वात् स्वर्गादेश्चेष्टतमत्वस्य
स्वसम्वेद्यत्वेन शास्त्रानधीनत्वान्न साध्यत्वेन विशेषः शास्त्रादपेक्ष्यते
अपि तु स्वर्गादीनां साध्यानां मध्ये ऽस्या भावनायाः को विषय इत्येवं
विधेयभावनाविषयत्वेनेत्यर्थः। साध्यांशस्य विधेयत्वनिरासप्रयोज-
नमुपसंहरति *ततश्चेति*एवकारो धात्वर्थनिवृत्त्यर्थः अश्रुतपश्वादि-
निवृत्त्यर्थः कृतास्पदशब्दः कृतं कमिपदेनास्पदं साध्यांशनिवेशार्हत्वरू-
पं यस्येत्यर्थः।ननु स्वर्गादेः साध्यस्याशास्त्रीयत्वेन सन्निकर्षविप्रकर्षा-
नपेक्षत्वे ऽपि भावनाविशेषान्वयस्य शास्त्रीयत्वेन तदपेक्षत्वात्सन्नि-
कृष्टेन धात्वर्थस्य भावनान्वयेन बाधः स्यादित्याशङ्क्याह * धात्व-
र्थेति * धात्वर्थस्यायोग्यत्वेन साध्यांशनिवेशितयानपेक्षितत्वान्ना-
न्वयः सम्भवतीत्याशयः । न केवलमनपेक्षितत्वाद्धात्वर्थस्य सा-
ध्यांशेन नान्वयः किं तु विधिश्रुतिबाधापत्तेरपीत्याह * विधीति *
धातुश्रुतेः प्रत्यासत्तिमात्रबाधात्तरामित्युक्तं न केवलं स्वर्गादेरिष्ट-
तमत्वाद्भाव्यत्वं किं तु भवितृतयोपादानादपीत्याह * किं चेति *
ननु धात्वर्थस्यापि निष्पाद्यत्वाद्भवितृतास्तीत्याशङ्क्याह * न चेति*
अशाब्दं भवितृत्वं शाब्दे व्यवहारे ऽनुपयोगीति भावः। स्वर्गादेः कथं
भवितृतयोपादानमित्याशङ्क्याह * स्वर्गादीनां त्विति * एतदेव प्र-
श्नपूर्वकमुपपादयति * कुत इति * भवेदेतदित्येवंरूपस्यैवाशयस्ये- ३५४।१
च्छात्वादिच्छाविषयत्वोपपादनादेवान्यथानुपपत्त्या भवितृत्वावग-
तिरिति भावः। स्वर्गाख्यदेशविशेषस्य सिद्धत्वात् भवितृत्वाभावमा-
शङ्क्य स्वसम्बन्धित्वेन भवितृत्वं भेदशब्देनोक्तं भवितृतयोपादानस्य
भाव्यंशान्वयोपयोगित्वे भावनापेक्षाकारणमाह * तेनेति* नन्वेवम-
प्येकशब्दोपात्तस्य धात्वर्थस्य यागादिनेति भाष्येण पश्चादन्वयाभि-
धानं न युक्तमित्याशङ्क्याह * तत इति* धात्वर्थस्य करणांशे निवे-
शाभिधानाद्भावनास्वरूपस्य च निर्ज्ञातसङ्कल्पाख्येच्छाविशेषकरण-
कत्वेन करणानाकाङ्क्षत्वात्फलान्वितरूपस्य करणाकाङ्क्षयाः फला-

न्वयोत्तरकालं प्रवृत्तेर्युक्तं पश्चाद्धात्वर्थान्वयाभिधानम् इत्याशयः। नन्वेवमपि नामार्थस्य सिद्धत्वेन योग्यत्वात्करणांशान्वये वाच्ये धात्वर्थस्यासिद्धत्वेनायोग्यत्वात्करणांशान्वयाभिधानमयुक्तमित्याशङ्क्याह * तत्रेति * आदिशब्देन नामार्थस्य करणांशानिवेशहेतुर्विप्रकर्षो ऽभिप्रेतः। ननु सन्निधिवद्योग्यत्वस्याप्यन्वयहेतुत्वान्नामार्थस्य सिद्धत्वेन योग्यत्वात् करणांशनिवेशो युक्तो न धात्वर्थस्यासिद्धत्वेनायोग्यत्वादित्याशङ्क्य प्रमाणान्तराच्चेत्युक्तं सिद्धस्यापि मृदादेः पटादावयोग्यत्वेन सिद्धत्वमात्राद्योग्यतानवगतेरदृष्टार्थेषु च कार्यगम्यविशेषयोग्यत्वस्य प्रमाणान्तरेण ज्ञातुमशक्यत्वात् सामान्यतश्च धात्वर्थस्यापि भोजनादेस्तृप्त्यादिफलसाधनत्वदर्शनेन ज्ञातुं शक्यत्वान्नायोग्यत्वेन धात्वर्थस्य करणांशात्प्रच्युतिर्युक्तेत्याशयः। न च साध्यांशवत्करणांशनिवेशे विधिविरोधो ऽस्तीति विध्यविरोधाच्चेत्यनेनोक्तं ततश्चायोग्यत्वविरोधलक्षणस्य साध्यांशे धात्वर्थातिक्रमकारणद्वयस्यात्राभावात् यागेनेत्येवमन्वयो विज्ञायतइत्यर्थः। प्रत्युत नामार्थस्यैव धात्वर्थनिरपेक्षस्य क्व चित्करणत्वानुपलब्धेरयोग्यतातिक्रमणकारणमस्तीति सर्वेत्यनेनोक्तम्। यत्त्वनिष्पन्नत्वेनायोग्यत्वं पूर्वपक्षिणोक्तं तन्निरस्यति * यद्यपि चेति * नन्वेवं सति स्वनिष्पत्त्यपेक्षणाद्विलम्बः स्यादित्याशङ्क्य नामार्थस्यापि नित्यसिद्ध्यभावात् साम्यमाह * सर्वमेव चेति* न च प्राक्सिद्धस्यैव शास्त्रेण करणत्वं वाच्यमिति नियमे हेतुरस्तीत्याह * न चेति * किं चातीतस्यापि ग्रहोपसर्गादेः शुभाशुभोत्पत्तौ वर्त्तमानस्य च ज्ञानस्यार्थप्रकाशे भविष्यन्त्याश्च वृष्टेर्मत्स्यविकारहेतुत्वदर्शनान्न प्रागसिद्धिमात्रेण साधनांशनिवेशायोग्यतेत्याह * प्रमाणेति* उपसंहरति* तस्मादिति * यस्य चेति भाष्यं सङ्क्षेपेण व्याचष्टे * तच्चेति * यदा च यागादिधात्वर्थरूपकर्मवाचिभ्यो धातुशब्देभ्यो ऽपूर्वप्रतीतिस्तदा प्रयोजनवाच्यर्थशब्दाभ्युपगमेन प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत इति स्मृत्यनुसाराद्धातोरपि भावार्थत्वोपपत्तेः सामानाधिकरण्येन व्याख्यासम्भवात् नावश्यं प्रत्ययांशेन भावार्थाः धात्वंशेन च कर्मशब्दाः पदरूपाः शब्दा इत्येवं व्याख्येयमित्याह * ततश्चेति * ननु यदि भावनाया भाव्यनिष्ठत्वादीप्सिततमस्य च कर्मणो भाव्यत्वादनीप्सितधात्वर्थातिक्रमेणेप्सिततमस्य स्वर्गादेर्भावनाकर्मत्वं धात्वर्थस्य च भाव्यान्वितभावनारूपे करणत्वं ततो ऽकर्मकेषु धातुषु कर्माभावाद्भावना न स्याद्भावनाभ्युपगमे वा तेषामपि सकर्मकत्वापत्तिरित्याशङ्कते * ननु चेति * भावनावगतिहेतुत्वाद्वा सकर्मकधातु-

थुक्तमेव सर्वमाख्यातं प्राप्नोतीत्यर्थादुक्तं शङ्काभिप्रायं व्याचष्टे * तथा हीति * येन कारणेनेप्सिततमैः स्वर्गादिभिः पदार्थैर्भावनायाः किमित्यंशो ऽवरुध्यते धात्वर्थश्चेप्सिततमभावावरुद्धकिमित्यंशभावनायोगी तेन कारणेन न कश्चिद्धातुः अकर्मकः स्यादकर्मको वा यः कश्चिद्धातुः स सर्वो न भावनायोगी स्यादिति द्वेधा योज्यम्। द्वेधा श्लोकं व्याचष्टे * यदि वेति * भावनाकर्मणैव धातोः सकर्मकत्वे स्यादथ दोषः न त्वेतदस्ति धात्वर्थसाध्यकर्मनिबन्धनत्वाद्धातोः सकर्मकत्वस्येति परिहरति * नैष दोष इति * धात्वर्थसाध्यस्य कर्मणो ऽकर्मकेष्वभावान्न सर्वेषां सकर्मकत्वापत्तिरिति पूर्वार्द्धेनाद्यशङ्कापरिहारः भावनानिबन्धनस्य कर्मणः सर्वत्र भावाद्वाकर्मकेभ्य भावनानुपपत्तिरित्युत्तरार्द्धेन द्वितीतीयशङ्काभिप्रायपरिहारः धात्वर्थभावनाकर्मणोरभेदे भावाभावव्यवस्थानुपपत्तेस्तत्सिद्धये ऽन्यत्वाभिधानं धात्वर्थसाध्यमिति वाच्ये भावनाकर्मणो व्यवहितासिद्धेर्धात्वर्थकर्मणो ऽनन्तरसिद्धत्वेनान्यत्वोपपादनार्थम् * प्राप्यमित्युक्तम् * कर्मद्वयस्याधिष्ठानान्यत्वनियमाभावे ऽपि यदेव धात्वर्थं प्रति कर्मत्वं तदेव भावनां प्रति न भवतीति कर्मत्वरूपान्यतोक्ता यद्धि यथाकथञ्चिदपि धात्वर्थसिद्धौ सत्यामनन्तरं नियमेनोत्पद्यते तद्धात्वर्थस्वरूपप्रयुक्तत्वाद्धात्वर्थकर्म यत्त्वन्यप्रेरितेन पुंसानुष्ठितकर्मणि कदा चिदुत्पद्यते कुतश्चिद्वाकारणान्न कदा चिदुत्पद्यते तन्नियोगप्रयुक्तत्वान्नियोगस्य च भावनाविषयत्वात् भावनाकर्म। उदाहरणनिष्ठं श्लोकं व्याचष्टे * ओदनमिति * पाकसमाप्त्यनन्तरमेवौदनाख्यं कर्मोत्पद्यते गमनसमाप्त्यनन्तरं च ग्रामप्राप्त्याख्यं नान्यत्किं चिदपेक्षितमिति द्योतनायापवर्गशब्दः अधिष्ठानान्यत्वनियमो ऽनेनोक्त इति शङ्कानिवृत्त्यर्थं तत्रेत्याद्युक्तं धात्वर्थसमाप्त्यनन्तरं नियमेनोत्पद्यमानत्वादोदनस्य धात्वर्थकर्मत्वे ऽप्युद्देश्यत्वलक्षणेप्सिततमत्वस्य प्रयत्नाख्यभावनैकगोचरत्वादोदनमात्रोद्देशेन यदा प्रवर्त्तते तदैकस्यैवोभे प्रति कर्मता यदा त्वोदनादिकर्मविशिष्टेन धात्वर्थेनावच्छिन्ना भावनान्यद्वेतनलाभादीप्सितममुद्दिश्य प्रवर्त्तेत तदा कर्माधिष्ठानमपि भिद्यतइत्याशयः ननूभयनिष्पत्त्युत्तरकालभाविना वेतनलाभादेः कथं निष्कृष्य भावनाकर्मत्वावधारणेत्याशङ्क्याह * ततश्चेति * विप्रकर्षार्थः परशब्दः। धात्वर्थाद्विप्रकृष्टकालत्वेन धात्वर्थान्तरैश्च व्यवधानेन पाकादिधात्वर्थकर्मत्वावधारणाशक्तेर्भावनाकर्मत्वावधारणेत्युक्ते ननु भावनाकर्मत्वावधारणाप्यस्मादेव हेतुद्वयादशक्येत्याशङ्क्य तदवा-

३५५।१

प्य * मात्रत्वेनेत्युक्तम् * धात्वर्थफलस्य स्वरूपप्रयुक्तत्वात् स्वरूपव्यवधाने न शक्यो जन्यजनकभावो ऽवसातुं भावनाफलस्य तु नियोगप्रयुक्तत्वात्तस्य च लोके नियोक्तू राजादेः सन्तोषादिपूर्वकफलदानप्रवृत्त्या व्यवधानदर्शनात् वेदे ऽपि योगसिद्ध्यधिकरणन्यायेनानन्तर्यनियमाभावादनन्तरजन्यत्वानपेक्षभावनाव्याप्यमात्रत्वेन नियोगवशाद् गम्यमानत्वात् भावनाकर्मत्वावधारणेत्याशयः । तस्य चाकर्मकधातुयुक्तेष्वप्याख्यातेषु भावाद्भावनावगतिः सम्भवतीति सर्वत्रेत्यनेन सूचितम् । नन्वकर्मकेषु धात्वर्थकर्मभावे ऽपि भावनाकर्माभ्युपगमे स्वास्थ्यं शयीतेति द्वितीया कस्मान्न प्रयुज्यतइत्याशङ्क्याह * तच्चेति * भावनाया भाव्यनिष्ठत्वाद्भवितुरेव भाव्यत्वात् द्वितीयायाश्च प्राधान्यापरपर्यायेप्सिततमत्वमात्रवाचित्वेन भवितृत्वानभिधायित्वादेवं कामशब्दात्विदं भवेदिति भवितृत्वप्रतीतेस्तेनैव भावनाकर्मत्वप्रतीतिः । अग्निमादधीतेत्यादौ तु भावनाकर्मत्वान्यथानुपपत्त्या भवितृत्वकल्पनया क्लेशेन भावनाकर्मत्वनिर्वाह इत्यर्थः । धात्वर्थभावनाकर्मणोरन्यत्वाभिधानस्याशङ्कानिरासप्रयोजनत्वं पूर्वसूचितं प्रकटयितुमाह * सत्यपीति * प्रकटयति * तेनेति * नन्वग्निमादधीतेत्यादौ द्वितीयानिर्दिष्टस्यैव प्रायेण भावनाकर्मत्वदर्शनादेवं कामशब्दहेतुकत्वस्य प्रायिकत्वाभिधानमयुक्तं स्यादित्याशङ्क्याह * यजेरपि त्विति * विष्णुं यजतीत्यादौ द्वितीयानिर्दिष्टामपि देवतां कामशब्दोपबन्धाभावाद्भावनाकर्मत्वेन त्यक्त्वा कामशब्दोपबद्धस्य स्वर्गादेरेव भावनाकर्मत्वाश्रयणाद्युक्ता कामशब्दोपबन्धहेतुकत्वस्य प्रायिकतेत्याशयः । द्वितीयोक्तस्य कर्मत्वस्य निर्विशेषत्वाशङ्कानिरासार्थं यजिधात्वर्थकर्मतोक्ता यागे ऽपि देवतायाः स्वरूपेणासमवायात् कर्मत्वायोगमाशङ्क्यानभिमतमपि पूज्यत्वं त्यज्यमानद्रव्योद्देश्यत्वलक्षणत्वाद्देवतात्वस्य त्यज्यमानद्रव्योद्देश्यस्य च गुर्वादेर्लोके पूज्यत्वदर्शनादुपचारेणोक्तं शङ्कानिरासमुपसंहरति * तस्मादिति * नन्वेवमपि भावनाकर्मणैव तद्विशेषणभूतस्यासनशयनादेरपि धात्वर्थस्य सकर्मकत्वे सकर्मकाकर्मकविभागो न युज्यतइत्याशङ्कते * कस्तर्हीति * भावनाविशेषणत्वसाम्ये ऽपि विभागहेतुमाह * उच्यतइति व्यवहितस्याप्यङ्कुरादिरूपतया बीजादिपरिणतस्य बीजावापादिधात्वर्थकर्मत्वदर्शनात् साक्षाच्छब्देन क्वचिन्नैरन्तर्यं क्वचिन्नियतरूपत्वमभिप्रेतं यदुप्तं बीजं तदेवाङ्कुररूपेण परिणतमिति नियतरूपेण प्रतीतेः । पारम्पर्यशब्देन साक्षात् शब्दोक्तनैरन्तर्याभाववाचिना तदुक्तस्यैव नियतरूपत्वस्याव्यभिचारशब्दोक्त-

स्य च नियमस्याभाव उपलक्षितः । भावनाकर्माभिधानस्य धात्वर्थो-
कर्मकत्वोपपादने तात्पर्यं सूचयितुं व्युत्क्रमेण श्लोकं व्याचष्टे *
आसनेति * श्रान्तस्यासीनस्य सुखीभावाच्छयानस्य स्वास्थ्याभावा-
द्व्यभिचारोपलब्धेः कदा चित्प्रबुद्धस्य चिरेणान्नपचनादिना धातु-
साम्यलक्षणस्वास्थ्यासद्भावेऽप्यानन्तर्याभावाच्छयानस्यासीनस्य चै-
तत्फलमिति नियतरूपानिरूपणाद्वा साक्षादनुपपत्तेर्धात्वर्थकर्मत्वा-
योगादास्यादेरकर्मत्वं पच्यादीनां तु धात्वर्थानां विक्लिद्यता त-
ण्डुलादिना तच्छब्देन परामृष्टगमिधात्वर्थलक्षितं गन्तृसंयुज्यमानेन
च ग्रामादिना साक्षादानन्तर्येणेदं तदिति वा नियतरूपतया धात्व-
र्थसम्बन्धिनौदनरूपापत्त्या प्राप्यमाणत्वेन वा कर्मत्वेन कर्मणा
व्यभिचाराभावात्पच्यादीनां धातूनां सकर्मकत्वमिति पचिगम्या-
दीनामिति धात्वर्थपरतया स्वरूपपरतया चावर्त्त्य योज्यम् । साध्यसा-
धनान्वयाभिधानमात्रेण सूत्रव्याख्यानसिद्धेः । किं केन कथमित्या-
काङ्क्षात्रयाभिधानमनर्थकमित्याशङ्क्याह * सेयमिति * कथं यथा
सन्निकर्षं शास्त्रानुसारेण कल्प्यते कथं वा तदभावाद्यथा कथं चि-
दुपस्थाप्यमानेत्यपेक्षायां * श्रुत्यादीत्युक्तम् * अतिदेशस्योपकारद्वार-
त्वाद् * अत्यन्तेत्युक्तम् * भावनायास्त्र्यंशापेक्षत्वेऽपि स्ववाक्योपात्त- ३५६।१
साधनमात्रान्वये विधिपर्यवसानभ्रान्तिं निवर्त्तयितुमाह * तत इति *
ननु विशेषणविधिं विना विशिष्टविधिर्न सम्भवतीत्याह * तद्विधा-
नाच्चेति * तस्मादित्युपसंहारभाष्यमधिकरणार्थोपसंहारार्थमिति
शङ्कां निवर्त्तयितुं सूत्रार्थमात्रोपसंहारार्थत्वेन व्याचष्टे * इतीति *
कर्मशब्दत्वभावार्थत्वयोरेकैकेनाख्यातोपलक्षणसिद्धेरुभयोपादानान-
र्थक्यमथेति भाष्येणाशङ्क्योच्यतइत्यनेन भावार्थत्वविशेषणप्रयो-
जनमुक्तं तत्र श्येनादिशब्दानां कर्मनामधेयत्वस्य यजिसामाना-
धिकरण्याधीनत्वाद्यागादिस्वतन्त्रकर्मशब्दत्यागेनोदाहरणमयुक्तमि-
त्याशङ्क्याह * भवन्तीति * ननु श्येनादिशब्दवद्यागा-
दिशब्दानामपि धात्वर्थाख्यकर्मवाचित्वाद्भावार्थता नास्तीत्याशङ्क्याह
* यागादयो हीति * धातोराख्यातप्रत्ययोपात्तभावनोपश्लिष्टस्वा-
र्थवाचित्वोपलम्भादिहापि भावनोपश्लिष्टस्वार्थवाचित्वं कथं नानु-
मीयतइत्याशयः । कर्मशब्दत्वविशेषणप्रयोजनाभिधानार्थं केचिदि-
ति भाष्यं तत्रोदाहरणमाक्षिपति * केचिदिति * ननु णिजन्ता-
द्भवतेरच्प्रत्ययोत्पादनेन भावनावाचितया भावशब्दस्य व्युत्पादित-
त्वात्कथमनुदाहरणतेत्याशङ्क्याह * तत्रेति * भवनाख्यप्रयोज्य-
व्यापारविशिष्टप्रयोजकव्यापारवाचिभावशब्दार्थैकदेशप्रयोज्यव्यापा-

रवाचित्वात् लक्षणयेतरयोरपि भावार्थतोपपत्स्यतइति परिहरति * तावपि त्विति * यदा तु भावनाप्रयोजनत्वाभिप्रायो भावार्थशब्दो व्याख्यायते तदा भावनैकदेशभूतभवनवाचित्वेनैषां भावनाप्रयोजनत्वाद्युक्तैव भावार्थतेति परिहारान्तरमाह * अथ वेति * ननु भावादिशब्दानां लक्षणया भावनाप्रयोजनत्वाद्वा भावार्थत्वे कर्माख्यानुष्ठेयव्यापारवाचित्वेन कर्मशब्दत्वान्नानेन विशेषणेन व्यावृत्तिरित्याशङ्कते * कथं पुनरिति * क्रियतइत्यस्मिन्नर्थे करोतेरौणादिके मनिन्प्रत्ययस्मृतेः । कर्मशब्दस्यानुष्ठेयव्यापारवाचित्वाद्भावनादेश्चासिद्धकर्तृव्यापारत्वेनानुष्ठेयत्वात्तद्वाचिनो भवत्यादेर्धातोः कर्मशब्दत्वायोगादुत्तरवार्त्तिकानुसाराच्चानुष्ठेयव्यापारवाचिसर्वधात्वभिप्रायो धातुमात्रशब्दः धात्वर्थविशेषानवच्छिन्नायाः भावनाया अनुष्ठातुमशक्यत्वात्तद्वाचिनो धातोरपि कर्मशब्दत्वं नास्तीति परिहरति *निर्विशेषस्येति* ननु भवनाख्यधात्वर्थविशेषावच्छिन्नाया भावनायास्तर्ह्यनुष्ठेयत्वात् भावादिशब्दानां कर्मशब्दतोपपत्स्यतइत्याशङ्क्याह * अत इति * भवनस्यासिद्धकर्तृव्यापारत्वात् भावनाविशेषणत्वं नास्तीत्याशयः । किं पुनरित्यादिभाष्येणोदाहरणं प्रश्नपूर्वकं विचारस्वरूपं स्पष्टयित्वा स्थितइत्युक्तम् । तच्छङ्कोत्तरत्वेनावतारयति * यदीति * नन्वेवं सति नामधेयचिन्तोपोद्घातत्वेन
३५७।१ ततः प्रागेवेदं कार्यमिति शङ्कते * कस्मादिति*सत्यप्युपोद्घातत्वेन भेदचिन्तयेव नामधेयचिन्तयापि सम्बन्धे ऽर्थचिन्तात्मकत्वात्प्रमाणलक्षणासङ्गतेस्तत्र न कृतमिति परिहरति * प्रमाणेति * एवं तर्ह्याख्यातपदस्य फलपदान्वयान्नामपदस्य तदन्वये ऽस्मिन्नधिकरणे निरस्ते तदेतरत्तदर्थमित्याख्यातान्वयप्राप्तौ गुणविधित्वेनाख्यातान्वयो नामधेयत्वेन वेति इहापि प्रसङ्गात् सङ्गत्युपपत्तेः । कस्मान्नामधेयचिन्तापीहैव न कृतेति शङ्कते * अथेति * प्रासङ्गिकत्वेनानन्तरसङ्गतौ सम्भवन्त्यामपि लक्षणासङ्गतेर्नेह कृतेति परिहरति * भेदेति * शङ्काद्वयनिरासमुपसंहरति * तस्मादिति * तथेत्यादिभाष्यं स्पष्टत्वादव्याख्याय न चेति भाष्यं स्वर्गं भावयेदिति फलान्वयस्य प्रागुक्तत्वात्किं केन कथमिति भाव्याद्याकाङ्क्षाया एवोपायस्योक्तत्वात्तद्विरुद्धपुरुषान्वयाभिधानादयुक्तमाशङ्क्य व्याचष्टे * न चेति * अर्थवाचिनः कामिपदस्य लक्षणया ऽर्थिशब्देनाभिधानात्तस्य चैकादशाद्यभाष्ये फलपरत्वस्य वक्ष्यमाणत्वादविरोध इति भावः । श्येनेनाभिचरन्निति व्यधिकरणविभक्तित्वलक्षणस्य विभक्तित्वस्य साध्यसाधनान्वयापादकत्वेन विपरीतसा-

धनत्वादहेतुत्वमाशङ्क्य वीत्युपसर्गौ विगमार्थौ विशेषार्थौ वेति द्वेधा व्याचष्टे * विभक्तित्वादिति * तस्मादित्युपसंहारभाष्यं फलस्य क्रियेति फलभावनान्वयोपक्रमान्न द्रव्यगुणशब्दाः फलान्वयद्वारापूर्वस्याक्षेपका इत्येवमर्थमिति सूचयन्व्याचष्टे * तस्मादिति * एनमेव सिद्धान्तं वृद्धवचनेन द्रढयति * आह चेति *

सर्वेषां भावो ऽर्थ इति चेत् ॥ २ ॥

नन्वाख्यातपदादेव भावनाप्रतीतेः। सर्वेषां भावनार्थत्वाभिधानमयुक्तमित्याशङ्क्याह * न तावदिति * अयमाशयः धात्वर्थस्य करणत्वं वक्तुं धातोः फलपदान्वयद्वारेणापूर्वाक्षेपकत्वं यदुक्तं तदाक्षेपायेदं सूत्रम्। न च भावनावाचिनः प्रत्ययस्य फलपदान्वयद्वारापूर्वाक्षेपकत्वं सिद्धान्तिनो ऽपीष्टं धातोरपि स्वतः प्रत्ययनिरपेक्षस्य भावनावाचित्वाभावेन फलपदान्वयायोगान्नापूर्वाक्षेपकत्वमिष्टं किं तु परतः प्रत्ययान्वयद्वाराभावनानुरञ्जकत्वलक्षणया भावार्थत्ववशात्तच्च नाम्नो ऽपि श्येनेन कुर्यादिति प्रत्ययान्वयेन भावार्थत्वोपपत्तेः सममिति श्लोकं व्याचष्टे *यदीति* भावनावचनस्यैवेत्येवकारेण कारणवाचिशब्दानपेक्षोक्ता भावनावाचित्वेन तु फलपदद्वारा प्रत्ययस्यापूर्वाक्षेकपतोभयवादिसमानत्वान्न विचार्यत्वेनेष्टेत्याशयः। नामपदस्यापीत्यपिशब्देन श्लोकस्थो वा शब्दार्थो ऽप्यर्थे व्याख्यातः।

येषामुत्पत्तौ स्वे प्रयोगे रूपोपलब्धिस्तानि नामानि तस्मात्तेभ्यः पराकाङ्क्षाभूतत्वात् स्वे-प्रयोगे ॥ ३ ॥

ननु भावार्थत्वाविशेषाद्धातुवन्नाम्नो ऽपि फलपदान्वयसम्भवान्नियमानुपपत्तौ शङ्कितायां नामाख्यातयोः स्वरूपकथनमसम्बद्धमित्याशङ्क्याह *यदुक्तमिति* अयमर्थः धात्वर्थानपेक्षस्य नामार्थस्य भावनानुरञ्जनाशक्तेर्न तावद्धातुतुल्यं भावार्थत्वं नाम्नो ऽस्ति तद- ३५८।१
भावे ऽपि दध्नेन्द्रियकामस्येत्यादौ नाम्नः फलपदान्वयदर्शनाद्यथाकथं चित्तु भावार्थत्वमात्रस्य फलपदान्वयोपयोगित्वमाशङ्कावाद्यभिमतमभ्युपगम्य धातुनाम्नोर्विशेषं वक्तुमेतत् सूत्रद्वयं तत्र यदैकस्मादिति भाष्येण सर्वेषां फलपदान्वये बह्वदृष्टकल्पनापत्तिरेकस्य तु तदन्वये ऽल्पकल्पनेति यदुक्तं तत्रैकान्वये ऽपि नाम्नो ऽन्वयबहुकल्पना धातोस्त्वन्वये ऽल्पकल्पनेति विशेषः सार्द्धेन सूत्रे-

णोक्तः आश्रितत्वात्प्रयोगस्येति सूत्रावयवेन श्रुतिवाक्यकृतइति अयं च सिद्धसाध्यत्वकृतो विशेषो न श्रुतिवाक्यकृतविशेषवच्छब्द-मात्रनिमित्तः किं तु वास्तवो ऽपीति वस्तुधर्मेणेत्यनेनोक्तं कीदृशो ऽसौ विशेष इति प्रश्नपूर्वं विवरीतुमाह * कथमिति * प्रतिपदप-क्षारिष्टत्वोपपादनस्यानिष्टापत्त्यभिधानार्थत्वेन प्रस्तुतोपयोगं वक्तु-माह * कस्मादिति * कथं नाम्नः फलपदान्वये बह्वदृष्टप्रसङ्गापरि-हार इत्याशङ्क्याह * नाम्नश्चेति * ननु सिद्धरूपस्यापि नामार्थ-स्याश्रयत्वेन निष्पाद्यो धात्वर्थो दृष्टेनोपकरिष्यतीत्याशङ्क्याह * न हीति * विधीयमानस्य धात्वर्थस्य किं चित् समीहितं प्रति साध-नत्वं विना विधेरपर्यवसानान्नामार्थं प्रति साधनत्वायोगात्तादर्थ्ये-न विध्यनुपपत्तेरन्यार्थत्वेनैव विहितस्याश्रयत्वेन ग्रहणात् सत्यप्या-श्रयत्वे कश्चिददृष्टो नामार्थस्योपकारो धात्वर्थसाध्यो ऽस्मिन्पक्षे कल्प्यः स्यादित्याशयः । आश्रयत्वेन धात्वर्थं गृह्णन्नपि नामार्थः सा-धनत्वेन नापेक्षते येन नामार्थस्य फलान्वये धात्वर्थस्तस्य दृष्टेनोप-कुर्यादित्यर्थः । उच्चारणोत्पत्ताविति भाष्यावयवेनोत्पत्तिशब्दमुच्चा-रणार्थत्वेन व्याख्याय स्वे ऽर्थइत्यनेन प्रयोगशब्दो वाच्यार्थत्वेन व्याख्यातः । तत्र प्रयुज्यमानशब्दात्कर्मव्युत्पत्तिरुक्तेत्याभाति तत्स्वा-र्थस्योच्चार्यत्वाख्यप्रयोज्यत्वाभावादयुक्तमाशङ्क्याधिकरणव्युत्पत्ति-माह * प्रयुज्यतइति * प्रयुज्यमानशब्दविषयभूते ऽर्थे रूपोपलब्धि-रिति व्याख्यानेन सूचिता प्रयुज्यमानशब्दविषयत्वाल्लक्षणयार्थस्य प्रयुज्यमानतोक्तेत्याशयः । सूत्रान्त्यप्रयोगशब्दवत् अयमप्युच्चार-णार्थतया प्रसिद्धः प्रयोगशब्दो वाच्यार्थतया कस्माद्व्याख्यायतइ-त्याशङ्क्य प्रयोगस्य सप्तम्या रूपोपलब्ध्या ऽऽधारत्वोक्तेर्वाच्याश्रितत्वा-च्च तस्या इत्याह * तदाधारैव हीति * उच्चारणे ऽपि निष्पाद्य-रूपोपलब्धेर्निष्पन्नरूपतेह विवक्षितेति निष्पन्नशब्देनोक्तं यत्सक्तादिति भाष्येण रूपोपलब्धिपदं स्थायिरूपाभिप्रायेणान्वयमुखेन व्याख्याय क्रियावैधर्म्याभिधानेन व्यतिरेकमुखेन व्याख्यातं तदुभयमपि ना-मार्थस्य साधनानपेक्षत्वाय निष्पन्नत्वस्य वक्तव्यत्वाद्धात्वर्थस्य साध-नापेक्षत्वायानिष्पन्नत्वस्य वक्तव्यत्वादयुक्तमाशङ्क्याह *अनुत्पन्नत्व-इति* निष्पन्नत्वे नामार्थस्य वक्तव्ये स्थायित्वप्रदर्शनमित्यर्थादुक्तं कर्म-नामधेयत्वेन नाम्नः फलपदान्वयस्यानाशङ्क्यत्वात्तन्निरासार्थसिद्धरू-पार्थत्वाभिधानानर्थक्यापत्तेः द्रव्यगुणशब्दत्वाभ्युपगमे ऽनाशङ्केति सूचयितुं द्रव्यगुणशब्दा इति व्याख्याते किमर्थं तर्हि नामानीत्युक्तम् इत्याशङ्क्य सत्त्वप्रधानानि नामानीति स्मृत्या सिद्धार्थत्वोपपादनार्थ-

स्वं पर्यायत्वाभिधानेन सूचितं, तत्स्पष्टत्वादव्याख्याय तस्मात्तेभ्यः पराकाङ्क्षेति सूत्रावयवव्याख्यानार्थं यत एषामिति भाष्यं सूत्रे नञ-भावादयुक्तमाशङ्क्याध्याहारार्थत्वेन व्याचष्टे * तेभ्य इति * स्व-यमन्यवाचित्वेन परशब्दं व्याख्याय प्रधानवाचित्वं भाष्योक्तं व्या-ख्यातुम् *निष्पाद्यत्वेन वेत्युक्तम्* निष्पाद्यत्वेन प्रधानस्य सतो या साधनाकाङ्क्षा सा न विद्यते निष्पाद्यत्वाभावादित्यर्थः । दूरवाचि-ना वा परशब्देनैव नञर्थो लभ्यतइत्यन्यथा व्याचष्टे * अथ वेति * भूतत्वादित्यादिसूत्रावयवं नैराकाङ्क्ष्योपपादनार्थत्वेन व्याचष्टे *कुत इति पौनरुक्त्यं परिहरति * स्वरूपेति *

येषा तूत्पत्तावर्थे स्वे प्रयोगो न विद्यते तान्याख्या-तानि तस्मात्तेभ्यः प्रतीयेताश्रितत्वात्प्रयोगस्य ॥४॥

आख्यातस्वरूपकथनस्य प्रयोजनमाह * आख्यातेति * श्लो- ३५९।२
कं व्याचष्टे * धात्वर्थस्तावदिति * व्यापारात्मकत्वाद्धात्वर्थस्य व्यापारस्य चानुपसंहृतरूपत्वाख्यानिष्पन्नरूपत्वात्स्वभावेनैव साध्या-त्मकतेत्याशयः । ननु नामधेयत्वे नाम्नो ऽपि साध्यार्थत्वान्निष्पन्नस्य चानुष्ठेयत्वाख्यसाध्यत्वायोगात्फलपदान्वयः प्रसज्येतेत्याशङ्कते *नन्विति * नामधेयत्वस्य धातुसामानाधिकरणाभिधानत्वात्फलप-दान्वये च सामानाधिकरण्याभावान्नामधेयत्वं न स्यादिति परिहरति * नेति * अन्योत्पादानुकूलार्थाभिधायित्वेन साध्यसाधनेतिकर्त्त-व्यताकाङ्क्षोत्थानसूचनार्थं ते भावशब्दा इति वक्तव्ये तान्याख्या-तानीत्यभिधानात् सूचितम् । परिहारान्तरमाह *अपि चेति* श्लो-कं व्याचष्टे * यद्यपीति * ननु सिद्धत्वरूपतयाभिधाने ऽपि व-स्तुतः साध्यत्वात् साधनाकाङ्क्षानुष्ठेयत्वनिर्वाहार्थं च फलाकाङ्-क्षा भविष्यतीत्याशङ्क्याह * अभिधानेति * यागादिशब्दोच्चारणे ऽपि साध्यत्वानुरक्तावाकाङ्क्षानुपलब्धेरभिधानकृतैवाकाङ्क्षेत्या-शयः । तस्मात्तेभ्यः प्रतीयेतेति तस्माच्छब्देन साध्यत्वोपपादित-साधनाकाङ्क्षावशान्नामार्थस्य धात्वर्थान्वये इष्टार्थत्वं हेतुत्वेन प-रामृष्टमिति सूचयितुमुपसंहरति * तस्मादिति * अनेन च भ-व्यार्थास्त इति भाष्यमपि तात्पर्यतो व्याख्यातम्। उच्चारणाख्यप्रयोग-काले स्वार्थे प्रयोगो न विद्यतइत्युक्ते प्रयोगकाले प्रयोगनिषेधायोगा-द्विशेषणभूते ऽर्थे निषेधावतारात्प्रयोगकाले ऽर्थो न विद्यतइत्यर्थप्र-

१ सामानाधिकरण्याधीनत्वादिति २ पु॰ पा॰ ।

तीतेः स्पष्टत्वात्तद्व्याख्यानार्थं भाष्यं न व्याख्यातम् । अदृष्टकल्पनाल्पत्वबहुत्वकृतेन विशेषेण धात्वर्थफलवत्त्वसिद्धेराश्रितत्वादिति हेत्वानर्थक्यमाशङ्क्य किं चेति भाष्येण हेत्वन्तरसमुच्चयार्थत्वेन व्याख्यातम् । पूर्वोक्ताद्विशेषादेतदुक्तस्य विशेषस्य विवेकमाह * किं चेति * एक पदोपादानाद्धात्वर्थस्य प्रत्यासत्तिलक्षणया श्रुत्या भावनान्वयः नामार्थस्य वाक्येनेत्यर्थः । धात्वर्थानपेक्षस्य नामार्थस्य भावनाननुरञ्जकत्वाद्वस्तुतोऽपि धात्वर्थस्यैव प्रत्यासत्तेर्न शब्दग्रहणाद्वास्तवत्वनिवृत्तिः । अत्र भाष्यकृतो तेषामाख्यातानां प्रयुज्यतेऽस्मिन्निति व्युत्पत्त्या प्रयोगशब्दवाच्यः प्रतिपाद्योऽर्थो धात्वर्थानुरक्तभावनाख्यः पुरुषेणाश्रित इति सूत्रावयवस्वरूपं व्याख्याय तदुपपादनार्थं पुरुषान्वितभावनाख्यातैरुच्यतइत्युक्तेन व्याख्यातेषु पुरुषानुपादानात्कथं तदन्वयावगतिरित्याशङ्क्य पुरुषस्याख्यातैर्भावनायां नियोगादर्थाक्षेपलभ्यत्वमुक्त्वा तथापि धात्वर्थस्य फलपदान्वयः कथमित्याशङ्क्यार्थाक्षिप्तस्य पुरुषस्य फलपदाद्विशेषप्रतीतेराख्यातोपात्तस्य धात्वर्थस्य भावनाद्वारा पुरुषान्वयः प्रतीयते न तु द्रव्यादेर्नामार्थस्येत्युक्ते तस्यापि भावनाद्वारान्वयो भविष्यतीति सर्वेषां भावोऽर्थ इति सूत्रोक्तं चोद्यमनुभाष्य श्रुतिवाक्यविशेषाभिधानेन परिहृतं तत्सङ्क्षेपतो व्याचष्टे * पुरुषेति * भावनायां पुरुषस्य नियोज्यत्वोपपादनार्थं तद्व्यापारतोक्ता धात्वर्थानवच्छिन्नभावनानुष्ठानाशक्तेस्तदुपश्लेषो भावनायाः पुरुषेणापेक्षितइत्युक्तम् । दर्शपूर्णमासाभ्यामिति नाम्नः फलपदान्वये दर्शकालः पौर्णमासकालश्चेति भाष्ये कालवाचित्वाभिधानान्नामधेयविचारेऽनुदाहृतत्त्वाद्धात्वर्थस्यापि फलान्वये गुणविधित्वाशङ्काप्रसक्तेस्तन्निरासार्थं दर्शपूर्णमासकालान्वितस्यैवाग्नेयादियागस्य विहितत्वात्तत्प्रख्यन्यायेन लक्षणाया यागनामधेयत्वाभिधायकं यदा यागेनेति भाष्यं स्पष्टत्वान्न व्याख्यातम् ।

॥ अथ अपूर्वस्यास्तिताधिकरणम् ॥ २ ॥

## चोदनापुनरारम्भः ॥ ५ ॥

कथं पुनरित्यादिभाष्येण शङ्कानिरासार्थत्वेनेतत्सूत्रमवतारितमिति दर्शयितुमाह * सूत्रसिद्धमिति * अपूर्वाभावे केभ्योऽपूर्वं प्रतीयते इति प्रतिपत्त्युपायविशेषविचारायोगात्तत्प्रतिपादनापेक्षायां सूत्रकृदाहेति भाष्यतात्पर्यमित्यर्थः चोदनेनेत्यपूर्वं ब्रूम इत्यादिभा-
२६०।१ ष्योक्तं सूत्रार्थं तात्पर्यतो व्याचष्टे * फलायेति * चतुर्थ्युक्तफलार्थत्वं तच्छब्देन परामृष्टं श्लोकं व्याचष्टे * वेदवाक्येति * वृत्त्यन्त-

रकरैरपूर्वाभावे ऽपि कर्मफलसम्बन्धोपपत्तेरपूर्वस्य निष्प्रमाणकत्वा-
द्भावार्थाधिकरणस्य च केभ्यः फलोत्पादावगतिरित्येतावति पर्यव-
सानोपपत्तेः सूत्रस्य चारम्भकं प्रवर्त्तकं वाक्यं चोदनेति चोदनास्व-
रूपकथनार्थतयापि व्याख्यातुं शक्यत्वान्नेदं सूत्रमपूर्वसद्भावाभिधा-
नार्थमित्युक्तं तद् दूषयितुमुपन्यस्यति * अत्रेति * केन चित्प्रमाणे-
नानवगतपूर्वकत्वादवयवार्थमनुगतमस्य नामेति बहुव्रीहिरुपहासार्थः
श्लोकं व्याचष्टे * वस्त्विति * प्रत्यक्षाप्रवृत्तिं तावदुपपादयति * त-
त्रेति * आदिशब्देन लोकसिद्धेन्द्रियविषयमात्रग्रहणम्। अनुमाना-
प्रवृत्तिमुपपादयति * नापीति * प्रत्यक्षसूत्रे सत्ता च नानुमानेन
कस्य चित्सम्प्रतीयतइत्यत्रोक्तं शब्दाप्रवृत्तिमुपपादयति * पदेति *
श्लोकं व्याचष्टे * आगमिकत्वमिति * उपमानाप्रवृत्तिमुपपादयति
* न चेति * प्रत्युतासत्त्वपचोपमानं प्रवर्त्तते इत्युपहासार्थमाह ३६।१५
* काममिति * अर्थापत्त्यप्रवृत्तिमुपपादयति * अर्थापत्त्यापीति *
सिद्धान्ताभिमतश्रुतार्थापत्तिनिरासार्थम् * फलेत्युक्तम् * श्लोकं
व्याचष्टे * दृष्टार्थापत्तिरिति * शब्दप्रामाण्यानादरेण दृष्टार्थाप-
त्त्यवतारात्तथा चेश्वरेच्छादेरपि वैचित्र्यहेतोः पराभिमतस्यापि श-
ब्देनोपादानम्। ननु श्रुतायाः फलयागादिसङ्गतेरपूर्वं विना ऽनुपपत्तेः
श्रुतार्थापत्तिर्निराकर्त्तुमशक्येत्याशङ्क्याह * श्रुतार्थापत्तिरिति * अ-
पूर्वं तु न कदा चित्फलसाधनत्वेन सम्भाव्यतइति व्यतिरिक्तोभि-[1]
धानात् सम्भवित्वाभिधानायान्यथानुपपत्तेः कथं चित्परिहारा-
सम्भवः दार्ढ्यवाचिना प्रत्यक्षशब्देनोक्तमिति न कथं चिदपीत्यनेन
व्याख्यातं।न केवलमन्यथानुपपत्तेः कथं चित्परिहारासम्भवादेव द्रव-
विषयत्वस्य सम्भवित्वं किं तु सामान्यतः प्राप्तत्वादपीत्यपि चेत्यनेनो-
क्तम्। द्रवेष्वप्यवदानप्रसक्तेरित्यर्थः। द्रवाख्यविशेषे ऽप्यवदेयसामान्य-
वृत्तेः श्रुतहान्यभावः सामान्येन च विशेषाक्षेपादश्रुतापत्त्यभावः।
सम्भाव्यमानस्याविरोधिनश्च श्रुतार्थापत्तिविषयत्वात् श्रुतार्थापत्ते-
रप्यपूर्वो न प्रवर्त्ततइति भावः। तत्रापूर्वाभावे ऽपि श्रुतसाध्यसा-
धनसम्बन्धानुपपत्तिपरिहारं कथं विनष्टं साधयतीत्यादिनाशङ्कापूर्व-
मुपपादयिष्यमाणमभिप्रेत्यापूर्वस्यासम्भावित्वं तावदाह * अपूर्वं त्वि-
ति * अनेनैव ग्रन्थेन पाक्षिकप्रसक्तेरपि निरस्तत्वात्परिशेषसिद्धिरू-
पा तावदर्थापत्तिरनाशङ्क्यैवेति यतो ऽन्येत्यनेनोक्तम्। ननु प्रसक्त्यभावे
ऽप्यन्यनिवृत्तिमात्रेण परिशेषः कस्मान्न सिद्ध्येदित्याशङ्क्याह * य-
दीति * श्लोकं व्याचष्टे * न हीति * श्रुतसाधनसम्बन्धविरो-

[1] व्यतिरेकाभिधानादिति २ पु० पा०।

धि चापूर्वमित्याह * अपि चेति * न च साध्यसाधनत्वाकाररहितं
३६२।२ तत्कल्पयितुं शक्यं प्रमाणाभावादित्याह * न चेति * कथं तर्हि
श्रुतसाध्यसाधनसम्बन्धसिद्धिरित्याशङ्क्याह * तेनेति * एतदे-
वाशङ्कापूर्वकमुपपादयति * कथमिति * न च स्थायित्वं फलसा-
धकत्वे प्रयोजकमाकाशादिष्वपि प्रसङ्गादित्याह * अपि चेति *
एतदेव विवृणोति * यदि चेति * ननु शास्त्रेण यागादेः फल-
साधनत्वावसायाद्विनष्टत्वेन च तस्य साक्षात् साधनत्वायोगात् स्था-
यिसम्बन्धिद्वारा साधनत्वसिद्धये ऽपूर्वकल्पनेति स्वयमेवाशङ्क्य
निरस्यति * अथेति * तदेव व्याचष्टे * यदीति * अतिक्रान्तो
ऽतीतो विनष्टो यागो यस्येति विग्रहः । नन्वात्मनः स्वरूपेणावैचि-
त्र्याद्यागादेश्चातिक्रान्तस्यासत्त्वेनावच्छेदकत्वायोगात् फलवैचित्र्य-
हेतुत्वं न स्यादित्याशङ्क्य यागादिविनाशस्य तर्हि प्रतियोगियागा-
दिनिरूपणाधीननिरूपणत्वादसत एव घटादेर्विनाशप्रतियोगित्वद-
र्शनात्तद्भेदापादितवैचित्र्यस्य फले ऽपि वैचित्र्यहेतुत्वोपपत्तेः स्थायि-
नः सम्बन्धिनश्च साधनत्वं भविष्यतीति पक्षान्तरमाह * यद्वेति *
श्लोकं व्याचष्टे * विनाशिनीति * ननु विनाशोत्तरकालीनस्यापि
फलस्य कथं तज्जन्यत्वावधारणेत्याशङ्क्य यच्च यत् प्रतीत्य प्रतिगम्य
प्राप्य यस्मिन्सतीत्युक्तम् ।ननु कर्मविनाशान्वितस्यात्मनः साधनत्वस्य
न चातिक्रान्तयागेभ्यः पुरुषेभ्यः फलोद्गतिरित्यादिना निषिध्यमा-
नत्वात् स्वतन्त्रस्याभावस्य क्वचित्साधनत्वादर्शनाच्चेह साधनत्वक-
ल्पनेति स्वयमेवाशङ्क्य निरस्यति * स्यादेतदिति * श्लोके यत् तु-
ष्ट्यादिफलोत्पत्तिनिमित्तस्य भोजनादेः क्रियात्वं धर्मो दृष्टस्तदतिक्र-
मस्योभयपक्षसाम्यात् तत्क्लृप्तत्वाविशेषेणाभावस्यैव तन्निमित्तत्व-
कल्पनोचितेत्यर्थः । विनष्टस्य कर्मणः साधनत्वायोगे कालान्तर-
भाविफलसाधनत्वस्यापूर्वकल्पकस्य शास्त्रार्थत्वानवधारणात्कथम-
३६३।१ पूर्वकल्पनेत्याह * किं चेति * श्लोकं व्याचष्टे * क्रियेति * न-
न्वनन्तरफलानुपलब्धेः शास्त्रप्रामाण्याच्चावश्यं फलोत्पत्त्यवसाया-
त्कालान्तरभाविफलसाधनत्वं भविष्यतीत्याशङ्कते * तत्रेति * अ-
नुष्ठानात्प्रागनन्तरानुत्पत्तेर्ज्ञातुमशक्यत्वादुत्तरकालं च शास्त्रव्या-
पाराच्छास्त्रान्तर्गतिर्नापूर्वस्य सम्भवतीति परिहरति * तदिति *
श्लोकं व्याचष्टे * न हीति * ननु योग्यत्वावधारणाधीनत्वाद्वा-
क्यार्थप्रतीतेरननुष्ठितस्य च योग्यतायाः प्रमातुमशक्यत्वात्कस्मान्ना-
नुष्ठानोत्तरकालं शास्त्रार्थावधारणेत्याशङ्क्य ज्ञाते वा वचनं न ह्यवि-
ज्ञान्विहितो ऽस्तीति तार्त्तीयसूत्रावयवेनानुष्ठानोत्तरकालं शास्त्रार्था-

अवधारणे सत्यन्योन्याश्रयापत्तिः सूचिता कर्मफलकालयोर्वियोगो
विप्रकर्षः प्राक्चापूर्वानपेक्षस्य कर्मणः साधनत्वे निश्चिते पश्चात्तदन्त-
र्भावना शास्त्रविरुद्धेति सूचयितुम् * यच्चेत्युक्तम् * वैगुण्यकल्पनया-
पि वानन्तरानुत्पत्तिसम्भवान्न शास्त्राविरुद्धार्थापूर्वकल्पना युक्तेत्या-
ह *अपि चेति* सर्वाङ्गप्रधानसाध्यत्वात्फलस्य कस्मिंश्चित् विगुणे
सति इतरसाद्गुण्ये ऽप्यनुत्पत्तिसम्भवं वक्तुं सर्वशब्दः।बहुपुरुषसा-
ध्यत्वाच्चैकाशक्तावपि वैगुण्यापत्तिः कर्तृष्विति बहुवचनेनोक्ता । स-
र्वेषु पदार्थेषु बहवः कर्त्तारस्तेषु मध्ये क्व चित्पदार्थे क्व चित्कर्त्तर्यशा-
क्तेरपरिहार्यत्वादित्यर्थः । श्लोकं व्याचष्टे * दृश्यतइति* प्रायेण ता-
वद्वैगुण्यं दृश्यते यत्रापि न दृश्यते तत्रापि शास्त्राविरोधात्तदेव क-
ल्पनीयमित्यर्थः । ननु स्वर्गनरकयोरामुष्मिकत्वेनानन्तर्यायोगात्प्राग-
प्यनुष्ठानादपूर्वद्वारैव तदुत्पत्त्यवधारणं भविष्यतीत्याशङ्क्याह * न
चेति * एतदेव प्रश्नपूर्वकमुपपादयति * कुत इति * निरति- ३६४।।
शयसुखदुःखात्मकयोस्तादृशसुखदुःखोपभोगयोग्ययोर्देशविशेषयोर्वा
स्वर्गनरकवाच्यत्वात्तयोश्चानेन शरीरेण प्राप्त्यसम्भवाच्चानन्तर्याप-
त्तिरित्याशङ्क्यालौकिकयोः सम्बन्धग्रहणासम्भवेन वाच्यत्वायोगा-
त्सूक्ष्माणि वासांसि स्वर्गः चन्दनं स्वर्ग इति च सुखहेतौ द्रव्ये स्व-
र्गशब्दप्रयोगेणाकृतिन्यायाद्विशेषणभूतस्य लौकिकस्य सुखस्य स्वर्ग-
शब्दवाच्यत्वावगतेर्दुःखहेतौ च दारिद्र्ये नरकापरपर्यायदुर्गतिश-
ब्दप्रयोगाद्विष्ठायां च दुःखहेतौ नरकशब्दप्रयोगदर्शनादाकृतिन्याये-
नैव लौकिकदुःखवाचित्वावगतेरानन्तर्योपपत्तिरिति सुखदुःखात्म-
कत्वेनेत्यनेनेन सूचितम् । श्लोकं व्याचष्टे * न हीति *ततश्च स्वर्ग-
नरकयोरप्यानन्तर्योपपत्तेर्न ग्रामादिभ्यो विशेषो ऽस्तीत्युपसंहरति*
इतीति * शास्त्रीयक्रियाजन्यत्वेनापूर्वस्य चेष्टत्वान्निषेधाधिकारे च
निषेध्यस्य हननादेर्लोकसिद्धत्वेनाशास्त्रीयत्वात् शास्त्रीयायाश्च त-
न्निवृत्तेः फलाभावेनापूर्वानपेक्षत्वान्न तत्कल्पना युक्तेत्याह * किं
चेति* श्लोकं व्याचष्टे * ब्राह्मण इति*एवं चापूर्वस्य श्रुतसाध्यसा-
धनसम्बन्धविरोधित्वाद्भिन्नस्यापि च कर्मणस्तत्सम्बन्धिनः पुरु-
षस्य वा विनाशस्यैव वा साधनत्वोपपत्तेः कालान्तरभाविफलत्वान-
वसायाद्वापूर्वस्यासम्भवित्वात्कल्पनानुपपत्तिमुक्त्वा इदानीं श्रुतसा-
ध्यसाधनसम्बन्धानुपपादकत्वादपि कल्पनानुपपत्तिमाह * कल्पि-
तमिति * यागादेर्हि व्यापारात्मकत्वात् जन्मनैव कार्यारम्भकत्वं यु-
क्तम् अपूर्वस्य त्वव्यापारात्मकत्वान्निर्व्यापारस्य कार्यारम्भकत्वानुप-
पत्तेः । श्रुतसाध्यसाधनसम्बन्धानुपपादकत्वाद्व्यर्था कल्पनेत्याशयः ।

स्वर्गनरकोपभोगाय देशान्तरे शरीरस्य प्राप्तिर्लाभोत्पत्त्यपरपर्यायापेक्षिता य चादिशब्दात्पुत्रादेः प्राप्तिरपेक्षिता तत्साधनेनापूर्वं समर्थमित्यर्थः। स्थाय्याश्रयाभावेन चापूर्वस्य स्थायित्वायोगाच्छ्रुतसाध्यसाधनसम्बन्धोपपादकत्वं नास्तीत्याह *न चेति * प्रक्षेपान्तस्य यागस्यापूर्वारम्भकत्वेनेष्टत्वात्प्रक्षेपस्य च द्रव्यदानाश्रितत्वाद् द्रव्यदानव्यतिरिक्ते यजमाने ऽपूर्वारम्भकत्वानुपपत्तेर्द्रव्यदानस्य च विनष्टत्वान्नापूर्वाश्रयः स्थायी सम्भवतीत्याशयः । वार्त्तिककृन्मते यागस्य पुरोडाशसाध्यत्वे ऽपि सङ्कल्पात्मकत्वेनात्माश्रितत्वाद् द्रव्यदानप्रक्षेपादीनां हि सर्वेषामिति सिद्धान्तवार्त्तिकदर्शनाच्च पुरोडाशादादीयमानत्वात्पुरोडाशादिशब्देन द्रव्यदानमेवोक्तम्।अङ्गापूर्वाणामप्येवं न स्थाय्याश्रयः सम्भवतीत्यतिदिशति * एवमिति * अङ्गापूर्वं च प्रधानापूर्वेण सम्बद्धं न वा असम्बद्धत्वे तावन्नोपकारित्वं सम्भवतीत्याह *किं चेति * आराच्छब्देन क्रियासाधनासमवायो ऽभिप्रेतः प्रधानाश्रयात्माश्रितत्वात्प्रधानाश्रयत्वे त्वारादुपकारित्वं विरुध्येतेत्याशयः । श्लोकार्थमुपपादयति * न हीति * सम्बन्धस्तु संयोगाद्यभावादाश्रयाश्रयिभावो वाच्यः अङ्गानां च प्रधानापूर्वसम्बन्धाभावेन तत्समवेतापूर्वोत्पादकत्वायोगात्पारिशेष्यात्पतनप्रबन्धलक्षण एवाश्रयाश्रयिभावः परिशिष्यते। न चामूर्त्तस्य पतनप्रतिबन्धकतास्तीत्याह *न चेति * नन्वारादुपकार्यङ्गानां प्रधानापूर्वसम्बन्धाभावेन तत्समवेतापूर्वोत्पादकतायोगे ऽपि सन्निपत्त्योपकार्यङ्गानां प्रधानापूर्वसाधनाश्रयत्वेन तत्सम्बन्धसद्भावात्तत्समवेतापूर्वोत्पादकत्वं भविष्यतीत्याशङ्क्याह * यदपि चेति * लक्षणार्थत्वेनोपशब्दस्य व्रीह्यादिद्रव्यमात्रक्षये तत्समवायिनो ऽपूर्वस्य क्षयादित्यर्थलाभः व्रीह्याश्रितस्याप्यपूर्वस्यावघातेन व्रीहिनाशे ऽन्यत्र तण्डुलादावसञ्चारान्न तद् द्वाराप्रधानापूर्वोपकारित्वं स्यादित्यर्थः । सन्निपात्यङ्गानां प्रात्यात्मिकापूर्वमात्रपर्यवसायित्वस्य वक्ष्यमाणत्वात्फलसाधनस्य प्रधानस्य साध्यं यदपूर्वं तस्येति व्यधिकरणे षष्ठ्यौ व्याख्येये । नन्वङ्गापूर्वाणां प्रधानापूर्वसमवाये ऽपि प्रधानापूर्वाश्रयात्माश्रितत्वेनैकार्थसमवायात्प्रधानापूर्वोपकारकत्वं भविष्यति फलसाधनत्वयोग्यतासाधनार्थत्वेन च क्रियासाधनांशानिवेशाभावात् सन्निपत्त्योपकारित्वानापत्तेरारादुपकारकत्वाविरोध इत्याशयेनाशङ्कते * अथ
३६५।१ त्विति *प्रधानापूर्वाणामप्यात्माश्रितत्वसूचनायापिशब्दः आत्माश्रितत्वे सत्यपूर्वस्य योग्यतालक्षणत्वात्फलभोगयोग्यत्वस्यैवात्मनापेक्षणात्पुरुषार्थतापद्येतेति दूषणमाह*एवं सतीति* विभिन्नस्यैकश्रुतित्वादि-

त्यत्र चान्योन्यसापेक्षाणामङ्गापूर्वाणामुपकारकत्वस्य वक्ष्यमाणत्वादसम्बन्धानां चान्योन्यसापेक्षैककार्यारम्भकत्वलक्षणयौगपद्यायोगान्नोपकारकत्वं सम्भवतीत्याह * अपि चेति * एकोखासंयोगादिलक्षणान्योन्यसम्बन्धसम्बद्धानामेव ग्रावादीनामेकोखाख्यैव धारणाद्य एककार्यारम्भदर्शनात् सम्बन्धं विनान्योन्यस्वापेक्षैककार्यारम्भकत्वलक्षणं यौगपद्यं न सम्भवतीत्याशयः। प्रधानापूर्वाणामप्यन्योन्यापेक्षाणामेकफलसाधनत्वलक्षणं फले यौगपद्यमेकादशाद्ये वक्ष्यमाणमन्योन्यसम्बन्धभावादेवायुक्तमित्यतिदिशति * एतेनेति * अतो ऽपूर्वस्यासम्भवित्वाद्विरोधित्वादनुपपादकत्वाच्च कल्पनानुपपत्तेस्तन्निरपेक्षाणामेव प्रधानानां पुरुषार्थसाधनत्वमङ्गानां च प्रधानोपकारसाधनत्वमित्युपसंहरति * तस्मादिति * कृतत्वमात्रशब्देन विनष्टस्य कर्मणो ऽतिक्रान्तयागस्य वा पुरुषस्य कर्मविनाशस्यैव वा फलसाधनतेति पक्षत्रयमपि संगृहीतं, किं चापूर्वं यागादिभिरुत्पाद्यते ऽभिव्यज्यते च नोभयथापि सम्भवतीत्याह * न चेति * उत्पत्त्यसम्भवे तावत्प्रश्नपूर्वकं विकल्प्य हेतुमाह * कुत इति * अङ्गकर्मजन्यस्योपकारापूर्वस्य प्रधानकर्मजन्यस्य च फलापूर्वस्यानवयवत्वात्क्रमशो ऽपि तज्जन्मसम्भवित्वं न प्रतीयतइत्यर्थः। एतदेवोपसंहरति * एवं तावदिति * ननु यथा स्फोटवादिभिर्निरवयवस्यापि स्फोटस्य क्रमवर्त्तिभिर्नादैरस्फुटस्फुटस्फुटतरत्वेनाभिव्यक्तिरिष्यते तथापूर्वस्य निरवयवस्याप्याग्नेयादिभिः क्रमप्रवर्त्तिभिरस्फुटस्फुटस्फुटतरत्वेनाभिव्यक्तिर्भविष्यतीति द्वितीयकल्पमाशङ्क्य दूषयति * न चेति * एतदेव प्रश्नपूर्वमुपपादयति * कथमिति * प्रत्यक्षग्राह्यस्यैवार्थस्य लोके ऽभिव्यक्त्यपेक्षादर्शनात्तस्याश्चेन्द्रियविषयद्वयान्यतमसंस्कारद्वारदर्शनादप्रत्यक्षत्वाच्चापूर्वे तदनुपपत्तेर्नाभिव्यक्तिः सम्भवतीत्याशयः। ननु कुलालादिव्यापारैरेतत्विलक्षणाप्यभिव्यक्तिः घटादेः सांख्यैरिष्टेत्याशङ्क्य नो लौकिकानां * दर्शनइत्युक्तम् * श्लोकं व्याचष्टे * सर्वेति * अपूर्वापेक्षयान्तरशब्दः घटादेश्चालोकानन्तरमुपलम्भात् प्रत्यभिज्ञया च प्राक् सत्त्वावसायात्तदभिव्यङ्ग्तेष्यते ऽपूर्वस्य तु यागाद्यनन्तरमप्यनुपलम्भात्प्राक् सत्त्वे च प्रमाणासत्त्वान्न द्वयमप्यभिव्यङ्ग्यत्वकारणमस्तीत्याह * यदि चेति * अपरेषां निपुणं मन्यानां मतमुपन्यस्तमुपसंहरति * इतीति * असम्भाव्यमानत्वाद्विरोधित्वादनुपपादकत्वादुत्पत्त्यभिव्यक्त्योश्चाभावादिति सर्वथाशब्देनोक्तं न केवलमपूर्वासम्भवादस्य सूत्रस्यापूर्वसद्भावप्रतिपादनार्थत्वं ते नेच्छन्ति किं त्ववा-

ष्चकत्वादपीत्याह * न चेति * भाष्यकृद्व्याख्यादूषणमुपसंहरति
* इतीति * प्राभाकरवत्कार्यनियोगापरपर्यायस्वतन्त्रापूर्वाभ्युप-
गमे परोक्ता दोषाः स्युर्नास्मदभिमतशक्तिरूपाभ्युपगम इति भाष्यकृ-
द्व्याख्यानमभिधातुमुपक्रमते * अत्रेति * विग्रहवदिवेति शरीरग-
तं स्वातन्त्र्येण कार्यारम्भकत्वमुपमावेनोपलक्षितम् । अङ्गकर्मभ्यः प्राक्
फलोत्पादनायोग्यस्य प्रधानकर्मणः फलोत्पादनयोग्यता प्रधानकर्म-
भ्यः प्राक् फलोपभोक्तृत्वायोग्यस्य पुरुषस्य फलभोक्तृत्वयोग्यतेत्य-
र्थः । कर्मजन्यत्वं वक्तुं कर्मभ्यः परेत्युक्तं लौकिकर्मजन्याया यो-
ग्यताया अपूर्वत्वनिवृत्त्यर्थम् * शास्त्रेत्युक्तम् * श्लोकं व्याचष्टे
* प्रधानेति * सदुपलम्भकप्रमाणाभावेनापूर्वस्यासत्त्वं यदुक्तं त-
३६६।५ दनुभाषणपूर्वकं निरस्यति * यत्त्विति * सर्वप्रमाणाभावे सत्य-
भावः स्यान्न कतिपयप्रमाणाभावमात्रेणेत्याशयः । न तु प्रत्यक्षाद्य-
प्रवृत्तौ शशशृङ्गवदभावनिश्चयात्तद्विरोधेन श्रुतार्थापत्तेरप्यप्रवृत्त्यु-
पपत्तेः कथमन्याप्रवृत्तिरदोष इति स्वयमेवाशङ्क्याह * किमिति *
प्रमाणान्तरायोग्यत्वादप्रवृत्त्या नाभावनिश्चय इत्याशयः । नन्वेवं
सत्यपूर्वस्यानागमिकत्वात्तद्द्वारस्य श्रेयः साधनत्वस्यागमिकत्वं न
स्यादित्याशङ्क्याह *शब्देति * श्रुतशब्दैकदेशभूतशब्दकल्पकत्वेन श-
ब्दैकदेशभावाच्छ्रुतार्थापत्तिरप्यागम एवेत्यर्थः । विवक्षितविशिष्ट-
वाक्यार्थप्रतिपादनाशक्तेः श्रुतशब्दमात्रस्यापरिपूर्णत्वसूचनार्थः स्वा-
र्थशब्दः । शब्दैकदेशत्वमेवोपपादयितुमुपक्रमते * येनेति * ननु
विनष्टाविनष्टकारणसाधारणी शक्तिः कार्यकारणनियमासिद्ध्यर्थं
कल्प्यमानापि क्रियाजन्यत्वाभावान्नापूर्वशब्दाभिधेयेत्याशङ्क्याह
* नियोगतश्चेति * शक्तिकल्पनावश्यकत्वं वक्तुमेतदुक्तं वस्तुत-
स्त्वत्र कर्मफलसम्बन्धचोदनायामतीतातानामेव कर्मणां जन्यांश-
क्तिरेष्टव्येत्यर्थः अनन्तरफलोत्पत्तावप्यावश्यकत्वं नियोगतश्चेत्यने-
नोक्तम् । एतदेव प्रश्नपूर्वकमुपपादयति * कुत इति * श्लोकं व्या-
चष्टे * यदेव हीति * केवलस्यापि दर्शस्यानेककर्मात्मकत्वाच्छ-
३६७।२ क्तिं विना साहित्यासम्पत्तेः * तदन्त्यं वेत्युक्तम * यदा च शक्तिं
विना भूयसां यौगपद्यं न सम्भवति तदानन्तरफलोत्पत्तावपि सर्व-
कर्मान्ते फलोत्पत्तेरभ्युपगन्तव्यत्वाच्छक्त्यनङ्गीकरणे चानन्तर्यवि-
शेषेणैकस्यैव साधनत्वापत्तेः शक्तिद्वारा यौगपद्यं सर्वकर्मणां सा-
धनत्वव्यवहारायाङ्गीकार्यमित्याह * नियोगतश्चेति * सर्वमेतद्वृ-
द्धवाक्येन द्रढयति * तथा चाहेति * सर्वपदार्थानां कार्यारम्भा-
श्रयव्यवहाराङ्गतत्त्वस्य शक्तिद्वारत्वात्प्रोक्षणादिपदार्थस्वरूपे द्रव्या-

श्रितत्वादन्यदेशे विनष्टत्वाच्चान्यकाले ऽपि सञ्चारिस्थायिशक्ति-
द्वारा व्यवहारः सिद्ध्यतीत्यर्थः। नन्वविनष्टस्य कर्मणः शक्तिरलौकि-
कीत्याह * लौकिकं चापीति * कालान्तरे यस्योद्गतिरिति विग्रहः
श्लोकं व्याचष्टे * यान्यपि चेति * क्रियाजन्यकार्योत्पत्त्यनुकूलादृ-
ष्टातिशयात्मकत्वात् संस्काररूपतापूर्वस्य संस्कारशब्देन सूचिता
ननु लोके प्रमाणान्तरानुसारात्संस्कारात्मकशक्तिकल्पनं युक्तं वेदे
तु शास्त्रैकसमधिगम्यत्वात्तस्य चानुष्ठानात्प्रागेव प्रवृत्तेस्तदा च फ-
लस्य कालान्तरीयत्वानिश्चयान्नापूर्वाख्यसंस्कारात्मकशक्तिकल्पना
युक्तेत्याशङ्कां निरस्यन् श्रुतार्थापत्तिप्रमाणकत्वमपूर्वस्योपसंहरति *
तेनेति * फलस्यानेकाङ्गप्रधानसाध्यत्वात्तेषां च क्षणिकत्वेन स्वरूप-
साहित्यायोगात्फलस्यानन्तरोत्पत्तावपि साहित्यसिद्ध्यर्थं शक्तिक-
ल्पनानुष्ठानात्प्रागप्युपपन्नेत्याशयः । एवं स्वपक्षसाधनमुक्त्वा इदा-
नीं परोक्तानि दूषणानि परिहरिष्यन्नपि च यदि तावदित्यनेनोक्तं
श्रुतसाध्यसाधनसम्बन्धविरोधं तावदनुभाषणपूर्वकं परिहरति *
यत्त्विति * श्लोकं व्याचष्टे * यदि हीति ननूदकाहरणसाधनघट- ३६८।१
साधनस्यापि कुलालस्योदकाहरणसाधनत्वाप्रसिद्धेः । कथं यागो-
त्पादितया शक्त्या साधितस्य फलस्य यागः साधनमित्याशङ्कानिरा-
सार्थत्वेन द्वारशब्दं व्याख्यातुम् * सर्वेत्युक्तम् * यथा काष्ठादेर्ज्व-
लनाद्यवान्तरव्यापाररूपद्वारापेक्षत्वे ऽपि पाकादौ साधनत्वाविघा-
तस्तथासंस्कारात्मकद्वारापेक्षत्वे ऽपि साधनत्वाविघात इति सूच-
यितुं व्यापारशब्दः । नन्वपूर्वस्य व्यापारात्मकतानेनोक्ता व्यापारत्वे
ऽस्य स्थायित्वानुपपत्तेः । शक्तिसंस्कारत्वोक्तिविराधापत्तेश्च का-
र्योत्पत्त्यनुकूलो ह्यदृष्टो ऽतिशयः सिद्धरूपः शक्तिशब्दवाच्यः सामा-
न्यतः प्रसिद्धस्तद्विशेषस्त्वागन्तुकः संस्कारशब्दवाच्यः प्रसिद्धो न
व्यापारात्मकः साध्योद्देशप्रवृत्तकर्तृव्यापारव्याप्यत्वाद्व्यवहितस्या-
पि यागस्य साधनत्वाविघात इत्याशयः । अथ वेत्यनेन सर्वस्य द-
ध्यादेरवस्थान्तरापत्त्यपेक्षत्वे ऽपि साध्यत्वाविघातदर्शनात् स्वर्गादेः
शक्त्याख्यापूर्वात्मकावस्थान्तरापत्त्यपेक्षित्वे ऽपि साध्यत्वाविघाता-
भिधानार्थत्वेनोत्तरार्द्धं व्याख्यातम्। उपभोग्यानुपभोग्यावस्थे स्थूल-
सूक्ष्मशब्दाभ्यामभिप्रेते यदा च स्थाय्यपूर्वं शक्त्यात्मकत्वात्कर्मफ-
लाभ्यामनत्यन्तभिन्नं तदा फलं भवद्भावयेदनेनेत्थमिति त्रयाणामपि
भावनांशानां यौगपद्याभिधानमपि कर्मफलकालयोरविच्छेदादुपप-
न्नं भवतीति सूचयितुमाह * एतावानिति * परिहारद्वये ऽपि वृ-
द्धसम्मतिमाह *आह चेति * ज्वलनक्रियाद्वारा पक्तव्यमिति द्वार-

निर्देशोक्तिः सर्वसाधनानां द्वारापेक्षाप्रदर्शनार्थो साध्यस्यावस्थान्तरापेक्षायामुत्तरार्द्धेन दृष्टान्तो ऽभिहितः । यत्त्वपूर्वं विनापि कर्मफलयोः साध्यसाधनसम्बन्धानुपपत्तिपरिहारोपपत्तेर्नापूर्वं कदा चित्फलसाधनत्वेन सम्भाव्यतइत्युक्तं तदनुभाषणपूर्वकं निरसितुमुपक्रमते * यत्त्विति * यदि शास्त्रादेवावगम्यते किं भवतो विरुध्यत इत्यनेन विनष्टस्यापि कर्मणस्साधनत्वोपपादनेनानुपपत्तिपरिहारमुक्तम् तावत्प्रश्नपूर्वं निरस्यति * कुत इति * न सम्भावितं सामर्थ्यरूपेण स्थायित्वं यस्येति विग्रहः । श्लोकं व्याचष्टे *नूनमिति * एतदेवोपसंहरति * तस्मादिति * अवधारणाप्यपूर्वस्यानुष्ठानात्प्रागेव सिद्धा किमुत सम्भावनेत्यर्थः । यदपि यष्टुरेवात्मनो यागैः सङ्गतस्येत्यनेनातिक्रान्तयागस्य साधनत्वोपपत्तेरपूर्वस्यासम्भवित्वमुपपादितं तदपि निरस्यति * न वेति * श्लोकं व्याचष्टे * यदि हीति * अतिक्रान्तानतिक्रान्तयागयोरिति बहुव्रीहिणा अतिक्रान्तानतिक्रान्तयागपुरुषविशेष इति मध्यमपदलोपीसमासो व्याख्यातः । अविशेषमेवोपपादयति * आत्मत्वमिति * नन्वात्मत्वाविशेषे ऽपि विनष्टयागे पुरुष सं एष यज्ञायुधी यजमान इत्यादिप्रयोगदर्शनेन यजमानत्वस्य भावादकृतयागे चाभावाद्विशेषो ऽस्तीत्याशङ्क्याह * यागत्वमपीति * अयं भावः यागान्वितं वा रूपं यजमानत्वेनाभिमतं यागविषयं कर्तृत्वमात्रं वा तत्राद्ये कल्पे यागरूपस्य विनष्टानुत्पन्नत्वेनोभयत्रासरूपतया तुल्यत्वादविशेष इति स्वरूपनिष्कर्षार्थभावप्रत्ययान्तेन यागशब्देनोक्तम् । यजमानशब्दप्रयोगस्तु भूतगत्या भविष्यतीति द्वितीयं कल्पं निरस्यति *न चेति* यथा क्रियारहितस्यानुत्पन्नक्रियस्य निर्व्यापारत्वात्कर्तृत्वं नास्ति तथौदासीन्याख्यमवस्थान्तरं प्राप्तस्य विनष्टक्रियस्यापीत्यर्थः । कर्तृशक्तिस्तु सर्वदा सद्भावान्न विशेषादिकेति स्वयमेवाशङ्क्याह * कत्रिति *
३६९।१ उक्तेन च प्रकारेणातिक्रान्तानतिक्रान्तयागयोः पुरुषयोर्विशेषाभावे शुद्धस्य पुरुषस्य साधनत्वापत्तेस्तस्य चावैलक्षण्यात्फलवैलक्षण्यं न स्यादित्याह * अपि चेति * ननु विशेषान्तराभावे ऽप्यतिक्रान्तयागत्वमेव विशेषो भविष्यतीत्याशङ्क्याह * तथेति * अतिक्रमस्य विनाशस्य कार्यानुपयोगित्वेनोपलक्षणमात्रार्थत्वाद्यागान्तरातिक्रमे चोपलक्ष्ये पुरुषे विशेषाप्रतीतेः फलविशेषासिद्धिरित्याशयः। एकयागगतप्रयोगाल्पत्वबहुत्वे ऽप्येतं दोषमतिदिशति * एतेनैवेति * फलविशेषाभाक्त्वेन निरस्ता इत्यर्थः । कर्तुश्चाख्यातवाच्यत्वे सति प्रकृत्यर्थस्य यागस्य तद्विशेषणत्वप्रतीतेर्विनष्टस्य च का-